ओ३म्

# तैत्तिरीयसंहिता-पदपाठः

परिष्कर्त्तारौ-

मु॰ आ॰ वैद्यनाथशास्त्री

मा॰ नारायणशास्त्री च

प्रकाशकः—
युधिष्ठिर मीमांसक
बहालगढ़
(सोनीपत-हरयाणा)

प्राप्ति स्थान—
रामलाल कपूर ट्रस्ट
बहालगढ़-१३१०२१
(सोनीपत-हरयाणा)

प्रथमं संस्करणम्—५०० प्रतयः
वैक्रमाब्दः—२०४२
सन् १९८५
मूल्यम् १००-००

मुद्रकः—
शान्तिस्वरूप कपूर
रामलाल कपूर ट्रस्ट प्रेस
बहालगढ़ (सोनीपत)

आरम्भ के ८ पृष्ठ और अन्त के ४ पृष्ठ सूचीपत्र के रामलाल कपूर ट्रस्ट प्रेस बहालगढ़ में छपे।
शेष पुस्तक (पृष्ठ १ से ६५१+५ पृष्ठ) कमाल प्रिंटिंग प्रेस, नई सड़क, देहली में आफसेट से छपी।

# स म र्प ण म्

वैदिकवाङ्मयपारदृश्वनां श्रौतकर्मसु परमकुशलानां



वेदमूर्तीनां श्रीमतां अ० सी० विश्वनाथश्रौतिमहाभागानां

करकमलयोः

त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये

इति न्यायेन सादरं समर्पयति

युधिष्ठिरो मीमांसकः

# नम ऋषिभ्यः

विदितमेव विपश्चितां यत्सर्वजनोपकारं भारतभूमिमात्रलभ्यं वेदाख्यं पीयूषम्। स च वेदराशिऋगादिभेदेन चतुर्धा श्रूयमाणोऽप्यवान्तरभेदेन शाखासंज्ञितेन बहुधा भिन्नः। तासु शाखासु तैत्तिरीय-संहिताऽभिधेया कृष्णयजुर्वेदस्यांशभूता। अस्याः शाखाया अध्येतारो भारतावनौ दक्षिणापथे दरीदृश्यन्ते। मतत्रयभाष्यकर्त्तारः श्रीमध्वाचार्य-रामानुजाचार्य-शंकराचार्यादयश्चेमामेव शाखामधीतवन्त इति ज्ञायते तथा ऽऽध्वर्यवसूत्रप्रणेतार आपस्तम्ब-बोधायन-भरद्वाज-वैखानस-सत्याषाढाभिधाः। यजुःषु प्रधानभूतस्याध्वर्यव-विभागस्य भूयांसः सूत्रकारा इमामेव शाखां तैत्तिरीयाभिधामवलम्ब्याध्वर्यवसूत्राणि रचयाम्बभूवुः। अतोऽस्याः शाखाया अत्यावश्यकता दरीदृश्यते वैदिकानाम्। अस्य संहिताग्रन्थस्य पदपाठो विशिष्टलक्षणो व्याकरणशास्त्रविलक्षणः। यथा—तै॰सं॰ कां॰ २, प्र॰ ३, अ॰ १४—'ब्रह्म ब्रह्मण उज्जभार' इति मन्त्रे 'मध्यान्नीचादुच्चास्वधया' इति पदचतुष्टयस्यैवं पदपाठः—'मध्यात्। नीचा। उच्चा। स्वधयेतिस्व-धया' इति। अत्र संहितायां 'नीचादुच्चा' इत्यत्र श्रूयमाणो दकारो पदकाले लुप्यते। अतस्तैत्तिरीयप्रातिशाख्ये पञ्चमाध्यायेऽष्टमं सूत्रम्—'नीचापूर्वो दकार उच्चापरः' इति। अस्य व्याख्या—'नीचापदे पूर्वे दकार आगमो भवति उच्चापदे परतः' इति। एवंरूपा परम्परैकवेद्या बहवो विषयाः सन्ति। अतोऽस्य पाठस्य परम्परारक्षणार्थं पदग्रन्थोऽवश्यं मुद्रापयितव्य इति सुप्रसिद्धः।

अथ वहोः कालात् प्रागयं पदपाठः कुम्भघोणक्षेत्रे द्वयोर्भागयोर्मुद्रितो बभूव। कालातिक्रमेण ग्रन्थोऽयं दुष्प्राप्योऽभूत्। वैदिका ग्रन्थमिममधिकृत्य चातकायमानाः सन्तीत्यवगत्य मम मित्रवरेण्याः पण्डितराजाः श्रीयुधिष्ठिरमीमांसका मां तैत्तिरीयसंहिताध्यायिनं ज्ञात्वाऽस्य पदग्रन्थस्य पुनर्मुद्रणाय ग्रन्थमेकमयाचयन्। मया स्वकीयो ग्रन्थस्तान् प्रति प्रेषितः। मामकीनस्य ग्रन्थस्यातिजीर्णत्वाद् असम्पूर्णत्वाच्च तस्मात् प्रतिकृतिमुद्रणस्याशक्यत्वाद् एतस्य पुनर्मुद्रणं वत्सरद्वयं यावत् स्थगितम्। दिष्टचा गतमाघमासे (शाके १९०६) मया कर्णाटकदेशपर्यटनं कृतम्। तत्र शिमोगानगरे पूज्या मान्या वैदिकेन्द्राः सात्त्विका गुणग्राहिणः श्रीकेशवमूर्तिघनपाठिनो मम चिरपरिचिता मिलिताः। मयाऽभ्यर्थितमात्रे तैः स्वकीयस्तैत्तिरीयसंहितापदपाठग्रन्थो भागद्वयात्मको मुद्रणार्थं प्रदत्तः। अतोऽत्र विषये नमस्कारपूर्वकं तेभ्यः स्वोयां कृतज्ञतामावेदयामि।

श्रीरामलालकपूरट्रस्टस्याधिकारिणः साक्षाद् वेदरूपाः पूज्याः श्रीयुधिष्ठिरमीमांसका एतद्ग्रन्थमुद्रणविषये प्रामाणिका इति सप्रश्रयं निवेदयामि। ये पुनरेतच्छाखाध्यायिनस्त एतेषां यावज्जीवमधमर्णा एवेति सुदृढं वच्मि। एतादृशं कार्यं पीठाधीश्वराणां प्रथमं कर्तव्यम्, परं तेषामत्र विषये प्रायेणौदासीन्यमेव दरीदृश्यते। अत एतैर्वैदिकग्रन्थप्रकाशने बद्धकङ्कणैरयं पदपाठः पुनर्मुद्रित इति परं मोदास्पदम्।

शाके १९०७, चै॰ कृ॰ ४
९-४-१९८५

अ॰ सी॰ विश्वनाथ-श्रौती
नेल्लूर (आन्ध्रप्रदेश)

राजस्थानीय-'अजयमेरु' (अजमेर) मण्डलान्तर्गत-विरञ्च्यावासा (विरकच्यावासा)-
ऽभिजनेन सारस्वतकुलावतंसस्य तत्रभवतः श्रीसूर्यरामस्य प्रपौत्रेण
श्रीरघुनाथस्य पौत्रेण श्रीयमुनादेवी-गौरीलालाचार्ययोः पुत्रेण
पूर्वोत्तरमीमांसापारदृश्वनां महामहोपाध्यायाद्यनेकविरुद्भाजां
श्रीचिन्नस्वामिशास्त्र्यपरनाम्नां वेङ्कटसुब्रह्मण्यशास्त्रिणां
महावैयाकरणानां श्रीपण्डितब्रह्मदत्तजिज्ञासूनाम्
अन्येषां च विविधशास्त्रनिष्णातानां विदुषाम्
अन्तेवासिना भारद्वाजगोत्रेण त्रिप्रवरेण
वाजसनेयचरणेन माध्यन्दिनिना
युधिष्ठिर-मीमांसकेन
तैत्तिरीयशाखाध्येतॄणां श्रोत्रियाणाम् उपयोगायाऽयं
तैत्तिरीयसंहिता-पदपाठः
प्रकाशितः
शुभं भवतु पाठकानाम्

---

# उपोद्घातः

मान्या वेदविद्याविचक्षणा वैदिकवाङ्मये च कृतभूरिपरिश्रमाः श्रोत्रियमहाभागाः ! विदितमेव तत्र भवद्भिः यच्चतुर्षु वेदेष्वन्यतमो यजुर्वेदः शुक्ल-कृष्णेति[1] विभागद्वये विभक्त उपलभ्यते। तत्र शुक्लयजुष उत्तरभारते पठनपाठनं दरीदृश्यते, कृष्णयजुषस्तु दक्षिणापथे।

शुक्लयजुषो वाजसनेयचरणस्य पञ्चदशशाखासु सम्प्रति काण्व-माध्यन्दिननाम्नी द्वे एव शाखे उपलभ्येते। तत्रापि माध्यन्दिनशाखायाः प्राधान्यं वर्तते। काण्वशाखाध्यायिनस्तु विरला महाराष्ट्रे दक्षिणापथे च दृश्यन्ते। अत एव माध्यन्दिनीयानामेव शाखा-ब्राह्मण-आरण्यकादिरूपं वाङ्मयं प्रायेण मुद्रितं समुपलभ्यते। काण्वशाखायास्तु ब्राह्मणमपि कृत्स्नमद्ययावन्न नागराक्षरेषु मुद्रितम्, अपरेषां ग्रन्थानां तु का कथा।

कृष्णयजुषः पुरा षडशीतिभेदा आसन्। तेषु सम्प्रति तैत्तिरीय-मैत्रायणी-काठक-कठकपिष्ठलनाम्न्यश्चतस्र एव संहिता उपलभ्यन्ते। तत्रापि कठकपिष्ठलाख्या संहिता त्वेकमात्रं मध्ये मध्ये खण्डितं हस्तलेखमाश्रित्यैव पण्डितसूर्यकान्तमहाभागेन यथाकथंचित् सम्पाद्य प्राकाश्यं नीता। अपरयोः काठकमैत्रायणीशाखयोः संहिताग्रन्थ एवोलभ्यते (मैत्रायणीयानामारण्यकमपि मुद्रितं लभ्यते)। तैत्तिरीयसंहिता तु सब्राह्मणा सरहस्या (=सारण्यका) साङ्गा समुपलभ्यते।

**तैत्तिरीयेति चरणनाम**—वस्तुतः कठमैत्रायणवत् तैत्तिरीयेति चरणस्याख्या। सर्वाण्यपि प्रातिशाख्यानि तत्तच्चरणान्तर्गतानां सर्वशाखानां सन्ति। तदुक्तं भगवता यास्केन—पदप्रकृतीनि सर्वचरणानां पार्षदानि (निरुक्त १।१८)। यथा कात्यायनीयं वाजसनेयिप्रातिशाख्यं वाजसनेयचरणान्तर्गतानां पञ्चदशशाखानाम्, यथा वा शौनकीयं शाकलचरणान्तर्गतानां शैशिरीयादीनां शाखानाम्। इत्थमेव तैत्तिरीयप्रातिशाख्येनापि भाव्यम्। पुरा तैत्तिरीयचरणस्यासन् बह्व्यः शाखाः। यासामापस्तम्बबौधायनहिरण्यकेशीयादिनामभिरुपलभ्यमानानि कल्पसूत्राणि समुपलभ्यन्ते। नैतावदेव, विभिन्नेषु हस्तलेखग्रन्थागारेष्वस्माभिर्दृष्टास्तादृशा हस्तलेखा येषामन्ते 'तैत्तिरीयसंहिता' स्थाने 'आपस्तम्बसंहिता' इति लिखितं समुपलभ्यते। मन्ये तैत्तिरीयचरणस्यान्यासां शाखानां विलोपे सत्यवशिष्टा सम्प्रत्युपलभ्यमाना काचिच्छाखैव तैत्तिरीयेति चरणनाम्ना प्रसिद्धिं गता। यथाऽद्यत्वे माध्यन्दिनीसंहिता वाजसनेयिसंहितात्वेन निर्दिश्यते।

सांप्रतिका विपश्चित आपस्तम्बबौधायनहिरण्यकेशीयादिकल्पसूत्रैः सम्बद्धा न काश्चन संहिता आसन् इति संगिरन्ते, परन्त्वेतन्मतं नेतिहासदृष्ट्या प्रमाणार्हम्। यतो ह्यन्यवेदस्य कस्याश्चिदेकस्याः शाखाया एकाधिकाः सूत्रग्रन्था न दृश्यन्ते। एतद् विपरीतमिदं तु दृश्यते यत् स्वशाखीयानां ब्राह्मणसूत्रादिग्रन्थानामुत्सादेऽन्यशाखासम्बद्धान् ब्राह्मणसूत्रादिग्रन्थान् आश्रयन्ति। यथा शाकलकीयैरैतरेय-

---

१. यजुर्वेदस्य शुक्लकृष्णेति नाम्ना विभागे किं कारणमित्यस्माभिः 'यजुषां शौक्ल्यकार्ष्ण्यविवेकः' इति नाम्नि निबन्धे विस्तरेणोपपादितमिति कृत्वा नेह प्रपञ्च्यते। द्र०—वैदिक-सिद्धान्त-मीमांसा, पृष्ठ २३१-२३६।

संहिताया ब्राह्मणम्[1] ग्राश्वलायनशाखायाः श्रौतसूत्रं च नष्टाश्वदग्धरथन्यायेन[2] कार्यनिर्वाहाया ऽऽश्रीयते।

**तैत्तिरीयसंहिताया द्वौ पाठौ**—येयं कृष्णयजुषः तैत्तिरीयनाम्ना प्रसिद्धा संहिता सम्प्रति समुपलभ्यते, तस्या देशभेदेन द्वौ पाठौ स्तः। तत्रैको महाराष्ट्रियः पाठोऽपरो दाक्षिणात्यः। यद्यप्यनयोः पाठयोर्नास्ति महान् भेदस्तथापि यः स्वल्पोऽपि भेदो दरीदृश्यते स तत्र तत्र विशिष्टेषु स्थानेषु व्यवस्थितरूपेण वर्तते। व्यवस्थितः पाठभेदः सर्वत्र वैदिकवाङ्मयेऽवान्तरभेदस्य ज्ञापक इति वैदिकानां राद्धान्तः। एवमेवाऽस्यां शाखायामपि महाराष्ट्रियदाक्षिणात्यपाठयोर्यो व्यवस्थितः पाठभेदः सोऽप्यनयोरवान्तरशाखाभेदस्यैव ज्ञापकः।

**पाठभेदस्य द्वैविध्यम्**—देशभेदेन योऽस्यां शाखायां पाठभेद उपलभ्यते, स द्विविधः। तत्रैको वर्णभेदरूपः, अपरः स्वराङ्कनभेदरूपश्चास्ति।

**वर्णभेदरूपः पाठभेदः**—यत्र यत्र श-ष-स-वर्णेभ्योऽव्यवहितपूर्वो वर्गीयः कश्चित् प्रथमो वर्णो भवति, तत्र महाराष्ट्रिये पाठे प्रथमो वर्ण एव पठ्यते, परन्तु दाक्षिणात्यपाठे तादृशेषु स्थलेषु तत्तद्वर्गीयो द्वितीयो वर्णः प्रयुज्यते। यथा—

| तै० सं० | महाराष्ट्रियः पाठः | दाक्षिणात्यः पाठः |
|---|---|---|
| १।१।१ | अयक्ष्माः (क्ष्माः) | अयख्ष्माः |
| १।२।२ | ऋक्सामयोः | ऋख्सामयोः |
| ६।६।१९ | यत्षोडशी | यथ्षोडशी |
| ५।५।७ | संवत्सरेण | संवथ्सरेण |
| १।१।९ | विरप्शिन् | विरफ्शिन् |
| ३।४।७ | अप्सरसः | अफ्सरसः |

शषसव्यञ्जनेषु परतो वर्गीयप्रथमाक्षरस्य द्वितीयवर्णव्यापत्तिस्तैत्तिरीयप्रातिशाख्ये (१४।११-१६) विहिता समुपलभ्यते। पाणिनीये तन्त्रेऽपि **चयो द्वितीयाः पौष्करसादेः** (महा० ८।४।४८) इति वार्त्तिकेन निर्दिष्टा वर्तते।

**स्वराङ्कनभेदः**—उदात्तानुदात्तस्वरिताख्याः स्वरा ग्रचामुच्चारणधर्मा इति शिक्षाख्ये वेदाङ्गे व्याकरणशास्त्रे चोक्ताः। तत्रोदात्तस्य किमपि चिह्नं न प्रयुज्यते, अनुदात्तस्वरितयोरेवाङ्कनं क्रियते। महाराष्ट्रिये पाठेऽनुदात्तस्वरितयोरङ्कनं साच्केष्वेव वर्णेषु क्रियते, परन्तु दाक्षिणात्यपाठे यत्र यत्र

---

१. ब्राह्मणकल्पसूत्रकाराणामयं समयो यस्ते स्वशाखीयं मन्त्रं प्रतीकेन निर्दिशन्ति, अन्यशाखीयं मन्त्रं च कृत्स्नपाठेन। ऐतरेयब्राह्मणे सन्ति सप्तचत्वारिंशद् एवम्भूता मन्त्राः ये शाकलाम्नाये समाम्नायन्ते, तथापि ऐतरेयब्राह्मणे ते सकलपाठेन पठ्यन्ते। अनेनैतरेयब्राह्मणस्य शाकलाम्नायेन सह न कश्चित् सम्बन्ध इति सुतरां व्यक्तम्।

२. नष्टाश्वदग्धरथन्यायः—'तवाश्वो नष्टो ममापि रथो दग्ध उभौ संप्रयुज्यावहै' (महाभाष्य १।१।५०) एवमत्रापि कालक्रमेण कस्यचिद् ब्राह्मणग्रन्थस्य सूत्रग्रन्थस्य च संहिता नष्टा, अपरस्याः संहिताया ब्राह्मणं सूत्रं च नष्टम्। सत्येवं श्रौतकर्मनिर्वाहाय ग्रवशिष्टानां ग्रन्थानां परस्परं सम्बन्ध ग्राश्रितः।

स्वरितानुदात्ताभ्यां परं व्यञ्जनमात्रं (हलन्तं व्यञ्जनं) भवति तत्रापि क्वचित् व्यञ्जनस्याधस्तादनुदात्तस्य, उपरि च स्वरितस्य चिह्नमङ्क्यते । यथा[1]—

| तै० सं० | महाराष्ट्रिय: पाठ: | दाक्षिणात्य: पाठ: |
| --- | --- | --- |
| १।२।११ | अꣳशुरꣳशुस्ते | अꣳशुरꣳशुस्ते |
| १।२।२२ | सिꣳहीरसि | सिꣳहीरसि |
| ९।७।१० अन्ते | रयिꣳसवितारꣳषट्त्रिꣳशच्च | रयिꣳसवितारꣳषट्त्रिꣳशच्च |
| १।७।७ | अपाम् । नपात् | अपाम् । नपात् |
| १।८।१ | निर्ऋत इति० | निर्ऋत इति० |

इत्थमेव यदा मन्त्रे पदपाठे चावसाने नकार: श्रूयते, तत्र दाक्षिणात्यपाठे नकारस्य द्वित्वं दृश्यते । यथा—

| | | |
| --- | --- | --- |
| १।७।११ | अजयन् | अजयन्न् |

माध्यन्दिनसंहितायां त्वन्त्यस्य मकारस्यापि द्वित्वमुच्चार्यते । पाणिनीये व्याकरणे तु **'अवसाने च'** (महा० ८।४।४७) इत्यनेन वार्त्तिकेन सामान्येनावसाने वर्तमानानां व्यञ्जनानां द्वित्वमुच्यते । तत्र यथाशाखं व्यवस्था द्रष्टव्या ।

**दाक्षिणात्य-स्वराङ्कनस्य समाधानम्**—उदात्तादिभि: स्वरधर्मैर्युक्तेभ्योऽज्भ्य: पूर्वं श्रूयमाणं व्यञ्जनं यथा तदुत्तरस्वरधर्मेण रज्यते तथैव तत: परं श्रूयमाणं व्यञ्जनमपि घण्टानिर्ह्रादवत् तत्तत्स्वरधर्मेणानुरज्यते । तस्य स्वाभाविकत्वं मत्वा महाराष्ट्रिये पाठे तादृशे व्यञ्जने स्वराङ्कन न विधीयते; दाक्षिणात्यपाठे तूत्तरवर्त्तिनो व्यञ्जनस्यानुरक्तत्वद्योतनाय तत्र स्वराङ्कनं विधीयते ।

तैत्तिरीयसंहिताया: पाठस्य यद् द्वैविध्यं पुरस्तान्निर्दिष्टं तत्तस्य ब्राह्मणे आरण्यके चापि दृश्यते । संहिताब्राह्मणग्रन्थौ तूभयपाठे प्रायेण समानावेव किन्त्वारण्यकग्रन्थस्तूभयो: पाठयोर्भिन्न एवोपलभ्यते ।

**वैदिकपदपाठानां तुलनात्मकमध्ययननम्**—यावन्तोऽपि पदपाठा: समुपलभ्यन्ते तेषां पारस्परिकं तुलनात्मकमध्ययनमस्माभि: स्वसम्पादितस्य प्रकाशितस्य च **माध्यन्दिनपदपाठस्यादौ** प्रस्तुतम् ।

**संहितापाठस्य मुद्रणम्**—महाराष्ट्रियपाठानुसारी संहिताग्रन्थस्तु बहुत्र मुद्रित इति कृत्वा सुलभ आसीत्, परन्तु दाक्षिणात्यपाठस्य संहिताग्रन्थो नागराक्षरेषु मुद्रितो मया न दृष्ट: (मैसूरनगरत: प्रकाशिते भट्टभास्करभाष्ये मुद्रित उपलभ्यते, परन्तु तत्रापि दाक्षिणात्यपाठमुद्रणे बहुत्र स्खलनानि सन्ति) । अतो बहो: कालाद् दाक्षिणात्यपाठानुसारं तैत्तिरीयीसंहितायास्तत्पदपाठस्य च मुद्रणं विधेयमित्यासीन्ममेच्छा । तदर्थं दाक्षिणात्यपाठानुसारं संहिताया: संशोधनमपि मया तच्छाखाध्येतॄणां सकाशात् कारितम्, परन्तु हलन्तवर्णेन सहानुदात्तस्वरचिह्नस्य मुद्रणायानेकेषां तादृशां (यत्र हलन्तस्यानुदात्तस्यो-

---

१. अग्रे निर्दिश्यमानान्युदाहरणानि तैत्तिरीयसंहितातस्तत्पदपाठतश्च संङ्गृहीतानि ।

भयोश्चिह्नयोः संयोजना सुकरा स्यात्) सीसाक्षराणामनुपलम्भात् कार्यमेतत् कर्तुं नाहमशक्नवम्। एतस्मिन्नेवान्तराले महाराष्ट्रियपाठस्य मुद्रितः संहिताग्रन्थोऽपि दुर्लभः समजायत। तेनैतस्याः शाखाया अध्येतारः कष्टे निपतिताः। दुर्लभानां वैदिकग्रन्थानां मुद्रणे मम समीहां जानानैरनेकैश्श्रोत्रियैरहमस्याः पुनर्मुद्रणाय प्रचोदितः। तेषाम् अनुरोधमुररीकृत्य श्रीवेदमूर्तिश्रीपाददामोदरसातवलेकरमहाभागैः प्रकाशितायाः तैत्तिरीयसंहितायाः प्रतिकृतिरूपेणानुमुद्रणं मया २०३९ तमे वैक्रमाब्दे विहितम्। छात्रेभ्यश्चातिस्वल्पमूल्येन प्रादायि प्रदीयते च।

**पदपाठस्य मुद्रणम्**—यद्यप्यस्याः संहितायाः पदपाठस्योभावपि पाठौ सायणभट्टभास्करभाष्याभ्यां सह पूनामैसूरनगरतः प्रकाशितौ, तथापि केवलस्य पदपाठस्य दाक्षिणात्यपाठ एव पुरा १९१४-१५ तमयोः खृस्ताब्दयोर्द्वयोर्भागयोः कुम्भघोणनगरात् प्रकाशितोऽभूत्। स चापि बहुभ्यो वर्षेभ्यो दुर्लभतां गतः। अत एतस्य प्राप्त्यर्थं महति प्रयत्ने कृतेऽपि रामलालकपूरनिक्षेपसंस्थायाः (ट्रस्टस्य) बृहत्तमे पुस्तकालयेऽपि संग्रहीतुं वयमक्षमा अभूम। दाक्षिणात्यपाठानुसारिणः पदपाठस्य पुनर्मुद्रणाय द्वित्रिवर्षेभ्यः प्राङ् मया तत्र भवन्तो नेल्लूरवास्तव्याः श्रीवेदमूर्तिविश्वनाथश्रौतिमहाशयाः तत्पुस्तकप्रदानाय संप्रार्थिताः। एतैर्महानुभावैर्मदीयां प्रार्थनामुररीकृत्य स्वकीयं कुम्भघोणमुद्रितं पदपाठपुस्तकं मह्यं प्रेषितम्। तस्यातिजीर्णत्वात् तत्साहाय्येन मुद्रणमशक्यमभूत्। गतवत्सरस्य कार्त्तिकमासे यदा श्रीमन्तः श्रौतिमहाभागा अस्मत्स्थानं परया कृपया स्वोपस्थित्याऽलंकृतवन्तस्तदा मया कुम्भघोणप्रकाशितस्य पदपाठस्य मुद्रणायापरस्य कस्यचित् समग्रस्य ग्रन्थस्योपलब्ध्यै निवेदितम्। तैश्च विगते फाल्गुनमासे समग्रस्य पदग्रन्थस्य भागद्वयात्मिकैका प्रतिः शिमोगानिवासिनां घनान्तपाठिनां वेदमूर्तीनां श्रीकेशवमूर्तिमहाभागानां सकाशादुपलभ्य तेषां स्थानादेव प्रकाशनाय मह्यं प्रेषिता।

यद्यप्यस्य तैत्तिरीयसंहितायाः पदपाठस्य पाठशोधने यथावन्मुद्रणे च मु० अ० वैद्यनाथशास्त्रिणा मा० नारायणशास्त्रिणा च सुबहु प्रयतितम्, तथापि मुद्रणं न साधु सम्पन्नम्। तत्र केषुचित् पृष्ठेषु मुद्रणमतिगूढमभूत्, केषुचित् सामान्यम्, बहुत्र चात्यन्तमेवास्पष्टमजायत। एतादृशस्य मुद्रितपुस्तकस्य साहाय्येन प्रतिकृतिमुद्रणमशक्यमासीत्। तत्र येषु पृष्ठेषु श्रीकेशवमूर्तीनां पुस्तके मुद्रणमस्पष्टमासीत् तानि पृष्ठानि श्रीश्रौतिमहाभागानां पुस्तकाद् गृहीत्वा यथाकथंचिन्मुद्रणमिदं व्यधायि। यद्यपि पूर्वमुद्रणस्य मुद्रणदृष्ट्या सदोषत्वादस्य मनोहारि मुद्रणं कर्तुमहं नापारयम्, तथाप्यनेन प्रयत्नेनैतच्छाखाध्येतॄणां श्रोत्रियाणां छात्राणां च कश्चिद् उपकारो भविष्यतीत्येव मदीयं सन्तोषस्थानम्।

अस्य ग्रन्थस्य केवलं ५०० पञ्च शतान्येव प्रतयो मुद्रापितानि। उत्तरोत्तरं च प्रवर्ध्यमाने महार्घे काले सार्धद्विविंशतिसहस्ररूप्यकाणि एतन्मुद्रणे व्ययीजातानि। अतः प्रतिपुस्तकं कर्गल-मुद्रण-आबन्धनादिव्ययः पञ्चचत्वारिंशन्मुद्रा आयातः। पुस्तकविक्रेतृभ्यः पाठकेभ्यश्च प्रदीयमान २५ प्रतिशतं प्रतिदेयं पुस्तकस्य समाप्ति यावन्मूषकादिभिः क्रियमाणां हानिं च मनसि निधाय बृहदाकारेषु ६७० पृष्ठेषु मुद्रितस्य ग्रन्थस्य मूल्यं मुद्राणां शतं निर्धारितम्। यद्यप्येदृशानां ग्रन्थानां प्रकाशने व्ययीकृतं द्रव्यं न प्रत्यावर्तत इति बहुशोऽनुभूतं तथ्यम्, तथापि वैदिकवाङ्मयस्य प्रचारः स्यादिति स्वसमीहायायाः पूर्त्यै यथा कथंचित् प्रकाशने प्रयत्नवानस्मि।

रामलाल कपूर ट्रस्ट, बहालगढ़<br>(सोनीपत-हरयाणा) १३१०२१

श्रोत्रियाणामनुचरः—<br>युधिष्ठिरो मीमांसकः

श्रीः ॥

# तैत्तिरीयसंहितापदपाठः ॥

## हरिः ओ३म् ॥

इषे । त्वा । ऊर्जे । त्वा । वायवः । स्थ । उपायवइत्युप-आयवः । स्थ । देवः । वः । सविता । प्रेति । अर्पयतु । श्रेष्ठतमायेतिश्रेष्ठ-तमाय । कर्मणे । एति । प्यायध्वम् । अघ्नियाः । देवभागमितिदेव-भागम् । ऊर्जस्वतीः । पयस्व

शेवधिर्यः पुमर्थानां षडध्वातीतविग्रहः । राद्धान्तो निगमार्थानां मोदतां स महेश्वरः ॥
पदानां कृष्णयजुषो लक्षणानि क्वचित् क्वचित् । वैद्यनाथो विलिखति सव्याख्यानि यथामति ॥

१ अस्य च प्रणवस्य "अध्यायस्य मुखे चान्ते भूत्वा विद्वानतन्द्रितः । संरक्षणाय वेदानामोङ्कारं तूच्चरेत्सदा ॥ स्रवत्यादावनुक्ते च तस्यान्ते तु विशीर्यते । आद्यन्तप्रणवौ तस्य स्यातामङ्गानि वै ततः ॥" "वेदस्योपक्रमे विद्वानवसानेऽप्यतन्द्रितः । उच्चरेत् प्रणवं ब्रह्म रक्षायै छन्दसां स्फुटम् ॥" इत्यादिशिक्षावचनैः आदावन्ते च अवश्यमुच्चारणीयत्वं, "यजुः प्रणव उच्चस्स्यात्" "मकारान्तो यजुष्युच्चः" "उदात्तो वाल्मीकेः" इत्यादिभिः उदात्तत्वं, "प्रारंभकश्चतुर्मात्रो वेदस्थस्स्यात्तदर्द्धकः । अध्यायान्त्योऽनुवाकान्त्यः कर्माधश्च त्रिमात्रिकः ॥" इत्यादिभिः चतुर्मात्रत्वं, "सविसर्गं हरिपदं प्रणवात्पूर्वमिष्यते । हरिपदे विसर्गस्य न सन्धिः प्रणवोत्तरे" इत्यनेन हरिपदपूर्वत्वश्च निरणायि ॥

२ 'उपायवः' इति पदमिङ्ग्यम् । अत्र शिक्षा— 'प्रग्रहेङ्ग्योपसर्गान्त इति स्यादप्यसांहिते' इति । अस्यार्थः— असांहिते पदाध्ययनादौ प्रग्रहेङ्ग्योपसर्गान्ते 'ऊकारः, ओकारोऽसांहितोऽकारव्यञ्जनपरः' इत्यादिलक्षणलक्षिताः स्वराः प्रग्रहाः, विभागवन्ति पदानि इङ्ग्यानि, आ, प्र, अव, इत्यादीनि पदानि उपसर्गाः, तेषां अन्ते इति स्यात् इतिशब्दः प्रयोक्तव्य इत्यर्थः । शिक्षान्तरेऽपि— 'प्रग्रहेङ्ग्योपसर्गाणामितिशब्दः प्रयुज्यते । परस्तात्पदकालेऽयं पूर्वोच्चारण एव हि' इति ॥ पूर्वोच्चारण इत्यनेन इङ्ग्यादेः द्विरुच्चारणसम्भवे पूर्वोच्चारण एव इतिशब्दप्रयोगो विधीयते । इङ्ग्यादेः द्विरुच्चारणीयत्वादिकमुक्तं शिक्षायां— 'पुनस्त्विङ्ग्यं क्रमे चादिर्विरामस्थं द्विधेक्यतः' इति । अस्यार्थः— इङ्ग्यं विभागवत् पदं पुनः पुनरुक्तं स्यादित्यर्थः । पदाध्ययनादाविति शेषः । यथा । उपायवइत्युप-आयवः । आदिः पूर्वोक्ते प्रग्रहेङ्ग्योपसर्गान्त इति पदे आदिभूतः प्रग्रह इत्यर्थः । स च प्रग्रहः क्रमे क्रमाध्ययने चकारात् पुनरुक्तस्स्यादित्यर्थः । यथा । विष्णो इति विष्णो । विरामस्थं पदं क्रमाध्ययने द्विधा इतिशब्दमध्यं द्विरुक्तं स्यादित्यर्थः । यथा । पाहीतिपाहि । ऐक्यतः उक्तविशेषाः प्रग्रहादयः एकपदवदुच्चारणीया इत्यर्थः ॥

३ 'प्र' इति पदं उपसर्गसंज्ञं भवति । उपसर्गाश्च परिगणिताश्शिक्षायाम्— 'प्रोपावापर्यधिव्युत्सुन्यन्वपाप्यत्यभिप्रति । परानिस्सं नव दशाप्युपसर्गास्स्युरत्र हि' इति ॥ अस्यार्थः— प्र, उप, अव, आ, परि, अधि, वि, उत्, सु, नि, अनु, अप, अपि, अति, अभि, प्रति, परा, निः, सं, एते नवदश एकोनविंशतिश्शब्दाः उपसर्गाः उपसर्गसंज्ञास्स्युः। उपसर्गा एते 'प्रग्रहेङ्ग्योपसर्गान्त इति स्यादप्यसांहिते' । 'प्रग्रहेङ्ग्योपसर्गाणामितिशब्दः प्रयुज्यते । परस्तात्पदकालेऽय' मित्यादिशिक्षावचनैः, पदाध्ययने इतिशब्दान्ता भवन्ति ॥

तीः । प्रजावतीरितिप्रजा-वतीः । अनमीवाः । अयक्ष्माः । मा । वः । स्तेनः । ईशत । मा । अघशꣳस इत्यघ-शꣳसः । रुद्रस्य । हेतिः । परीति । वः । वृणक्तु । ध्रुवाः । अस्मिन्न् । गोपताविति गो-पतौ । स्यात । बह्वीः । यजमानस्य । पशून् । पाहि ॥ [१] इषेत्विचत्वारिꣳशत् ॥ ❀ ❀ ॥१॥

यज्ञस्य । घोषत् । असि । प्रत्युष्टमितिप्रति-उष्टम् । रक्षः । प्रत्युष्टाइतिप्रति-उष्टाः । अरातयः । प्रेति । इयम् । अगात् । धिषणा । बर्हिः । अच्छ । मनुना । कृता । स्वधयेतिस्व-धया । वितष्टेतिवि-तष्टा । ते । एति । वहन्ति । कवयः । पुरस्तात् । देवेभ्यः । जुष्टम् । इह । बर्हिः । आसदइत्या-सदे । देवानाम् । परिषूतमितिपरि-सूतम् । असि । वर्षवृद्धमितिवर्ष-वृद्धम् । असि । देवबर्हिरितिदेव-बर्हिः । मा । त्वा । अन्वक् । मा । तिर्यक् । पर्व । ते । राध्यासम् । आच्छेत्तेत्या-छेत्ता । ते । मा । रिषम् । देवबर्हिरितिदेव-बर्हिः । शतवल्शमितिशत-वल्शम् । वीति । रोह । सहस्रवल्शाइतिसहस्र-वल्शाः । [२] वीति । वयम् । रुहेम । पृथिव्याः । सम्पृचइतिसं-पृचः । पाहि । सुसम्भृतेतिसु-सम्भृता । त्वा । समिति । भरामि । अदित्यै । रास्ना । असि । इन्द्राण्यै । सन्नहनमितिसं-नहनम् । पूषा । ते । ग्रन्थिम् । ग्रथ्नातु । सः । ते । मा । एति । स्थात् । इन्द्रस्य । त्वा । बाहुभ्यामितिबाहु-भ्याम् । उदिति । यच्छे । बृहस्पतेः । मूर्ध्ना । हरामि । उरु । अन्तरिक्षम् । अन्विति । इहि । देवङ्गममितिदेवं-गमम् । असि ॥ [३] सहस्रवल्शा अष्टात्रिꣳशच्च ॥ ❀ ❀ ❀ ❀ ❀ ॥ २ ॥

शुन्धध्वम् । दैव्याय । कर्मणे । देवयज्यायाइतिदेव-यज्यायै । मातरिश्वनः । घर्मः । असि । द्यौः । असि । पृथिवी । असि । विश्वधायाइतिविश्व-धायाः । असि । परमेण । धाम्ना । दृꣳहस्व । मा । ह्वाः । वसूनाम् । पवित्रम् । असि । शतधारमितिशत-धारम् । वसूनाम् । पवित्रम् । असि । सहस्रधारमितिसहस्र-धारम् । हुतः । स्तोकः । हुतः । द्रप्सः । अग्नये । बृहते । नाकाय । स्वाहा । द्यावापृथिवीभ्यामितिद्यावा-पृथिवीभ्याम् । सा । विश्वायुरितिविश्व-आयुः । सा । विश्वव्यचाइतिविश्व-व्यचाः । सा । विश्वकर्मेतिविश्व-कर्मा । समिति । पृच्यध्वम् । ऋतावरीरित्यृत-वरीः । ऊर्मिणीः । मधुमत्तमाइतिमधुमत्-तमाः । मन्द्राः । धनस्य । सातये । सो

मेन । त्वा । एति । तनच्मि । इन्द्राय । दधि । विष्णो-इति । हव्यम् । रक्षस्व ॥ [४] सोमेनाष्टौच ॥ ❀ ❀ ❀ ❀ ❀ ॥ ३ ॥

कर्मणे । वाम् । देवेभ्यः । शकेयम् । वेषाय । त्वा । प्रत्युष्टमितिप्रति-उष्टम् । रक्षः । प्रत्युष्टाइतिप्रति-उष्टाः । अरातयः । धूः । असि । धूर्व । धूर्वन्तम् । धूर्व । तम् । यः । अस्मान् । धूर्वति । तम् । धूर्व । यम् । वयम् । धूर्वामः । त्वम् । देवानाम् । असि । सस्नितममितिसस्नि-तमम् । पप्रितममितिपप्रि-तमम् । जुष्टतममितिजुष्ट-तमम् । वह्नितममितिवह्नि-तमम् । देवहूतममितिदेव-हूतमम् । अह्रुतम् । असि । हविर्धानमितिहविः-धानम् । दृꣳहस्व । मा । ह्वाः । मित्रस्य । त्वा । चक्षुषा । प्रेति । ईक्षे । मा । भेः । मा । समिति । विक्थाः । मा । त्वा । [५] हिꣳसिषम् । उरु । वाताय । देवस्य । त्वा । सवितुः । प्रसवइतिप्र-सवे । अश्विनोः । बाहुभ्यामितिबाहु-भ्याम् । पूष्णः । हस्ताभ्याम् । अग्नये । जुष्टम् । निरिति । वपामि । अग्नीषोमाभ्यामित्यग्नी-सोमाभ्याम् । इदम् । देवानाम् । इदम् । उ । नः । सह । स्फात्यै । त्वा । न । अरात्यै । सुवः । अभि । वीति । ख्येषम् । वैश्वानरम् । ज्योतिः । दृꣳहन्ताम् । दुर्याः । द्यावापृथिव्योरितिद्यावा-पृथिव्योः । उरु । अन्तरिक्षम् । अन्विति । इहि । अदित्याः । त्वा । उपस्थइत्युप-स्थे । सादयामि । अग्ने । हव्यम् । रक्षस्व ॥ [६] मात्वाषट्चत्वारिꣳशच ॥ ❀ ❀ ❀ ❀ ❀ ॥ ४ ॥

देवः । वः । सविता । उदिति । पुनातु । अच्छिद्रेण । पवित्रेण । वसोः । सूर्यस्य । रश्मिभिरितिरश्मि-भिः । आपः । देवीः । अग्रेपुवइत्यग्रे-पुवः । अग्रेगुवइत्यग्रे-गुवः । अग्रे । इमम् । यज्ञम् । नयत । अग्रे । यज्ञपतिमितियज्ञ-पतिम् । धत्त । युष्मान् । इन्द्रः । अवृणीत । वृत्रतूर्यइतिवृत्र-तूर्ये । यूयम् । इन्द्रम् । अवृणीध्वम् । वृत्रतूर्यइतिवृत्र-तूर्ये । प्रोक्षिताइतिप्र-उक्षिताः । स्थ । अग्नये । वः । जुष्टम् । प्रेति । उक्षामि । अग्नीषोमाभ्यामित्यग्नी-सोमाभ्याम् । शुन्धध्वम् । दैव्याय । कर्मणे । देवयज्यायाइतिदेव-यज्यायै । अवधूतमित्यव-धूतम् । रक्षः । अवधूताइत्यव-धूताः । अ

४ 'विष्णो' इति पदं प्रग्रहान्तम् । प्रातिशाख्ये 'अथ प्रग्रहाः' इत्यादिभिः व्यासशिक्षायां 'अथ प्रग्रह एवान्त' इत्यादिभिश्च लक्षणैर्लक्षिताः ईकारादयः स्वराः प्रग्रहसंज्ञा भवन्ति । एते च 'प्रग्रहेङ्ग्योपसर्गान्त इति स्यादप्यसांहिते' 'इतिपरोऽपि' (प्राति· अ-४-सू-४) इत्यादिवचनैः पदाद्ध्ययने इतिशब्दान्ता भवन्ति ॥

गतयः । अदित्याः । त्वक् । असि । प्रतीति । त्वा । [ ७ ] पृथिवी । वेत्तु । अधिष वणमित्यधि-सवनम् । असि । वानस्पत्यम् । प्रतीति । त्वा । अदित्याः । त्वक् । वेत्तु । अग्नेः । तनूः । असि । वाचः । विसर्जनमितिवि-सर्जनम् । देववीतयइतिदेव-वीतये । त्वा । गृह्णामि । अद्रिः । असि । वानस्पत्यः । सः । इदम् । देवेभ्यः । हव्यम् । सुशमीतिसु-शमि । शमिष्व । इषम् । एति । वद । ऊर्जम् । एति । वद । द्युमदिति द्यु-मत् । वदत । वयम् । सङ्घातमितिसं-घातम् । जेष्म । वर्षवृद्धमितिवर्ष-वृद्धम् । असि । प्रतीति । त्वा । वर्षवृद्धमितिवर्ष-वृद्धम् । वेत्तु । पराऽपूतमितिपरा-पूतम् । रक्षः । पराऽपूताइतिपरा-पूताः । अरातयः । रक्षसाम् । भागः । असि । वायुः । वः । वीति । विनक्तु । देवः । वः । सविता । हिरण्यपाणि रितिहिरण्य-पाणिः । प्रतीति । गृह्णातु ॥ [ ८ ] त्वाभागएकादशच ॥ ❀ ॥ ५ ॥

अवधूतमित्यव-धूतम् । रक्षः । अवधूताइत्यव-धूताः । अरातयः । अदित्याः । त्वक् । असि । प्रतीति । त्वा । पृथिवी । वेत्तु । दिवः । स्कम्भनिः । असि । प्रतीति । त्वा । अदित्याः । त्वक् । वेत्तु । धिषणा । असि । पर्वत्या । प्रतीति । त्वा । दिवः । स्कम्भनिः । वेत्तु । धिषणा । असि । पार्वतेयी । प्रतीति । त्वा । पर्वतिः । वेत्तु । देवस्य । त्वा । सवितुः । प्रसवइतिप्र-सवे । अश्विनोः । बाहुभ्यामितिबाहु-भ्याम् । पूष्णः । हस्ताभ्याम् । अधीति । वपामि । धान्यम् । असि । धिनुहि । देवान् । प्राणायेतिप्र-अनाय । त्वा । अपानायेत्यप-अनाय । त्वा । व्यानायेतिवि-अनाय । त्वा । दीर्घाम् । अन्विति । प्रसितिमितिप्र-सितिम् । आयुषे । धाम् । देवः । वः । सविता । हिरण्यपाणिरितिहिरण्य-पाणिः । प्रतीति । गृह्णातु ॥ [ ९ ] प्राणायत्वा पञ्चदशच ॥ ❀ ❀ ❀ ❀ ❀ ॥ ६ ॥

धृष्टिः । असि । ब्रह्म । यच्छ । अपेति । अग्ने । अग्निम् । आमादमित्याम-अदम् । जहि । निरिति । क्रव्यादमितिक्रव्य-अदम् । सेध । एति । देवयजमितिदेव-यजम् । वह । निर्दग्धमितिनिः-दग्धम् । रक्षः । निर्दग्धाइतिनिः-दग्धाः । अरातयः । ध्रुवम् । असि । पृथिवीम् । दृꣳह । आयुः । दृꣳह । प्रजामितिप्र-जाम् । दृꣳह । सजातानितिस-जातान् । अस्मै । यजमानाय । परीति । ऊह । धर्त्रम् । असि । अन्तरिक्षम् । दृꣳह । प्राणमितिप्र-अनम् । दृꣳह । अपानमित्यप-अनम् । दृꣳह । सजातानिति

स-जातान् । अस्मै । यजमानाय । परीति । ऊह । धरुणम् । असि । दिवम् । दृꣳह । चक्षुः । [१०] दृꣳह । श्रोत्रम् । दृꣳह । सजातानितिस-जातान् । अस्मै । यजमानाय । परीति । ऊह । धर्मं । असि । दिशः । दृꣳह । योनिम् । दृꣳह । प्रजामितिप्र-जाम् । दृꣳह । सजातानितिस-जातान् । अस्मै । यजमानाय । परीति । ऊह । चितः । स्थ । प्रजामितिप्र-जाम् । अस्मै । रयिम् । अस्मै । सजातानितिस-जातान् । अस्मै । यजमानाय । परीति । ऊह । भृगूणाम् । अङ्गिरसाम् । तपसा । तप्यध्वम् । यानि । घर्मे । कपालानि । उपचिन्वन्तीत्युप-चिन्वन्ति । वेधसः ॥ पूष्णः । तानि । अपीति । व्रते । इन्द्रवायूइतीन्द्र-वायू । वीति । मुञ्चताम् ॥ [११] चक्षुरष्टाचत्वारिꣳशच्च ॥७॥

समिति । वपामि । समिति । आपः । अद्भिरित्यत्-भिः । अग्मत । समिति । ओषधयः । रसेन । समिति । रेवतीः । जगतीभिः । मधुमतीरितिमधु-मतीः । मधुमतीभिरितिमधु-मतीभिः । सृज्यध्वम् । अद्भ्यइत्यत्-भ्यः । परीति । प्रजाताइतिप्र-जाताः । स्थ । समिति । अद्भिरित्यत्-भिः । पृच्यध्वम् । जनयत्यै । त्वा । समिति । यौमि । अग्नये । त्वा । अग्नीषोमाभ्यामित्यग्नी-सोमाभ्याम् । मखस्य । शिरः । असि । घर्मः । असि । विश्वायुरितिविश्व-आयुः । उरु । प्रथस्व । उरु । ते । यज्ञपतिरितियज्ञ-पतिः । प्रथताम् । त्वचम् । गृह्णीष्व । अन्तरितमित्यन्तः-इतम् । रक्षः । अन्तरिता इत्यन्तः-इताः । अरातयः । देवः । त्वा । सविता । श्रपयतु । वर्षिष्ठे । अधीति । नाके । अग्निः । ते । तनुवम् । मा । अतीति । धाक् । अग्ने । हव्यम् । रक्षस्व । समिति । ब्रह्मणा । पृच्यस्व । एकताय । स्वाहा । द्विताय । स्वाहा । त्रिताय । स्वाहा ॥ [१२] सविताद्वाविꣳशतिश्च ॥ ❀ ❀ ॥८॥

एति । ददे । इन्द्रस्य । बाहुः । असि । दक्षिणः । सहस्रभृष्टिरितिसहस्र-भृष्टिः । शततेजाइतिशत-तेजाः । वायुः । असि । तिग्मतेजाइतितिग्म-तेजाः । पृथिवि । देवयजनीतिदेव-यजनि । ओषध्याः । ते । मूलम् । मा । हिꣳसिषम् । अपहत इत्यप-हतः । अररुः । पृथिव्यै । व्रजम् । गच्छ । गोस्थानमितिगो-स्थानम् । वर्षतु । ते । द्यौः । बधान । देव । सवितः । परमस्याम् । परावतीतिपरा-वति । शतेन । पाशैः । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । तम् । अतः । मा । मौक् । अपहतइत्यप-हतः । अररुः । पृथिव्यै । देवयजन्याइतिदेव-यजन्यै । व्रजम् । [१३]

गच्छ । गोस्थानमितिगो-स्थानम् । वर्षतु । ते । द्यौः । बधान । देव । सवितः । पर
मस्याम् । परावतीतिपरा-वति । शतेन । पाशैः । यः । अस्मान् । द्वेष्टि । यम् । च ।
वयम् । द्विष्मः । तम् । अतः । मा । मौक् । अपहतइत्यप-हतः । अररुः । पृथिव्याः ।
अदेवयजन इत्यदेव-यजनः । व्रजम् । गच्छ । गोस्थानमितिगो-स्थानम् । वर्षतु ।
ते । द्यौः । बधान । देव । सवितः । परमस्याम् । परावतीतिपरा-वति । शतेन ।
पाशैः । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । तम् । अतः ।
मा । [१४] मौक् । अररुः । ते । दिवम् । मा । स्कान् । वसवः । त्वा । परीति ।
गृह्णन्तु । गायत्रेण । छन्दसा । रुद्राः । त्वा । परीति । गृह्णन्तु । त्रैष्टुभेन । छन्दसा ।
आदित्याः । त्वा । परीति । गृह्णन्तु । जागतेन । छन्दसा । देवस्य । सवितुः । स
वे । कर्म । कृण्वन्ति । वेधसः । ऋतम् । असि । ऋतसदनमित्यृत-सदनम् ।
असि । ऋतश्रीरित्यृत-श्रीः । असि । धाः । असि । स्वधेति स्व-धा । असि । उ
र्वी । च । असि । वस्वी । च । असि । पुरा । क्रूरस्य । विसृपइतिवि-सृपः । विर
प्शिन्नितिवि-रप्शिन् । उदादायेत्युत्-आदाय । पृथिवीम् । जीरदानुरितिजीर-दा
नुः । याम् । ऐरयन् । चन्द्रमसि । स्वधाभिरितिस्व-धाभिः । ताम् । धीरासः । अनुदृ
श्येत्यनु-दृश्य । यजन्ते ॥ [१५] देवयजन्यैव्रजन्तमतोमाविरप्शिन्नेकादशच ॥९॥

प्रत्युष्टमितिप्रति-उष्टम् । रक्षः । प्रत्युष्टाइतिप्रति-उष्टाः । अरातयः । अग्नेः ।
वः । तेजिष्ठेन । तेजसा । निरिति । तपामि । गोष्ठमितिगो-स्थम् । मा । निरिति ।
मृक्षम् । वाजिनम् । त्वा । सपत्नसाहमितिसपत्न-साहम् । समिति । मार्ज्मि । वा
चम् । प्राणमितिप्र-अनम् । चक्षुः । श्रोत्रम् । प्रजामितिप्र-जाम् । योनिम् । मा ।
निरिति । मृक्षम् । वाजिनीम् । त्वा । सपत्नसाहीमितिसपत्न-साहीम् । समिति । मा
र्ज्मि । आशासानेत्या-शासाना । सौमनसम् । प्रजामितिप्र-जाम् । सौभाग्यम् । त
नूम् ॥ अग्नेः । अनुव्रतेत्यनु-व्रता । भूत्वा । समिति । नह्ये । सुकृतायेतिसु-कृताय ।
कम् ॥ सुप्रजसइतिसु-प्रजसः । त्वा । वयम् । सुपत्नीरितिसु-पत्नीः । उपेति ।
[१६] सेदिम ॥ अग्ने । सपत्नदम्भनमितिसपत्न-दम्भनम् । अदब्धासः । अदा
भ्यम् ॥ इमम् । वीति । स्यामि । वरुणस्य । पाशम् । यम् । अबध्नीत । सविता । सुके
तइतिसु-केतः ॥ धातुः । च । योनौ । सुकृतस्येतिसु-कृतस्य । लोके । स्योनम् ।

मे । सह । पत्या । करोमि ॥ समिति । आयुषा । समिति । प्रजयेतिप्र-जया । स मिति । अग्ने । वर्चसा । पुनः ॥ समिति । पत्नी । पत्या । अहम् । गच्छे । समि ति । आत्मा । तनुवा । मम ॥ मह्रीनाम् । पयः । असि । ओषधीनाम् । रसः । त स्य । ते । अक्षीयमाणस्य । निरिति । [१७] वपामि । मह्रीनाम् । पयः । असि । ओषधीनाम् । रसः । अदब्धेन । त्वा । चक्षुषा । अवेति । ईक्षे । सुप्रजास्त्वायेति सुप्रजाः-त्वाय । तेजः । असि । तेजः । अनु । प्रेति । इहि । अग्निः । ते । तेजः । मा । वीति । नेत् । अग्नेः । जिह्वा । असि । सुभूरितिसु-भूः । देवानाम् । धाम्नेधा म्नइतिधाम्ने-धाम्ने । देवेभ्यः । यजुषेयजुषइतियजुषे-यजुषे । भव । शुक्रम् । असि । ज्योतिः । असि । तेजः । असि । देवः । वः । सविता । उदिति । पुनातु । अच्छिद्रेण । पवित्रेण । वसोः । सूर्यस्य । रश्मिभिरितिरश्मि-भिः । शुक्रम् । त्वा । शुक्रायाम् । धा म्नेधाम्नइतिधाम्ने-धाम्ने । देवेभ्यः । यजुषेयजुषइतियजुषे-यजुषे । गृह्णामि । ज्योतिः । त्वा । ज्योतिषि । अर्चिः । त्वा । अर्चिषि । धाम्नेधाम्नइतिधाम्ने-धाम्ने । देवेभ्यः । यजु षेयजुषइतियजुषे-यजुषे । गृह्णामि ॥ [१८] उपनीरश्मिभिश्शुक्रं षोडशच ॥ १० ॥

कृष्णः । असि । आखरेष्ठइत्याखरे-स्थः । अग्नये । त्वा । स्वाहा । वेदिः । अ सि । बर्हिषे । त्वा । स्वाहा । बर्हिः । असि । स्रुग्भ्यइतिस्रुक्-भ्यः । त्वा । स्वा हा । दिवे । त्वा । अन्तरिक्षाय । त्वा । पृथिव्यै । त्वा । स्वधेतिस्व-धा । पितृभ्यइ तिपितृ-भ्यः । ऊर्क् । भव । बर्हिषद्भ्यइतिबर्हिषत्-भ्यः । ऊर्जा । पृथिवीम् । ग च्छत । विष्णोः । स्तूपः । असि । ऊर्णाम्रदसमित्यूर्णा-म्रदसम् । त्वा । स्तृणामि । स्वासस्थमितिसु-आसस्थम् । देवेभ्यः । गन्धर्वः । असि । विश्वावसुरितिविश्व-वसुः । विश्वस्मात् । ईषतः । यजमानस्य । परिधिरितिपरि-धिः । इडः । ईडितः । इन्द्रस्य । बाहुः । असि । [१९] दक्षिणः । यजमानस्य । परिधिरितिपरि-धिः । इडः । ईडि तः । मित्रावरुणावितिमित्रा-वरुणौ । त्वा । उत्तरतइत्युत्-तरतः । परीति । धत्ताम् । ध्रुवेण । धर्मणा । यजमानस्य । परिधिरितिपरि-धिः । इडः । ईडितः । सूर्यः । त्वा । पुरस्तात् । पातु । कस्याः । चित् । अभिशस्त्याइत्यभि-शस्त्याः । वीतिहोत्र मितिवीति-होत्रम् । त्वा । कवे । द्युमन्तमितिद्यु-मन्तम् । समिति । इधीमहि । अ ग्ने । बृहन्तम् । अध्वरे । विशः । यन्त्वे-इति । स्थः । वसूनाम् । रुद्राणाम् । आदित्या

नाम । सदसि । सीद । जुहूः । उपभृदित्युप-भृत् । ध्रुवा । असि । घृताची । नाम्ना । प्रियेण । नाम्ना । प्रिये । सदसि । सीद । एताः । असदन्न् । सुकृतस्येतिसु-कृतस्य । लोके । ताः । विष्णो-इति । पाहि । पाहि । यज्ञम् । पाहि । यज्ञपतिमिति यज्ञ-पतिम् । पाहि । माम् । यज्ञनियमितियज्ञ-नियम् ॥ [२०] बाहुरसिप्रियेसदसि पञ्चदशच ॥ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ॥११॥

भुवनम् । असि । वीति । प्रथस्व । अग्ने । यष्टः । इदम् । नमः ॥ जुहु । एति । इहि । अग्निः । त्वा । ह्वयति । देवयज्यायाइतिदेव-यज्यायै । उपभृदित्युप-भृत् । एति । इहि । देवः । त्वा । सविता । ह्वयति । देवयज्यायाइतिदेव-यज्यायै । अग्नाविष्णूइत्यग्ना-विष्णू । मा । वाम् । अवेति । क्रमिषम् । वीति । जिहाथाम् । मा । मा । समिति । ताप्तम् । लोकम् । मे । लोककृताविति लोक-कृतौ । कृणुतम् । विष्णोः । स्थानम् । असि । इतः । इन्द्रः । अकृणोत् । वीर्याणि । समारभ्येतिसं-आरभ्य । ऊर्ध्वः । अध्वरः । दिविस्पृशमितिदिवि-स्पृशम् । अह्रुतः । यज्ञः । यज्ञपतेरितियज्ञ-पतेः । इन्द्रावानितीन्द्र-वान् । स्वाहा । बृहत् । भाः । पाहि । मा । अग्ने । दुश्चरितादितिदुः-चरितात् । एति । मा । सुचरितइतिसु-चरिते । भज । मखस्य । शिरः । असि । समिति । ज्योतिषा । ज्योतिः । अङ्क्ताम् ॥ [२१] अह्रुतएकविंशतिश्च ॥

वाजस्य । मा । प्रसवेनेतिप्र-सवेन । उदुग्राभेणेत्युत्-ग्राभेण । उदिति । अग्रभीत् ॥ अथ । सपत्नान् । इन्द्रः । मे । निग्राभेणेतिनि-ग्राभेण । अधरान् । अकः ॥ उदुग्राभमित्युत्-ग्राभम् । च । निग्राभमितिनि-ग्राभम् । च । ब्रह्म । देवाः । अवीवृधन्न् ॥ अथ । सपत्नान् । इन्द्राग्नीइतीन्द्र-अग्नी । मे । विषूचीनान् । वीति । अस्यताम् ॥ वसुभ्यइतिवसु-भ्यः । त्वा । रुद्रेभ्यः । त्वा । आदित्येभ्यः । त्वा । अक्तम् । रिहाणाः । वियन्तु । वयः ॥ प्रजामितिप्र-जाम् । योनिम् । मा । निरिति । मृक्षम् । एति । प्यायन्ताम् । आपः । ओषधयः । मरुताम् । पृषतयः । स्थ । दिवम् । [२२] गच्छ । ततः । नः । वृष्टिम् । एति । ईरय ॥ आयुष्पाइत्यायुः-पाः । अग्ने । असि । आयुः । मे । पाहि । चक्षुष्पाइतिचक्षुः-पाः । अग्ने । असि । चक्षुः । मे । पाहि । ध्रुवा । असि । यम् । परिधिमितिपरि-धिम् । पर्यधत्थाइतिपरि-अधत्थाः । अग्ने । देव । पणिभिरितिपणि-भिः । वीयमाणः ॥ तम् । ते । एतम् । अन्विति । जोषम् ।

अग्नि । न । इत् । एषः । त्वत् । अपचेतयांताइत्यप-चेतयाते । यज्ञस्य । पाथः । उप । समिति । इतम् । सꣳस्रावभागाइतिसꣳस्राव-भागाः । स्थ । इषाः । बृहन्तः । प्रस्तरेष्ठाइतिप्रस्तरे-स्थाः । बर्हिषदइतिबर्हि-सदः । च । [२३] देवाः । इमाम् । वाचम् । अभीति । विश्वे । गृणन्तः । आसद्येत्या-सद्य । अस्मिन्न् । बर्हिषि । मादयध्वम् । अग्नेः । वाम् । अपन्नगृहस्येत्यपन्न-गृहस्य । सदसि । सादयामि । सुम्नाय । सुम्निनीइति । सुम्ने । मा । धत्तम् । धुरि । धुर्यौ । पातम् । अग्ने । अदब्धायोइत्यदब्ध-आयो । अशीततनोइत्यशीत-तनो । पाहि । मा । अद्य । दिवः । पाहि । प्रसित्याइतिप्र-सित्यै । पाहि । दुरिष्ट्याइतिदुः-इष्ट्यै । पाहि । दुरद्मन्याइतिदुः-अद्मन्यै । पाहि । दुश्चरितादितिदुः-चरितात् । अविषम् । नः । पितुम् । कृणु । सुषदेतिसु-सदा । योनिम् । स्वाहा । देवाः । गातुविदइतिगातु-विदः । गातुम् । वित्वा । गातुम् । इत । मनसः । पते । इमम् । नः । देव । देवेषु । यज्ञम् । स्वाहा । वाचि । स्वाहा । वाते । धाः ॥ [२४] दिवश्च वित्वा गातुन्त्रयोदशच ॥ ❀ ॥ १३ ॥

उभा । वाम् । इन्द्राग्नीइतीन्द्र-अग्नी । आहुवध्यै । उभा । राधसः । सह । मादयध्यै ॥ उभा । दातारौ । इषाम् । रयीणाम् । उभा । वाजस्य । सातये । हुवे । वाम् ॥ अश्रवम् । हि । भूरिदावत्तरेतिभूरिदावत्-तरा । वाम् । विजामातुरितिवि-जामातुः । उत । वा । घ । स्यालात् ॥ अथ । सोमस्य । प्रयतीतिप्र-यती । युवभ्यामितियुव-भ्याम् । इन्द्राग्नीइतीन्द्र-अग्नी । स्तोमम् । जनयामि । नव्यम् ॥ इन्द्राग्नीइतीन्द्र-अग्नी । नवतिम् । पुरः । दासपत्नीरितिदास-पत्नीः । अधूनुतम् ॥ साकम् । एकेन । कर्मणा ॥ शुचिम् । नु । स्तोमम् । नवजातमितिनव-जातम् । अद्य । इन्द्राग्नीइतीन्द्र-अग्नी । वृत्रहणेतिवृत्र-हना । जुषेथाम् ॥ [२५] उभा । हि । वाम् । सुहवेतिसु-हवा । जोहवीमि । ता । वाजम् । सद्यः । उशते । धेष्ठा ॥ वयम् । उ । त्वा । पथः । पते । रथम् । न । वाजसातयइतिवाज-सातये ॥ धिये । पूषन्न् । अयुज्महि ॥ पथस्पथइतिपथः-पथः । परिपतिमितिपरि-पतिम् । वचस्या । कामेन । कृतः । अभीति । आनट् । अर्कम् ॥ सः । नः । रासत् । शुरुधः । चन्द्राग्राइतिचन्द्र-अग्राः । धियन्धियमितिधियम्-धियम् । सीषधाति । प्रेति । पूषा ॥ क्षेत्रस्य । पतिना । वयम् । हितेन । इव । जयामसि ॥ गाम् । अश्वम् । पोषयित्नु । एति । सः । नः । [२६]

३

मृडाति। ईदृशे ॥ क्षेत्रस्य । पते । मधुमन्तमितिमधु-मन्तम् । ऊर्मिम् । धेनुः । इव । पयः । अस्मासु । धुक्ष्व ॥ मधुश्चुतमितिमधु-श्चुतम् । घृतम् । इव । सुपूतमितिसु-पूतम् । ऋतस्य । नः । पतयः । मृडयन्तु ॥ अग्ने । नय । सुपथेतिसु-पथा । राये । अस्मान् । विश्वानि । देव । वयुनानि । विद्वान् ॥ युयोधि । अस्मत् । जुहुराणम् । एनः । भूयिष्ठाम् । ते । नमउक्तिमितिनमः-उक्तिम् । विधेम ॥ एति । देवानाम् । अपीति । पन्थाम् । अगन्म । यत् । शक्नवाम । तत् । आन्विति । प्रवोढुमितिप्र-वोढुम् ॥ अग्निः । विद्वान् । सः । यजात् । [२७] सः । इत् । उ । होता । सः । अध्वरान् । सः । ऋतून् । कल्पयाति ॥ यत् । वाहिष्ठम् । तत् । अग्नये । बृहत् । अर्च । विभावसोइतिविभा-वसो ॥ महिषी । इव । त्वत् । रयिः । त्वत् । वाजाः । उदिति । ईरते ॥ अग्ने । त्वम् । पारय । नव्यः । अस्मान् । स्वस्तिभिरितिस्वस्ति-भिः । अतीति । दुर्गाणीतिदुः- गानि । विश्वा ॥ पूः । च । पृथ्वी । बहुला । नः । उर्वी । भव । तोकाय । तनयाय । शम् । योः ॥ त्वम् । अग्ने । व्रतपाइतिव्रत-पाः । असि । देवः । एति । मर्त्येषु । आ ॥ त्वम् । यज्ञेषु । ईड्यः ॥ यत् । वः । वयम् । प्रमिनामेतिप्र-मिनाम । व्रतानि । विदुषाम् । देवाः । अविदुष्टरासइत्यविदुः-तरासः ॥ अग्निः । तत् । विश्वम् । एति । पृणाति । विद्वान् । येभिः । देवान् । ऋतुभिरित्यृतु-भिः । कल्पयाति ॥ [२८] जुषेथामासनोयजादात्रयोविꣳशतिश्च ॥ ❀ ❀ ॥१४॥

इषेत्वायज्ञस्य शुन्धध्वङ्कर्मणे देवोऽत्रघृतन्धृष्टिस्सꣳ पाम्यादंदेप्रत्युष्टङ्कृणोऽसि भुवनमसि वाजस्योभावाश्चतुर्दश ॥ ❀ ❀ ❀ ॥१४॥

इषेदꣳहभुवनमष्टाविꣳशतिः ॥ २८ ॥ इषेत्वांकल्पयाति ॥

॥ इति प्रथमकाण्डे प्रथमः प्रश्नः ॥

---

१ 'इडिदम्नइमान्नएनौषधीःपरस्सः' ॥ (प्रा, अ-९, सू-१७) इदु, इदम्ने, इमान्नः, एना, ओषधीः, इत्येतेषु परतः 'सः' इत्यत्र विसर्जनीयो लुप्यते । सेदुहोता । सेदम्नेअस्तु । सेमान्नोहव्यदातिम् । सेनानीकेन । सौषधीरनुरुध्यसे । शिक्षायामपि लोपप्रकरणे— "एनौषधीरिद्विदम्नइमान्नःपरतश्च सः' इति ॥ स्पष्टोऽर्थः ॥

## अथ प्रथमकाण्डे द्वितीयः प्रश्नः ॥

आपः । उन्दन्तु । जीवसे । दीर्घायुत्वायेतिदीर्घायु-त्वाय । वर्चसे । ओषधे । त्रायस्व । एनम् । स्वधितइतिस्व-धिते । मा । एनम् । हिꣳसीः । देवश्रूरिति देव-श्रूः । एतानि । प्रेति । वपे । स्वस्ति । उत्तरणीत्युत-तराणि । अशीय । आपः । अस्मान् । मातरः । शुन्धन्तु । घृतेन । नः । घृतपुवइतिघृत-पुवः । पुनन्तु । विश्वम् । अस्मत् । प्रेति । वहन्तु । रिप्रम् । उदिति । आभ्यः । शुचिः । एति । पूतः । एमि । सोमस्य । तनूः । असि । तनुवम् । मे । पाहि । महीनाम् । पयः । असि । वर्चोधाइतिवर्चः-धाः । असि । वर्चः । [१] मयि । धेहि । वृत्रस्य । कनीनिका । असि । चक्षुष्पाइतिचक्षुः-पाः । असि । चक्षुः । मे । पाहि । चित्पतिरितिचित्-पतिः । त्वा । पुनातु । वाक्पतिरिति वाक्-पतिः । त्वा । पुनातु । देवः । त्वा । सविता । पुनातु । अच्छिद्रेण । पवित्रेण । वसोः । सूर्यस्य । रश्मिभिरितिरश्मि-भिः । तस्य । ते । पवित्रपतइतिपवित्र-पते । पवित्रेण । यस्मै । कम् । पुने । तत् । शकेयम् । एति । वः । देवासः । ईमहे । सत्यधर्माणइतिसत्य-धर्माणः । अध्वरे । यत् । वः । देवासः । आगुरइत्या-गुरे । यज्ञियासः । हवामहे । इन्द्राग्नीइतीन्द्र-अग्नी । द्यावापृथिवीइतिद्यावा-पृथिवी । आपः । ओषधीः । त्वम् । दीक्षाणाम् । अधिपतिरित्यधि-पतिः । असि । इह । मा । सन्तम् । पाहि ॥ [२] वर्चओषधीरष्टौच ॥ ❀ ❀ ❀ ❀ ❀ ॥१॥

आकूत्याइत्या-कूत्यै । प्रयुजइतिप्र-युजे । अग्नये । स्वाहा । मेधायै । मनसे । अग्नये । स्वाहा । दीक्षायै । तपसे । अग्नये । स्वाहा । सरस्वत्यै । पूष्णे । अग्नये । स्वाहा । आपः । देवीः । बृहतीः । विश्वशम्भुवइतिविश्व-शम्भुवः । द्यावापृथिवीइतिद्यावा-पृथिवी । उरु । अन्तरिक्षम् । बृहस्पतिः । नः । हविषा । वृधातु । स्वाहा । विश्वे । देवस्य । नेतुः । मर्तः । वृणीत । सख्यम् । विश्वे । रायः । इषुध्यसि । द्युम्नम् । वृणीत । पुष्यसे । स्वाहा । ऋक्सामयोरित्यृक्-सामयोः । शिल्पेइति । स्थः । तेइति । वाम् । एति । रभे । तेइति । मा । [३] पातम् । एति । अस्य । यज्ञस्य । उदृचइत्युत-ऋचः । इमाम् । धियम् । शिक्षमाणस्य । देव । क्रतुम् । दक्षम् । वरुण । समिति । शिशाधि । यया । अतीति । विश्वा । दुरितेतिदुः-इता । तरेम । सुतर्माणमितिसु-तर्माणम् । अधीति । नावम् । रुहेम । ऊ

के । असि । आङ्गिरसी । ऊर्णम्रदाइत्यूर्णं-मृदाः । ऊर्जम् । मे । यच्छ । पाहि । मा । मा । मा । हिꣳसीः । विष्णोः । शर्म । असि । शर्म । यजमानस्य । शर्म । मे । यच्छ । नक्षत्राणाम् । मा । अतीकाशात् । पाहि । इन्द्रस्य । योनिः । असि । [४] मा । मा । हिꣳसीः । कृष्यै । त्वा । सुसस्यायाइतिसु-सस्यायै । सुपिप्पलाभ्यइतिसु-पिप्पलाभ्यः । त्वा । ओषधीभ्यइत्योषधि-भ्यः । सूपस्थाइतिसु-उपस्थाः । देवः । वनस्पतिः । ऊर्ध्वः । मा । पाहि । एति । उदृचइत्युत्-ऋचः । स्वाहा । यज्ञम् । मनसा । स्वाहा । द्यावापृथिवीभ्यामितिद्यावा-पृथिवीभ्याम् । स्वाहा । उरोः । अन्तरिक्षात् । स्वाहा । यज्ञम् । वातात् । एति । रभे ॥ [५] मा योनिरसि त्रिꣳशच्च ॥ ❀ ॥२॥

दैवीम् । धियम् । मनामहे । सुमृडीकामितिसु-मृडीकाम् । अभिष्टये । वर्चोधामितिवर्चः-धाम् । यज्ञवाहसमितियज्ञ-वाहसम् । सुपारेतिसु-पारा । नः । असतु । वशे ॥ ये । देवाः । मनोजाताइतिमनः-जाताः । मनोयुजइतिमनः-युजः । सुदक्षाइतिसु-दक्षाः । दक्षपितारइतिदक्ष-पितारः । ते । नः । पान्तु । ते । नः । अवन्तु । तेभ्यः । नमः । तेभ्यः । स्वाहा । अग्ने । त्वम् । स्विति । जागृहि । वयम् । स्विति । मन्दिषीमहि । गोपाय । नः । स्वस्तये । प्रबुधइतिप्र-बुधे । नः । पुनः । ददः ॥ त्वम् । अग्ने । व्रतपाइतिव्रत-पाः । असि । देवः । एति । मर्त्येषु । आ ॥ त्वम् । [६] यज्ञेषु । ईड्यः ॥ विश्वे । देवाः । अभीति । माम् । एति । अववृत्रन्न् । पूषा । सन्या । सोमः । राधसा । देवः । सविता । वसोः । वसुदावेतिवसु-दावा । रास्व । इयत् । सोम । एति । भूयः । भर । मा । पृणन्न् । पूर्त्या । वीति । राधि । मा । अहम् । आयुषा । चन्द्रम् । असि । मम । भोगाय । भव । वस्त्रम् । असि । मम । भोगाय । भव । उस्रा । असि । मम । भोगाय । भव । हयः । असि । मम । भोगाय । भव । [७] छागः । असि । मम । भोगाय । भव । मेषः । असि । मम । भोगाय । भव । वायवे । त्वा । वरुणाय । त्वा । निर्ऋत्याइतिनिः-ऋत्यै । त्वा । रुद्राय । त्वा । देवीः । आपः । अपाम् । नपात् । यः । ऊर्मिः । हविष्यः । इन्द्रियावानितीन्द्रिय-वान् । मदिन्तमः । तम् । वः । मा । अवेति । क्रमिषम् । अच्छिन्नम् । तन्तुम् । पृथिव्याः । अन्विति । गेषम् । भद्रात् । अभीति । श्रेयः । प्रेति । इहि । बृहस्पतिः । पुरएतेतिपुरः-एता । ते । अस्तु । अथ । ईम् । अवेति । स्य । वरे । एति ।

पृथिव्याः। आरे। शत्रून्। कृणुहि। सर्ववीरइतिसर्व-वीरः। एति। इदम्। अगन्म। देवयजनमितिदेव-यजनम्। पृथिव्याः। विश्वे। देवाः। यत्। अजुषन्त। पूर्वे। ऋक्सामाभ्यामित्यृक्साम-भ्याम्। यजुषा। सन्तरन्तइतिसं-तरन्तः। रायः। पोषेण। समिति। इषा। मदेम॥ [८] आत्वं हयोऽसिममभोगायभव स्य पञ्चविं शतिश्च॥३॥

इयम्। ते। शुक्र। तनूः। इदम्। वर्चः। तया। समिति। भव। भ्राजम्। गच्छ। जूः। असि। धृता। मनसा। जुष्टा। विष्णवे। तस्याः। ते। सत्यसंवसइतिसत्य-सवसः। प्रसवइतिप्र-सवे। वाचः। यन्त्रम्। अशीय। स्वाहा। शुक्रम्। असि। अमृतम्। असि। वैश्वदेवमितिवैश्व-देवम्। हविः। सूर्यस्य। चक्षुः। एति। अरुहम्। अग्नेः। अक्ष्णः। कनीनिकाम्। यत्। एतशेभिः। ईयसे। भ्राजमानः। विपश्चिता। चित्। असि। मना। असि। धीः। असि। दक्षिणा। [९] असि। यज्ञिया। असि। क्षत्रिया। असि। अदितिः। असि। उभयतश्शीर्ष्णीत्युभयतः-शीर्ष्णी। सा। नः। सुप्राचीतिसु-प्राची। सुप्रतीचीतिसु-प्रतीची। समिति। भव। मित्रः। त्वा। पदि। बध्नातु। पूषा। अध्वनः। पातु। इन्द्राय। अध्यक्षायेत्यधि-अक्षाय। अन्विति। त्वा। माता। मन्यताम्। अन्विति। पिता। अन्विति। भ्राता। सगर्भ्यइतिस-गर्भ्यः। अन्विति। सखा। सयूथ्यइतिस-यूथ्यः। सा। देवि। देवम्। अच्छ। इहि। इन्द्राय। सोमम्। रुद्रः। त्वा। एति। वर्तयतु। मित्रस्य। पथा। स्वस्ति। सोमसखेतिसोम-सखा। पुनः। एति। इहि। सह। रय्या॥ [१०] दक्षिणासोमसखापञ्चच॥ ❀ ❀ ॥४॥

वस्वी। असि। रुद्रा। असि। अदितिः। असि। आदित्या। असि। शुक्रा। असि। चन्द्रा। असि। बृहस्पतिः। त्वा। सुम्ने। रण्वतु। रुद्रः। वसुभिरितिवसु-भिः। एति। चिकेतु। पृथिव्याः। त्वा। मूर्द्धन्। एति। जिघर्मि। देवयजनइतिदेव-यजने। इडायाः। पदे। घृतवतीतिघृत-वति। स्वाहा। परिलिखितमितिपरि-लिखितम्। रक्षः। परिलिखिताइतिपरि-लिखिताः। अरातयः। इदम्। अहम्। रक्षसः। ग्रीवाः। अपीति। कृन्तामि। यः। अस्मान्। द्वेष्टि। यम्। च। वयम्। द्विष्मः। इदम्। अस्य। ग्रीवाः। [११] अपीति। कृन्तामि। अस्मेइति। रायः। त्वेइति। रायः। तोते। रायः। समिति। देवि। देव्या। उर्वश्या। पश्यस्व।

त्वष्टीमती । ते । सपेय । सुरेताइतिसु-रेताः । रेतः । दधाना । वीरम् । विदेय । तव । सन्दृशीतिसं-दृशि । मा । अहम् । रायः । पोषेण । वीति । योषम् ॥ [१२] अस्य श्रीवाएकान्नत्रिꣳशच्च ॥ ❀ ❀ ❀ ❀ ❀ ❀ ॥५॥

अꣳशुना । ते । अꣳशुः । पृच्यताम् । परुषा । परुः । गन्धः । ते । कामम् । अवतु । मदाय । रसः । अच्युतः । अमात्यः । असि । शुक्रः । ते । ग्रहः । अभीति । त्यम् । देवम् । सवितारम् । ऊण्योः । कविक्रतुमितिकवि-क्रतुम् । अर्चामि । सत्य सवसमितिसत्य-सवसम् । रत्नधामितिरत्न-धाम् । अभीति । प्रियम् । मतिम् । ऊर्ध्वा । यस्य । अमतिः । भाः । अदिद्युतत् । सवीमनि । हिरण्यपाणिरितिहिरण्य-पाणिः । अमिमीत । सुक्रतुरितिसु-क्रतुः । कृपा । सुवः ॥ प्रजाभ्यइतिप्र-जाभ्यः । त्वा । प्रा णायेतिप्र-अनाय । त्वा । व्यानायेतिवि-अनाय । त्वा । प्रजाइतिप्र-जाः । त्वम् । अनु । प्रेति । अनिहि । प्रजाइतिप्र-जाः । त्वाम् । अनु । प्रेति । अनन्तु ॥ [१३] अनुसप्तच ॥ ❀ ❀ ❀ ❀ ❀ ॥६॥

सोमम् । ते । क्रीणामि । ऊर्जस्वन्तम् । पयस्वन्तम् । वीर्यावन्तमितिवीर्य-वन्तम् । अभिमातिषाहमित्यभिमाति-साहम् । शुक्रम् । ते । शुक्रेण । क्रीणामि । चन्द्रम् । चन्द्रेण । अमृतम् । अमृतेन । सम्यत् । ते । गोः । अस्मेइति । चन्द्राणि । तपसः । तनूः । असि । प्रजापतेरितिप्रजा-पतेः । वर्णः । तस्याः । ते । सहस्रपो षमितिसहस्र-पोषम् । पुष्यन्त्याः । चरमेण । पशुना । क्रीणामि । अस्मेइति । ते । बन्धुः । मयि । ते । रायः । श्रयन्ताम् । अस्मेइति । ज्योतिः । सोमविक्रयिणीति सोम-विक्रयिणि । तमः । मित्रः । नः । एति । इहि । सुमित्रधाइतिसुमित्र-धाः । इन्द्रस्य । ऊरुम् । एति । विश । दक्षिणम् । उशन् । उशन्तम् । स्योनः । स्यो नम् । स्वान । भ्राज । अङ्घारे । बम्भारे । हस्त । सुहस्तेतिसु-हस्त । कृशानविति कृश-अनो । एते । वः । सोमक्रयणाइतिसोम-क्रयणाः । तान् । रक्षध्वम् । मा । वः । दभन् ॥ [१४] ऊरुन्द्वाविꣳशतिश्च ॥ ❀ ❀ ॥७॥

उदिति । आयुषा । स्वायुषेतिसु-आयुषा । उदिति । ओषधीनाम् । रसेन । उ दिति । पर्जन्यस्य । शुष्मेण । उदिति । अस्थाम् । अमृतान् । अनु ॥ उरु । अन्त रिक्षम् । अन्विति । इहि । अदित्याः । सदः । असि । अदित्याः । सदः । एति ।

सीद । अस्तंभ्नात् । द्याम् । ऋषभः । अन्तरिक्षम् । अमिमीत । वरिमाणम् । पृथिव्याः । एति । असीदत् । विश्वा । भुवनानि । सम्राडितिसं-राट् । विश्वा । इत् । तानि । वरुणस्य । व्रतानि । वनेषु । वीति । अन्तरिक्षम् । ततान । वाजम् । अर्वत्स्वित्यर्वत्-सु । पयः । अघ्नियासु । हृत्स्विति हृत्-सु । [१५] क्रतुम् । वरुणः । विक्षु । अग्निम् । दिवि । सूर्यम् । अदधात् । सोमम् । अद्रौ । उदिति । उ । त्यम् । जातवेदसमितिजात-वेदसम् । देवम् । वहन्ति । केतवः ॥ दृशे । विश्वाय । सूर्यम् ॥ उस्रौ । एति । इतम् । धूर्षाहाविति धूः-साहौ । अनश्रू इति । अवीरहणावित्यवीर-हनौ । ब्रह्मचोदनाविति ब्रह्म-चोदनौ । वरुणस्य । स्कम्भनम् । असि । वरुणस्य । स्कम्भसर्जनमिति स्कम्भ-सर्जनम् । असि । प्रत्यस्त इति प्रति-अस्तः । वरुणस्य । पाशः ॥ [१६] हृत्सुपञ्चत्रिंशच्च ॥ ❀ ❀ ॥८॥

प्रेति । च्यवस्व । भुवः । पते । विश्वानि । अभीति । धामानि । मा । त्वा । परिपरीतिपरि-परी । विदत् । मा । त्वा । परिपन्थिन इति परि-पन्थिनः । विदन् । मा । त्वा । वृकाः । अघायव इत्यघ-यवः । मा । गन्धर्वः । विश्वावसुरिति विश्व-वसुः । एति । दधत् । श्येनः । भूत्वा । परेति । पत । यजमानस्य । नः । गृहे । देवैः । संस्कृतम् । यजमानस्य । स्वस्त्ययनीति स्वस्ति-अयनी । असि । अपीति । पन्थाम् । अगस्महि । स्वस्तिगामिति स्वस्ति-गाम् । अनेहसम् । येन । विश्वाः । परीति । द्विषः । वृणक्ति । विन्दते । वसु । नमः । मित्रस्य । वरुणस्य । चक्षसे । महः । देवाय । तत् । ऋतम् । सपर्यत । दूरेदृश इति दूरे-दृशे । देवजाताये ति देव-जाताय । केतवे । दिवः । पुत्राय । सूर्याय । शंसत । वरुणस्य । स्कम्भनम् । असि । वरुणस्य । स्कम्भसर्जनमिति स्कम्भ-सर्जनम् । असि । उन्मुक्त इत्युत्-मुक्तः । वरुणस्य । पाशः ॥ [१७] मित्रस्यत्रयोविंशतिश्च ॥ ❀ ❀ ❀ ❀ ॥९॥

अग्नेः । आतिथ्यम् । असि । विष्णवे । त्वा । सोमस्य । आतिथ्यम् । असि । विष्णवे । त्वा । अतिथेः । आतिथ्यम् । असि । विष्णवे । त्वा । अग्नये । त्वा । रायस्पोषदाव्न इति रायस्पोष-दाव्ने । विष्णवे । त्वा । श्येनाय । त्वा । सोमभृत इति सोम-भृते । विष्णवे । त्वा । या । ते । धामानि । हविषा । यजन्ति । ता । ते । विश्वा । परिभूरिति परि-भूः । अस्तु । यज्ञम् । गयस्फान इति गय-स्फानः । प्रतरणइति

प्र-तरंणः । सुवीरइतिसु-वीरः । अवीरहेत्यवीर-हा । प्रेति । चर । सोम । दुर्यान् । अदित्याः । सदः । असि । अदित्याः । सदः । एति । [१८] सीद । वरुणः । असि । धृतव्रतइतिधृत-व्रतः । वारुणम् । असि । शंय्योरितिशं-योः । देवानाम् । सख्यात् । मा । देवानाम् । अपसः । छिथ्स्महि । आपतयइत्या-पतये । त्वा । गृह्णामि । परिपतयइतिपरि-पतये । त्वा । गृह्णामि । तनूनप्त्रइतितनू-नप्त्रे । त्वा । गृह्णामि । शाक्राय । त्वा । गृह्णामि । शक्मन्न् । ओजिष्ठाय । त्वा । गृह्णामि । अनाधृष्टमित्यना-धृष्टम् । असि । अनाधृष्यमित्यना-धृष्यम् । देवानाम् । ओजः । अभिशस्तिपाइत्यभिशस्ति-पाः । अनभिशस्तेन्यमित्यनभि-शस्तेन्यम् । अन्विति । मे । दीक्षाम् । दीक्षापतिरितिदीक्षा-पतिः । मन्यताम् । अन्विति । तपः । तपस्पतिरितितपः-पतिः । अञ्जसा । सत्यम् । उपेति । गेषम् । सुविते । मा । धाः ॥ [१९] आमैकञ्च ॥१०॥

अꣳशुरꣳशुरित्यꣳशुः-अꣳशुः । ते । देव । सोम । एति । प्यायताम् । इन्द्राय । एकधनविदइत्येकधन-विदे । एति । तुभ्यम् । इन्द्रः । प्यायताम् । एति । त्वम् । इन्द्राय । प्यायस्व । एति । प्यायय । सखीन् । सन्या । मेधया । स्वस्ति । ते । देव । सोम । सुत्याम् । अशीय । एष्टः । रायः । प्रेति । इषे । भगाय । ऋतम् । ऋतवादिभ्यइत्यृतवादि-भ्यः । नमः । दिवे । नमः । पृथिव्यै । अग्ने । व्रतपतइतिव्रत-पते । त्वम् । व्रतानाम् । व्रतपतिरितिव्रत-पतिः । असि । या । मम । तनूः । एषा । सा । त्वयि । [२०] या । तव । तनूः । इयम् । सा । मयि । सह । नौ । व्रतपतइतिव्रत-पते । व्रतिनोः । व्रतानि । या । ते । अग्ने । रुद्रिया । तनूः । तया । नः । पाहि । तस्याः । ते । स्वाहा । या । ते । अग्ने । अयाशयेत्यया-शया । रजाशयेतिरजा-शया । हराशयेतिहरा-शया । तनूः । वर्षिष्ठा । गह्वरेष्ठेतिगह्वरे-स्था । उग्रम् । वचः । अपेति । अवधीम् । त्वेषम् । वचः । अपेति । अवधीम् । स्वाहा ॥ [२१] त्वयिचत्वारिꣳशच्च ॥ ❀ ❀ ॥११॥

वित्तायनीतिवित्त-अयनी । मे । असि । तिक्तायनीतितिक्त-अयनी । मे । असि । अवतात् । मा । नाथितम् । अवतात् । मा । व्यथितम् । विदेः । अग्निः । नभः । नाम । अग्ने । अङ्गिरः । यः । अस्याम् । पृथिव्याम् । असि । आयुषा । नाम्ना । एति । इहि । यत् । ते । अनाधृष्टमित्यना-धृष्टम् । नाम । यज्ञियम् । तेन । त्वा । एति । दधे । अग्ने । अङ्गिरः । यः । द्वितीयस्याम् । तृतीयस्याम् । पृथिव्याम् । असि । आयुषा ।

नाम्ना । एति । इहि । यत् । ते । अनाधृष्टमित्यना-धृष्टम् । नाम । [२२] यज्ञियम् । तेन । त्वा । एति । दधे । सिꣳहीः । असि । महिषीः । असि । उरु । प्रथस्व । उरु । ते । यज्ञपतिरितियज्ञ-पतिः । प्रथताम् । ध्रुवा । असि । देवेभ्यः । शुन्धस्व । देवेभ्यः । शुम्भस्व । इन्द्रघोषइतीन्द्र-घोषः । त्वा । वसुभिरितिवसु-भिः । पुरस्तात् । पातु । मनोजवाइतिमनः-जवाः । त्वा । पितृभिरितिपितृ-भिः । दक्षिणतः । पातु । प्रचेताइतिप्र-चेताः । त्वा । रुद्रैः । पश्चात् । पातु । विश्वकर्मेतिविश्व-कर्मा । त्वा । आदित्यैः । उत्तरतइत्युत्-तरतः । पातु । सिꣳहीः । असि । सपत्नसाहीतिसपत्न-साही । स्वाहा । सिꣳहीः । असि । सुप्रजावनिरितिसुप्रजा-वनिः । स्वाहा । सिꣳहीः । [२३] असि । रायस्पोषवनिरितिरायस्पोष-वनिः । स्वाहा । सिꣳहीः । असि । आदित्यवनिरित्यादित्य-वनिः । स्वाहा । सिꣳहीः । असि । एति । वह । देवान् । देवयतइतिदेव-यते । यजमानाय । स्वाहा । भूतेभ्यः । त्वा । विश्वायुरितिविश्व-आयुः । असि । पृथिवीम् । दृꣳह । ध्रुवक्षिदितिध्रुव-क्षित् । असि । अन्तरिक्षम् । दृꣳह । अच्युतक्षिदित्यच्युत-क्षित् । असि । दिवम् । दृꣳह । अग्नेः । भस्म । असि । अग्नेः । पुरीषम् । असि ॥ [२४] नामसुप्रजावनिस्स्वाहा सिꣳहीःपञ्चत्रिꣳशच्च ॥

युञ्जते । मनः । उत । युञ्जते । धियः । विप्राः । विप्रस्य । बृहतः । विपश्चितः ॥ वीति । होत्राः । दधे । वयुनाविदितिवयुन-वित् । एकः । इत् । मही । देवस्य । सवितुः । परिष्टुतिरितिपरि-स्तुतिः ॥ सुवागितिसु-वाक् । देव । दुर्यान् । एति । वद । देवश्रुतावितिदेव-श्रुतौ । देवेषु । एति । घोषेथाम् । एति । नः । वीरः । जायताम् । कर्मण्यः । यम् । सर्वे । अनुजीवामेत्यनु-जीवाम । यः । बहूनाम् । असत् । वशी ॥ इदम् । विष्णुः । वीति । चक्रमे । त्रेधा । नीति । दधे । पदम् ॥ समूढमितिसं-ऊढम् । अस्य । [२५] । पाꣳसुरे । इरावतीइतीरा-वती । धेनुमतीइतिधेनु-मती । हि । भूतम् । सूयवसिनीइतिसु-यवसिनी । मनवे । यशस्येइति ॥ वीति । अस्कभ्नात् । रोदसीइति । विष्णुः । एतेइति । दाधार । पृथिवीम् । अभितः । मयूखैः ॥ प्राचीइति । प्रेति । इतम् । अध्वरम् । कल्पयन्तीइति । ऊर्ध्वम् । यज्ञम् । नयतम् । मा । जीह्वरतम् । अत्र । रमेथाम् । वर्ष्मन् । पृथिव्याः । दिवः । वा । विष्णो । उत । वा । पृथिव्याः । महः । वा । विष्णो ।

उत। वा। अन्तरिक्षात्। हस्तौ। पृणस्व। बहुभिरितिबहु-भिः। वसव्यैः। आ। प्रेति। यच्छ। [२६]। दक्षिणात्। एति। उत। सव्यात्॥ विष्णोः। नुकम्। वीर्याणि। प्रेति। वोचम्। यः। पार्थिवानि। विममइतिवि-ममे। रजाꣳसि। यः। अस्कभायत्। उत्तरमित्युत्-तरम्। सधस्थमितिसध-स्थम्। विचक्रमाणइतिवि-चक्रमाणः। त्रेधा। उरुगायइत्युरु-गायः। विष्णोः। रराटम्। असि। विष्णोः। पृष्ठम्। असि। विष्णोः। श्नप्त्रेइति। स्थः। विष्णोः। स्यूः। असि। विष्णोः। ध्रुवम्। असि। वैष्णवम्। असि। विष्णवे। त्वा॥ [२७] अस्ययच्छैकान्नचत्वारिꣳशच्च॥१३॥

कृणुष्व। पाजः। प्रसितिमितिप्र-सितिम्। न। पृथ्वीम्। याहि। राजा। इव। अमवानित्यम-वान्। इभेन॥ तृष्वीम्। अन्विति। प्रसितिमितिप्र-सितिम्। द्रूणानः। अस्ता। असि। विध्य। रक्षसः। तपिष्ठैः॥ तव। भ्रमासः। आशुया। पतन्ति। अन्विति। स्पृश। धृषता। शोशुचानः॥ तपूꣳषि। अग्ने। जुह्वा। पतङ्गान्। असंन्दितइत्यसं-दितः। वीति। सृज। विष्वक्। उल्काः॥ प्रतीति। स्पशः। वीति। सृज। तूर्णितमइतितूर्णि-तमः। भव। पायुः। विशः। अस्याः। अदब्धः॥ यः। नः। दूरे। अघशꣳसइत्यघ-शꣳसः। [२८] यः। अन्ति। अग्ने। माकिः। ते। व्यथिः। एति। दधर्षीत्॥ उदिति। अग्ने। तिष्ठ। प्रति। एति। तनुष्व। नीति। अमित्रान्। ओषतात्। तिग्महेतइतितिग्म-हेते॥ यः। नः। अरातिम्। समिधानेतिसं-इधान। चक्रे। नीचा। तम्। धक्षि। अतसम्। न। शुष्कम्॥ ऊर्ध्वः। भव। प्रतीति। विध्य। अधीति। अस्मत्। आविः। कृणुष्व। दैव्यानि। अग्ने॥ अवेति। स्थिरा। तनुहि। यातुजूनाम्। जामिम्। अजामिम्। प्रेति। मृणीहि। शत्रून्॥ सः। ते। [२९] जानाति। सुमतिमितिसु-मतिम्। यविष्ठ। यः। ईवते। ब्रह्मणे। गातुम्। ऐरत्॥ विश्वानि। अस्मै। सुदिनानीतिसु-दिनानि। रायः। द्युम्नानि। अर्यः। वीति। दुरः। अभीति। द्यौत्॥ सः। इत्। अग्ने। अस्तु। सुभगइतिसु-भगः। सुदानुरितिसु-दानुः। यः। त्वा। नित्येन। हविषा। यः। उक्थैः॥ पिप्रीषति। स्वे। आयुषि। दुरोणइतिदुः-ओने। विश्वा। इत्। अस्मै। सुदिनेतिसु-दिना। सा। असत्। इष्टिः॥ अर्चामि। ते। सुमतिमितिसु-मतिम्। घोषि। अर्वाक्। समिति। ते। वावाता। जरताम्। [३०] इयम्। गीः॥

**सुषदामितिसु-सदाम् । एति । सीद । मा । त्वा । हिंसीत् । मा । मा । हिंसीत् । नीति । ससाद । धृतव्रतइतिधृत-व्रतः । वरुणः । पस्त्यासु । एति । साम्राज्यायेतिसाम्-राज्याय । सुक्रतुरितिसु-क्रतुः । ब्रह्मा(३)न् । त्वम् । राजन् । ब्रह्मा । असि । सविता । असि । सत्यसवइतिसत्य-सवः । ब्रह्मा(३)न् । त्वम् ।**

---

१. 'ब्रह्मन्' इत्यत्र नकारात्पूर्वस्य अकारस्य प्लुतत्वम् । मात्रात्रयेणोच्चारणीयः प्लुतः । तदुक्तं शिक्षायाम्— 'ह्रस्वस्यादेकमात्रस्य द्विमात्रस्य तु दीर्घता । त्रिमात्रस्य प्लुतोऽर्चां हि पादो मात्राचतुर्थकः' इति ॥ प्लुताश्च परिगणिता शिक्षायाम्—

'पत्नीवाश्वेतव्याः कार्याश्चित्या रम्याः पताउच । होतव्यां सत्यराजांश्च सृज्यां प्राश्याश्च मीयता ॥
कर्तव्या सहस्रामद्राक् सोमाः कामाश्च हा इति । ब्रह्मान्त्वं द्विपदा हौषां स्थेया अग्नाइ वत्यगान् ॥
हावरत्नांश्छिनत्ती च जुहवानीच गच्छती । एतीलाजाञ्छाचीन् सर्वे त्वन्तोदात्ताः प्लुता इमे ॥

एते सर्वेशाचीनन्ताः अन्तोदात्ताः प्लुता इति विज्ञेयाः । यथा, पत्नीवा(3)स्सजूः । न्यग्नीग्नेश्चेतव्या(3)ः । वायव्यः कार्या(3)ः । न विचित्या(3)इति । नान्वारम्या(3)इति । यज्ञपता(3)विति । न होतव्या(3)मिति । सत्यराजा(३)न् । उत्सृज्या(3)न्न । प्राश्या(3)न्नप्राश्या(3)मिति । प्रचातुर्मास्ययाजीमीयता(3)नप्रमीयता(3)इति । द्वादशारत्नीरशना कर्तव्या(3)त्रयोदश । सहस्रा(3)मिति । सेति ह्रस्वेन किं? साहस्रश्चिन्वीत । अद्रा(3)गित्याह । सोमा(3)न । इयद्द्वादशविक्रामा(3)इति । आत्मन् हा (3)इत्यह्वयत् । ब्रह्मा(3)न्त्वꣳराजन् । द्विपदा(3)इति । माहौषा(3)मिति । नोपस्थेया(3)इति । गृह्णाम्यग्ना(3)इ । भवत्यगा(3)नग्नीत् । हा(3)वुहा(3)वुहा(3)वु । त्रयोदशारत्नी(3)रिति । सा न छिनत्ती(3)इति । जुहवानी (3)मा । कश्चनगच्छती(३) । सहस्रतम्यन्वेती(3) । लाजी(3)ञ्छाची(३)न् । अन्तोदात्ता इति किं? पत्नीव इत्याह । नदिव्याग्नेश्चेतव्य इति । उत्सृज्यमित्याहुः । सहस्रꣳसम्पाद्य । ब्रह्मन्त्वमसि । द्वादशारत्नीरशना भवति । कइदमच्छेतीति । इत्यादौ माभूत् । एवमादिविशेषणेन किं? मन्दधियां सम्यक् प्लुतस्थानदर्शनमस्त्विति ॥

पत्याइति गृहाइ त्वी उत्तानाइत्यवेरपाः । सोमपा असोमपाद्वावश्नुताउवतिष्ठिपाय् ॥
सावित्रान्नवेत्था द्वौ व्यमाग्निहोत्रान्नचेतिच । अवेत्योऽवभृथाना द्वौ रम्यःपशूश्श्रृतंहवीः ॥
स्थेयोऽग्नीर्धस्विदासीद्वावस्तुहीइ ववेन्दती ॥

एते प्लुता विशेषेण विज्ञेयाः । यथा, प्राजापत्या (3) इत्याहुः । इतीति किं? ते प्राजापत्या आग्नेयौ । गृहा(3)इ न । इ इति किं? गृहाभवन्तु । त्वी(3)इत्यब्रवीत् । पदोक्तपदमिति न्यायात्, एभीयाꣳसमिव कृत्वी इत्यत्र प्लुतत्वं न भवति । उत्ताना(3)इति वयसाम् । इतीति किं? उत्तानआङ्गिरसः । ननु 'उत्ताना(3): इत्यत्र मध्यमस्वरस्य प्लुतत्वम् किन्नस्यात्? उच्यते।सर्वेषां पदानां अन्त्यस्यैव प्लुतदर्शनात् । तर्हि 'गृहा(3)इ, यज्ञपता(3)उ, इत्यादावप्यन्त्यस्वरस्य किं न स्यात् । सुतरां परिहारः अवर्णप्लुतस्वरमिति । अवेरपा(3)इत्याह । अवेरिति किं? केनापइति । सोमपा(3)असोमपा(3)इति निगदव्याख्याताः । द्वौ इति किं? सोमपा बाहुशर्द्धी । कश्चिथ्समश्नुता (3)उ । उ इति किं? वाममश्नुतः।पुमान् । यज्ञंप्रत्यतिष्ठिपा (3) यज्ञपता (3)उ । वेत्थसावित्रा(3)न्नवेत्था(3)इति । द्वाविति किं? सावित्रं जुहोति । होतव्यमाग्निहोत्रा(3)न्नहोतव्यामिति । व्यमिति किं? अग्निहोत्रं जुहोति । न इति किं? पदद्वयमेकत्र वर्तते तत्पूर्वयोः प्लुतत्वमिति ग्रहणेऽपि तद्वाव्यायायमारंभ इति केचित् । अवेत्योवभृथा(3)ना(3)इति । द्वाविति किं? अवभृथेयानि । आङ्गिरसायान इत्याह । मित्रन्न इम् । अन्वारम्यः पशू(3)न । रम्यइति किं? अग्नेपशुर्नयवसे । श्रृतꣳहवी(3)श्शमितारिति । श्रृतमिति किं? अथ तद्धविरिति । उपस्थेयोऽग्नी(3)न । स्थेयइति किं? अग्निर्नाभिमृशे । अधस्विदासी(3)दुपरिस्विदासी(3)त् । द्वाविति किं? किꣳ स्विदासीत् । अस्तुही(3)इत्यब्रूतां । अस्त्विति किं? न हीमे यजुषा । इ इति किं? स्तुहि श्रुतं, इति केचित् । नत्वाभीरिव विन्दती(3) । वेति किं? याम्य एवेनं विन्दति ॥

राजन्न् । ब्रह्मा । असि । इन्द्रः । असि । सत्यौजाइतिसत्य-ओजाः । [ ३१ ] ब्रह्मा(३)न् । त्वम् । राजन्न् । ब्रह्मा । असि । मित्रः । असि । सुशेवइतिसु-शेवः । ब्रह्मा(३)न् । त्वम् । राजन्न् । ब्रह्मा । असि । वरुणः । असि । सत्यधर्मेतिसत्य-धर्मा । इन्द्रस्य । वज्रः । असि । वार्त्रघ्नइतिवार्त्र-घ्नः । तेन । मे । रध्य । दिशः । अभीति । अयम् । राजा । अभूत् । सुश्लोकाँ(४)इतिसु-श्लोकाँ(४) । सुमङ्गलाँ (४)इतिसु-मङ्गलाँ(४) । सत्यराजा(३)नितिसत्य-राजा(३)न् ॥ अपाम् । नप्त्रे । स्वाहा । ऊर्जः । नप्त्रे । स्वाहा । अग्नये । गृहपतयइतिगृह-पतये । स्वाहा ॥ [ ३२ ] सत्यौजाश्चत्वारिꣳशच्च ॥ ❀ ❀ ❀ ❀ ❀ ॥ १६ ॥

आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । हिरण्यम् । दक्षिणा । सारस्वतम् । चरुम् । वथ्सतरी । दक्षिणा । सावित्रम् । द्वादशकपालमितिद्वादश-कपालम् । उपध्वस्तइत्युप-ध्वस्तः । दक्षिणा । पौष्णम् । चरुम् । श्यामः । दक्षिणा । बार्हस्पत्यम् । चरुम् । शितिपृष्ठइतिशिति-पृष्ठः । दक्षिणा । ऐन्द्रम् । एकादशकपालमित्येकादश-कपालम् । ऋषभः । दक्षिणा । वारुणम् । दशकपालमितिदश-कपालम् । महानिरष्टइतिमहा-निरष्टः । दक्षिणा । सौम्यम् । चरुम् । बभ्रुः । दक्षिणा । त्वाष्ट्रम् । अष्टाकपालमित्यष्टा-कपालम् । शुण्ठः । दक्षिणा । वैष्णवम् । त्रिकपालमितित्रि-कपालम् । वामनः । दक्षिणा ॥ [ ३३ ] आग्नेयꣳहिरण्यꣳसारस्वतन्द्विचत्वारिꣳशत् ॥ ❀ ❀ ❀ ॥ १७ ॥

---

१. 'सुश्लोके'त्यत्र ककारात् परः प्लुतः अकारः अनुनासिको भवति । तदुक्तं प्रातिशाख्ये—अकारस्तु संहितायामपि' इति ॥ अस्यार्थः—तुशब्दः 'अप्रग्रहास्समानाक्षराण्यनुनासिकान्येकेषाम्' 'पदश्च प्लुतꣳशाङ्खायनकाण्डमायनयोः' इति सूत्रयोः परमतयोर्विनिवर्तकः । अपिशब्दस्समुच्चये । पदान्तः प्लुतः अकारः संहितायां पदविभागेऽपि अनुनासिको भवति । अस्य च रङ्गसंज्ञत्वं विधीयते शिक्षायाम्—'अकारोऽन्तः प्लुतो यश्चेदनुनासिक उच्यते । अमत्रध्वनितुल्यश्च रङ्गसंज्ञ इतीर्यते' ॥ इति ॥ चतुर्मात्रत्वादिकश्चास्य विधीयते शिक्षान्तरे—'रङ्गप्लुते व्याघ्रशब्दः पूर्वभागे विधीयते । मात्राद्वयं तु तत्रैव तथा निरनुनासिकम् ॥ मूर्धस्थाने तृतीयांशः कांस्यध्वनिसमस्तथा । कंपः श्लिष्टस्तथा चैव मात्रिकासहितस्तथा ॥ चरमांशस्तु नासिक्ये बिलद्वये तथैव च । निसृतांशस्तु तत्रैव मात्रिकासहितस्तथा ॥ एवं रङ्गप्लुताः प्रोक्ताश्चतुर्मात्रास्समीरिताः ॥" इति ॥ रङ्गप्लुतान् परिगणयति शिक्षाकारः—श्लोका गला ममा हूता यद्घ्रा एवेति च प्लुताः' इति । अस्यार्थः—श्लोकादिषु पञ्चसु पदेषु अन्त्यस्वराः उदात्ताः रङ्गप्लुता भवन्ति । यथा—सुश्लोकाँ(४) । सुमङ्गलाँ(४) । यशोममाँ(४) । उपहूताँ(४) । यद्घ्राँ(४) । शिक्षान्तरेऽपि—पूर्वो वर्णः पदान्तस्थो नासिक्यो रङ्गसंज्ञितः । कांस्यध्वनिसमं रङ्गं हृदयादुत्थितं वदेत् ॥ चत्वारः काठके रङ्गा दीर्घा ह्यारण्यके विदुः । पञ्च रङ्गाः प्लुता दीर्घाश्चत्वारस्तैत्तिरीयके ॥ श्लोका सुमङ्गला यद्घ्रा उपहूता ममा प्लुताः' इति ॥

सद्यः । दीक्षयन्ति । सद्यः । सोमम् । क्रीणन्ति । पुण्डरिस्रजाम् । प्रेति । यच्छति । दशभिरितिदश-भिः । वथ्सतरैः । सोमम् । क्रीणाति । दशपेयइतिदश-पेयः । भवति । शतम् । ब्राह्मणाः । पिबन्ति । सप्तदशमितिसप्त-दशम् । स्तोत्रम् । भवति । प्राकाशौ । अध्वर्यवे । ददाति । स्रजम् । उद्गात्रइत्युत्-गात्रे । रुक्मम् । होत्रे । अश्वम् । प्रस्तोतृप्रतिहर्तृभ्यामितिप्रस्तोतृप्रतिहर्तृ-भ्याम् । द्वादश । पष्ठौहीः । ब्रह्मणे । वशाम् । मैत्रावरुणायेतिमैत्रा-वरुणाय । ऋषभम् । ब्राह्मणाच्छꣳसिने । वासꣳसीइति । नेष्टापोतृभ्यामितिनेष्टापोतृ-भ्याम् । स्थूरि । यवाचितमितियव-आचितम् । अच्छावाकाय । अनड्वाहम् । अग्नीधइत्यग्नि-इधे । भार्गवः । होता । भवति । श्रायन्तीयम् । ब्रह्मसाममितिब्रह्म-सामम् । भवति । वारवन्तीयमितिवार-वन्तीयम् । अग्निष्टोमसाममित्यग्निष्टोम-सामम् । सारस्वतीः । अपः । गृह्णाति ॥ [३४] वारवन्तीयंश्चत्वारिंच ॥ ✻ ✻ ✻ ✻ ✻ ॥१८॥

आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । हिरण्यम् । दक्षिणा । ऐन्द्रम् । एकादशकपालमित्येकादश-कपालम् । ऋषभः । दक्षिणा । वैश्वदेवमितिवैश्व-देवम् । चरुम् । पिशङ्गी । पष्ठौही । दक्षिणा । मैत्रावरुणीमितिमैत्रा-वरुणीम् । आमिक्षाम् । वशा । दक्षिणा । बार्हस्पत्यम् । चरुम् । शितिपृष्ठइतिशिति-पृष्ठः । दक्षिणा । आदित्याम् । मलूहाम् । गर्भिणीम् । एति । लभते । मारुतीम् । पृश्निम् । पष्ठौहीम् । अश्विभ्यामित्यश्वि-भ्याम् । पूष्णे । पुरोडाशम् । द्वादशकपालमितिद्वादश-कपालम् । निरिति । वपति । सरस्वते । सत्यवाचइतिसत्य-वाचे । चरुम् । सवित्रे । सत्यप्रसवायेतिसत्य-प्रसवाय । पुरोडाशम् । द्वादशकपालमितिद्वादश-कपालम् । तिसृधन्वमितितिसृ-धन्वम् । शुष्कदृतिरितिशुष्क-दृतिः । दक्षिणा ॥ [३५] आग्नेयꣳहिरण्यमैन्द्रमृषभोवैश्वदेवम्पिशङ्गीबार्हस्पत्यमादित्याꣳसप्तचत्वारिꣳशत् ॥ ॥१९॥

आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । सौम्यम् । चरुम् । सावित्रम् । द्वादशकपालमितिद्वादश-कपालम् । बार्हस्पत्यम् । चरुम् । त्वाष्ट्रम् । अष्टाकपालमित्यष्टा-कपालम् । वैश्वानरम् । द्वादशकपालमितिद्वादश-क

पालम् । दक्षिणः । रथवाहनवाहइतिरथवाहन-वाहः । दक्षिणा । सारस्वतम् । चरुम् । निरिति । वपति । पौष्णम् । चरुम् । मैत्रम् । चरुम् । वारुणम् । चरुम् । क्षैत्रपत्यमितिक्षैत्र-पत्यम् । चरुम् । आदित्यम् । चरुम् । उत्तरइत्युत्-तरः । रथवाहनवाहइतिरथवाहन-वाहः । दक्षिणा ॥ [३६] आग्नेयꣳसौम्यम्बार्हस्पत्यञ्चतुस्त्रिꣳशत् ॥

स्वाद्वीम् । त्वा । स्वादुना । तीव्राम् । तीव्रेण । अमृताम् । अमृतेन । सृजामि । समिति । सोमेन । सोमः । असि । अश्विभ्यामित्यश्वि-भ्याम् । पच्यस्व । सरस्वत्यै । पच्यस्व । इन्द्राय । सुत्राम्णइतिसु-त्राम्णे । पच्यस्व । पुनातु । ते । परिस्रुतमितिपरि-स्रुतम् । सोमम् । सूर्यस्य । दुहिता ॥ वारेण । शश्वता । तना ॥ वायुः । पूतः । पवित्रेण । प्रत्यङ् । सोमः । अतिद्रुतइत्यति-द्रुतः ॥ इन्द्रस्य । युज्यः । सखा ॥ कुवित् । अङ्ग । यवमन्तइतियव-मन्तः । यवम् । चित् । यथा । दान्ति । अनुपूर्वमित्यनु-पूर्वम् । वियूयेतिवि-यूय ॥ इहेहेतीह-इह । एषाम् । कृणुत । भोजनानि । ये । बर्हिषः । नमोवृक्तिमितिनमः-वृक्तिम् । न । जग्मुः ॥ आश्विनम् । धूम्रम् । एति । लभते । सारस्वतम् । मेषम् । ऐन्द्रम् । ऋषभम् । ऐन्द्रम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपति । सावित्रम् । द्वादशकपालमितिद्वादश-कपालम् । वारुणम् । दशकपालमितिदश-कपालम् । सोमप्रतीकाइतिसोम-प्रतीकाः । पितरः । तृप्णुत । वडबा । दक्षिणा ॥ [३७] भोजनानिषड्विꣳशतिश्च ॥ २१ ॥

अग्नाविष्णूइत्यग्ना-विष्णू । महि । तत् । वाम् । महित्वमितिमहि-त्वम् । वीतम् । घृतस्य । गुह्यानि । नाम ॥ दमेदमइतिदमे-दमे । सप्त । रत्ना । दधाना । प्रतीति । वाम् । जिह्वा । घृतम् । एति । चरण्येत् ॥ अग्नाविष्णूइत्यग्ना-विष्णू । महि । धाम । प्रियम् । वाम् । वीथः । घृतस्य । गुह्या । जुषाणा ॥ दमेदमइतिदमे-दमे । सुष्टुतीरितिसु-स्तुतीः । वावृधाना । प्रतीति । वाम् । जिह्वा । घृतम् । उदिति । चरण्येत् ॥ प्रेति । नः । देवी । सरस्वती । वाजेभिः । वाजिनीवतीतिवाजिनी-वती ॥ धीनाम् । अवित्री । अवतु ॥ एति । नः । दिवः । बृहतः । [३८] पर्वतात् । एति । सरस्वती । यजता । गन्तु । यज्ञम् ॥ हवम् । देवी । जुजुषाणा । घृताची । शग्माम् । नः । वाचम् । उशती । शृणोतु ॥ बृहस्पते । जुषस्व । नः ।

हव्यानि । विश्वदेव्येतिविश्व-देव्य ॥ रास्व । रत्नानि । दाशुषे ॥ एवा । पित्रे । विश्व देवायेतिविश्व-देवाय । वृष्णे । यज्ञैः । विधेम । नमसा । हविर्भिरितिहविः-भिः ॥ बृहस्पते । सुप्रजाइतिसु-प्रजाः । वीरवन्तइतिवीर-वन्तः । वयम् । स्याम । पतयः । रयीणाम् ॥ बृहस्पते । अतीति । यत् । अर्यः । अर्हात् । द्युमदितिद्यु-मत् । वि भातीतिवि-भाति । क्रतुमदितिक्रतु-मत् । जनेषु ॥ यत् । दीदयत् । शवसा । [३९] ऋतप्रजातेत्यृत-प्रजात । तत् । अस्मासु । द्रविणम् । धेहि । चित्रम् ॥ एति । नः । मित्रावरुणेतिमित्रा-वरुणा । घृतैः । गव्यूतिम् । उक्षतम् ॥ मध्वा । रजांसि । सुक्रतूइतिसु-क्रतू ॥ प्रेति । बाहवा । सिसृतम् । जीवसे । नः । एति । नः । गव्यूतिम् । उक्षतम् । घृतेन ॥ एति । नः । जने । श्रवयतम् । युवाना । श्रुतम् । मे । मित्रावरुणेतिमित्रा-वरुणा । हवा । इमा ॥ अग्निम् । वः । पूर्व्यम् । गिरा । देवम् । ईडे । वसूनाम् ॥ सपर्यन्तः । पुरुप्रियमितिपुरु-प्रियम् । मित्रम् । न । क्षेत्रसाधसमितिक्षेत्र-साधसम् ॥ मक्षु । देववतइतिदेव-वतः । रथः । [४०] शूरः । वा । पृत्स्वितिपृत् सु । कासु । चित् ॥ देवानाम् । यः । इत् । मनः । यजमानः । इयक्षति । अभीति । इत् ॥ अयज्वनः । भुवत् ॥ न । यजमान । रिष्यसि । न । सुन्वान । न । देवयोइतिदेव-यो ॥ असत् । अत्र । सुवीर्यमितिसु-वीर्यम् । उत । त्यत् । आश्वश्व्यमित्याशु-अश्व्यम् ॥ नकिः । तम् । कर्मणा । नशत् । न । प्रेति । योषत् । न । योषति ॥ उपेति । क्षरन्ति । सिन्धवः । मयोभुवइतिमयः-भुवः । ईजानम् । च । यक्ष्यमाणम् । च । धेनवः ॥ पृणन्तम् । च । पपुरिम् । च । [४१] श्रवस्यवः । घृतस्य । धाराः । उपेति । यन्ति । विश्वतः ॥ सोमारुद्रेतिसोमा-रुद्रा । वीति । वृहतम् । विषूचीम् । अमीवा । या । नः । गयम् । आविवेशेत्या-विवेश ॥ आरे । बाधेथाम् । निर्ऋतिमितिनिः-ऋतिम् । पराचैः । कृतम् । चित् । एनः । प्रेति । मुमुक्तम् । अस्मत् ॥ सोमारुद्रेतिसोमा-रुद्रा । युवम् । एतानि । अस्मेइति । विश्वा । तनूषु । भेषजानि । धत्तम् ॥ अवेति । स्यतम् । मुञ्चतम् । यत् । नः । अस्ति । तनूषु । बद्धम् । कृतम् । एनः । अस्मत् ॥ सोमापूषणेतिसोमा-पूषणा । जनना । रयीणाम् । जनना । दिवः । जनना । पृथिव्याः ॥ जातौ । विश्वस्य । भुवनस्य । गोपौ । देवाः । अकृण्वन् । अमृतस्य । नाभिम् ॥ इमौ । देवौ । जायमानौ । जुषन्त । इमौ ।

तमा॑ꣳसि । गू॒ह॒ताम् । अजु॑ष्टा ॥ आ॒भ्याम् । इन्द्रः॑ । प॒क्वम् । आ॒मासु॑ । अ॒न्तः । सो॒मा॒पूषभ्या॒मिति॑सोमापूष-भ्या॒म् । ज॒न॒त् । उ॒स्रिया॑सु ॥ [४२] बृ॒ह॒तश्शर्वसा॒र थुःपर्पुरिश्नदि॒वोजनं॑ना॒पञ्चंवि॑ꣳशतिश्च ॥ ❀ ❀ ❀॥२२॥

अनु॑मत्याआ॒ग्ने॒यमैन्द्रा॒ग्नम॒ग्नये॒सोमा॑यप्रतिपूरु॒षमैन्द्रा॒ग्नमन्धा॒ने बा॑र्ह॒स्पत्यम॒ग्नये॒ ऽथैतो॒देवी॑स्स॒मिधꣳ॑सोम॒स्येन्द्र॑स्य मि॒त्रआ॑ग्ने॒यꣳ स॒द्यआ॑ग्ने॒यमा॑ग्ने॒यꣳस्वा॒द्वीन्त्वाऽग्ना॑ वैष्ण॒वद्वावि॑ꣳशतिः ॥२२॥ अनु॑मत्यै॒यथाऽसं॑ति दे॒वीरा॑पो मि॒त्रो॑ऽसि॒शूरो॑वा॒ द्विचंत्वा रि॑ꣳशत् ॥ ४२ ॥ अनु॑मत्याउ॒स्रिया॑सु ॥ ❀ ❀ ❀ ❀

हरिः॑ ओ (३) म् ॥

इति प्रथमकाण्डे अष्टमः प्रश्नः ॥

तैत्तिरीयसंहितापदपाठे प्रथमकाण्डस्समाप्तः ॥

## —❀प्रथमकाण्डस्य प्रश्नादिसङ्ख्यानिर्णयः❀—

| प्रश्नाः | अनुवाकाः | पञ्चाशतः | पदानि |
|---|---|---|---|
| १ | १४ | २८ | १५३० |
| २ | १४ | ३४ | १६९० |
| ३ | १४ | ३१ | १५६७ |
| ४ | ४६ | ५४ | १८०० |
| ५ | ११ | ५१ | २७१७ |
| ६ | १२ | ५१ | २५०९ |
| ७ | १३ | ५१ | २६५५ |
| ८ | २२ | ४२ | २०९४ |
| —❀संहतसङ्ख्या❀— | | | |
| ८ | १४६ | ३४२ | १६५६२ |

श्रीः ।

# तैत्तिरीयसंहितापदपाठे

## द्वितीयकाण्डे प्रथमप्रश्नः ॥

हरिः ओ (४) म् ॥

वायव्यंम् । श्वेतम् । एति । लभेत । भूतिकामइतिभूति-कामः । वायुः । वै । क्षेपिष्ठा । देवता । वायुम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । एनम् । भूतिम् । गमयति । भवति । एव । अतिक्षिप्रेत्यति-क्षिप्रा । देवता । इति । आहुः । सा । एनम् । ईश्वरा । प्रदहइतिप्र-दहः । इति । एतम् । एव । सन्तम् । वायवे । नियुत्वतइतिनि-युत्वते । एति । लभेत । नियुदितिनि-युत् । वै । अस्य । धृतिः । धृतः । एव । भूतिम् । उपेति । एति । अप्रदाहायेत्यप्र-दाहाय । भवति । एव । [१] वायवे । नियुत्वतइतिनि-युत्वते । एति । लभेत । ग्रामकामइतिग्राम-कामः । वायुः । वै । इमाः । प्रजाइतिप्र-जाः । नस्योताइतिनासि-ओताः । नेनीयते । वायुम् । एव । नियुत्वन्तमितिनि-युत्वन्तम् । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । प्रजाइतिप्र-जाः । नस्योताइतिनसि-ओताः । नीति । यच्छति । ग्रामी । एव । भवति । नियुत्वतइतिनि-युत्वते । भवति । ध्रुवाः । एव । अस्मै । अनपगाइत्यनप-गाः । करोति । वायवे । नियुत्वतइतिनि-युत्वते । एति । लभेत । प्रजाकामइतिप्रजा-कामः । प्राणइतिप्र-अनः । वै । वायुः । अपानइत्यप-अनः । नियुदितिनि-युत् । प्राणापानावितिप्राण-अपानौ । खलु । वै । एतस्य । प्रजायाइतिप्र-जायाः । [२] अपेति । क्रामतः । अलम् । प्रजायाइतिप्र-जायै । सन् । प्रजामितिप्र-जाम् । न । विन्दते । वायुम् । एव । नियुत्वन्तमितिनि-युत्वन्तम् । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । प्राणापानाभ्यामितिप्राण-अपानाभ्याम् । प्रजामितिप्र-जाम् । प्रेति । जनयति । विन्दते । प्रजामितिप्र-जाम् । वायवे । नियुत्वतइतिनि-युत्वते । एति । लभेत । ज्योगामयावीतिज्योक्-आमयावी । प्राणइति

प्र-अनः । वै । वायुः । अपानइत्यप-अनः । नियुदितिनि-युत् । प्राणापानाविर्तिप्राण-अपानौ । खलुं । वै । एतस्मात् । अपेति । क्रामतः । यस्य । ज्योक् । आमयति । वायुम् । एव । नियुत्वन्तमितिनि-युत्वन्तम् । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । [३] धावति । सः । एव । अस्मिन्न् । प्राणापानाविर्तिप्राण-अपानौ । दधाति । उत । यदिं । इतासुरितीत-असुः । भवति । जीवति । एव । प्रजापतिरितिप्रजा-पतिः । वै । इदम् । एकः । आसीत् । सः । अकामयत । प्रजाइतिप्र-जाः । पशून् । सृजेय । इतिं । सः । आत्मनः । वपाम् । उदिति । अखिदत् । ताम् । अग्नौ । प्रेतिं । अगृह्णात् । ततः । अजः । तूपरः । समिति । अभवत् । तम् । स्वायै । देवतायै । एति । अलभत । ततः । वै । सः । प्रजाइतिप्र-जाः । पशून् । असृजत । यः । प्रजाकामइतिप्रजा-कामः । [४] पशुकामइतिपशु-कामः । स्यात् । सः । एतम् । प्राजापत्यमितिप्राजा-पत्यम् । अजम् । तूपरम् । एति । लभेत । प्रजापतिमितिप्रजा-पतिम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । प्रजामितिप्र-जाम् । पशून् । प्रेति । जनयति । यत् । श्मश्रुणः । तत् । पुरुषाणाम् । रूपम् । यत् । तूपरः । तत् । अश्वानाम् । यत् । अन्यतोदन्नित्यन्यतः-दन्न् । तत् । गवाम् । यत् । अव्याः । इव । शफाः । तत् । अवीनाम् । यत् । अजः । तत् । अजानाम् । एतावन्तः । वै । ग्राम्याः । पशवः । तान् । [५] रूपेण । एव । अवेति । रुन्धे । सोमापौष्णमितिसोमा-पौष्णम् । त्रैतम् । एति । लभेत । पशुकामइतिपशु-कामः । द्वौ । वै । अजायै । स्तनौ । नाना । एव । द्वौ । अभीति । जायेतेइति । ऊर्जम् । पुष्टिम् । तृतीयः । सोमापूषणाविर्तिसोमा-पूषणौ । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । तौ । एव । अस्मै । पशून् । प्रेति । जनयतः । सोमः । वै । रेतोधाइतिरेतः-धाः । पूषा । पशूनाम् । प्रजनयितेतिप्र-जनयिता । सोमः । एव । अस्मै । रेतः । दधाति । पूषा । पशून् । प्रेति । जनयति । औदुम्बरः । यूपः । भवति । ऊर्क् । वै । उदुम्बरः । ऊर्क् । पशवः । ऊर्जा । एव । अस्मै । ऊर्जम् । पशून् । अवेति । रुन्धे ॥ [६] अपंदाहायभवत्येवप्रजायाआमयतिवायुमेवनियुत्वन्तꣳस्वेनभागधेयेनोपप्रजाकामस्तान्यूपस्त्रयोदशच ॥ ❀ ❀ ॥१॥

प्रजापतिरितिप्रजा-पतिः । प्रजाइतिप्र-जाः । असृजत । ताः । अस्मात् । सृष्टाः । पराचीः । आयन्न् । ताः । वरुणम् । अगच्छन्न् । ताः । अन्विति । ऐत् । ताः । पुनः । अयाचत । ताः । अस्मै । न । पुनः । अददात् । सः । अब्रवीत् । वरम् । वृणीष्व । अथ । मे । पुनः । देहि । इति । तासाम् । वरम् । एति । अलभत । सः । कृष्णः । एकशितिपादित्येक-शितिपात् । अभवत् । यः । वरुण गृहीतइतिवरुण-गृहीतः । स्यात् । सः । एतम् । वारुणम् । कृष्णम् । एकशितिपादमित्येक-शितिपादम् । एति । लभेत । वरुणम् । [७] एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । एनम् । वरुणपाशादितिवरुण-पाशात् । मुञ्चति । कृष्णः । एकशितिपादित्येक-शितिपात् । भवति । वारुणः । हि । एषः । देवतया । समृद्ध्याइतिसं-ऋद्ध्यै । सुवर्भानुरितिसुवः-भानुः । आसुरः । सूर्यम् । तमसा । अविध्यत् । तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन्न् । तस्य । यत् । प्रथमम् । तमः । अपाघ्नन्नित्यप-अघ्नन्न् । सा । कृष्णा । अविः । अभवत् । यत् । द्वितीयम् । सा । फल्गुनी । यत् । तृतीयम् । सा । बलक्षी । यत् । अध्यस्थादित्यधि-अस्थात् । अपाकृन्तन्नित्यप-अकृन्तन्न् । सा । अविः । वशा । [८] । समिति । अभवत् । ते । देवाः । अब्रुवन्न् । देवपशुरितिदेव-पशुः । वै । अयम् । समिति । अभूत् । कस्मै । इमम् । एति । लप्स्यामहे । इति । अथ । वै । तर्हि । अल्पा । पृथिवी । आसीत् । अजाताः । ओषधयः । ताम् । अविम् । वशाम् । आदित्येभ्यः । कामाय । एति । अलभन्त । ततः । वै । अप्रथत । पृथिवी । अजायन्त । ओषधयः । यः । कामयेत । प्रथेय । पशुभिरितिपशु-भिः । प्रेति । प्रजयेतिप्र-जया । जायेय । इति । सः । एताम् । अविम् । वशाम् । आदित्येभ्यः । कामाय । [९] एति । लभेत । आदित्यान् । एव । कामम् । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । ते । एव । एनम् । प्रथयन्ति । पशुभिरितिपशु-भिः । प्रेति । प्रजयेतिप्र-जया । जनयन्ति । असौ । आदित्यः । न । वीति । अरोचत । तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन्न् । तस्मै । एताः । मल्हाः । एति । अलभन्त । आग्नेयीम् । कृष्णग्रीवीमितिकृष्ण-ग्रीवीम् । संहितामितिसं-हिताम् । ऐन्द्रीम् । श्वेताम् । बार्हस्पत्याम् । ताभिः । एव । अस्मिन्न् ।

रुचम् । अदधुः । यः । ब्रह्मवर्चसकामइतिब्रह्मवर्चस-कामः । स्यात् । तस्मै । एताः । मलूहाः । एति । लभेत । [१०] आग्नेयीम् । कृष्णग्रीवीमितिकृष्ण-ग्रीवीम् । सꣳहितामितिसं-हिताम् । ऐन्द्रीम् । श्वेताम् । बार्हस्पत्याम् । एताः । एव । देवताः । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । ताः । एव । अस्मिन्न् । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । दधति । ब्रह्मवर्चसीतिब्रह्म-वर्चसी । एव । भवति । वसन्ता । प्रातः । आग्नेयीम् । कृष्णग्रीवीमितिकृष्ण-ग्रीवीम् । एति । लभेत । ग्रीष्मे । मध्यन्दिने । सꣳहितामितिसं-हिताम् । ऐन्द्रीम् । शरदि । अपराह्णइत्यपर-अह्ने । श्वेताम् । बार्हस्पत्याम् । त्रीणि । वै । आदित्यस्य । तेजाꣳसि । वसन्ता । प्रातः । ग्रीष्मे । मध्यन्दिने । शरदि । अपराह्णइत्यपर-अह्ने । यावन्ति । एव । तेजाꣳसि । तानि । एव । [११] अवेति । रुन्धे । सँवथ्सरमितिसं-वथ्सरम् । पर्यालभ्यन्त इतिपरि-आलभ्यन्ते । सँवथ्सरइतिसं-वथ्सरः । वै । ब्रह्मवर्चसस्येतिब्रह्म-वर्चसस्य । प्रदातेतिप्र-दाता । सँवथ्सरइतिसं-वथ्सरः । एव । अस्मै । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । प्रेति । यच्छति । ब्रह्मवर्चसीतिब्रह्म-वर्चसी । एव । भवति । गर्भिणयः । भवन्ति । इन्द्रियम् । वै । गर्भः । इन्द्रियम् । एव । अस्मिन्न् । दधति । सारस्वतीम् । मेषीम् । एति । लभेत । यः । ईश्वरः । वाचः । वदितोः । सन्न् । वाचम् । न । वदेत् । वाक् । वै । सरस्वती । सरस्वतीम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सा । एव । अस्मिन्न् । [१२] वाचम् । दधाति । प्रवदितेतिप्र-वदिता । वाचः । भवति । अपन्नदतीत्यपन्न-दती । भवति । तस्मात् । मनुष्याः । सर्वाम् । वाचम् । वदन्ति । आग्नेयम् । कृष्णग्रीवमितिकृष्ण-ग्रीवम् । एति । लभेत । सौम्यम् । बभ्रुम् । ज्योगामयावीतिज्योक्-आमयावी । अग्निम् । वै । एतस्य । शरीरम् । गच्छति । सोमम् । रसः । यस्य । ज्योक् । आमयति । अग्नेः । एव । अस्य । शरीरम् । निष्क्रीणातीतिनिः-क्रीणाति । सोमात् । रसम् । उत । यदि । इतासुरितीत-असुः । भवति । जीवति । एव । सौम्यम् । बभ्रुम् । एति । लभेत । आग्नेयम् । कृष्णग्रीवमितिकृष्ण-ग्रीवम् । प्रजाकामइतिप्रजा-कामः । सोमः । [१३] वै । रेतोधाइतिरेतः-धाः । अग्निः । प्रजानामितिप्र-जानाम् । प्रजनयितेतिप्र-जनयिता । सोमः । एव । अस्मै । रेतः । दधाति । अग्निः । प्रजामितिप्र-

जाम् । प्रेति । जनयति । विन्दते । प्रजामितिप्र-जाम् । आग्नेयम् । कृष्णग्रीवमितिकृष्ण-ग्रीवम् । एति । लभेत । सौम्यम् । बभ्रुम् । यः । ब्राह्मणः । विद्याम् । अनूच्येत्यनु-उच्य । न । विरोचेतेतिवि-रोचेत । यत् । आग्नेयः । भवति । तेजः । एव । अस्मिन् । तेन । दधाति । यत् । सौम्यः । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । तेन । कृष्णग्रीवइतिकृष्ण-ग्रीवः । आग्नेयः । भवति । तमः । एव । अस्मात् । अपेति । हन्ति । श्वेतः । भवति । [१४] रुचम् । एव । अस्मिन् । दधाति । बभ्रुः । सौम्यः । भवति । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । एव । अस्मिन् । त्विषिम् । दधाति । आग्नेयम् । कृष्णग्रीवमितिकृष्ण-ग्रीवम् । एति । लभेत । सौम्यम् । बभ्रुम् । आग्नेयम् । कृष्णग्रीवमितिकृष्ण-ग्रीवम् । पुरोधायामितिपुरः-धायाम् । स्पर्धमानः । आग्नेयः । वै । ब्राह्मणः । सौम्यः । राजन्यः । अभितः । सौम्यम् । आग्नेयौ । भवतः । तेजसा । एव । ब्रह्मणा । उभयतः । राष्ट्रम् । परीति । गृह्णाति । एकधेत्येकधा । समावृङ्क्तइतिसं-आवृङ्क्ते । पुरः । एनम् । दधते ॥ [१५] लभेतवरुणं स्वशैतामविँस्वशामादित्येभ्यः कामायमलूहाआलभेततान्येवसैवास्मिन्थ्सोमश्श्वेतो भवतित्रिचत्वारिꣳशच्च ॥ ❀ ❀ ❀ ❀ ॥२॥

देवासुराइतिदेव-असुराः । एषु । लोकेषु । अस्पर्धन्त । सः । एतम् । विष्णुः । वामनम् । अपश्यत् । तम् । स्वायै । देवतायै । एति । अलभत । ततः । वै । सः । इमान् । लोकान् । अभीति । अजयत् । वैष्णवम् । वामनम् । एति । लभेत । स्पर्द्धमानः । विष्णुः । एव । भूत्वा । इमान् । लोकान् । अभीति । जयति । विषमइतिवि-समे । एति । लभेत । विषमाइतिवि-समाः । इव । हि । इमे । लोकाः । समृद्ध्याइतिसं-ऋद्ध्यै । इन्द्राय । मन्युमतइतिमन्यु-मते । मनस्वते । ललामम् । प्राशृङ्गम् । एति । लभेत । सङ्ग्रामइतिसं-ग्रामे । [१६] सय्यत्तइतिसं-यत्ते । इन्द्रियेण । वै । मन्युना । मनसा । सङ्ग्राममितिसं-ग्रामम् । जयति । इन्द्रम् । एव । मन्युमन्तमितिमन्यु-मन्तम् । मनस्वन्तम् । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मिन् । इन्द्रियम् । मन्युम् । मनः । दधाति । जयति । तम् । सङ्ग्राममितिसं-ग्रामम् । इन्द्राय । मरुत्वते । पृश्निसक्थमितिपृश्नि-सक्थम् । एति ।

लभेत । ग्रामकामइतिग्राम-कामः । इन्द्रम् । एव । मरुत्वन्तम् । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । सजातानितिस-जातान् । प्रेति । यच्छति । ग्रामी । एव । भवति । यत् । ऋषभः । तेन । [१७] ऐन्द्रः । यत् । पृश्निः । तेन । मारुतः । समृद्ध्याइतिसं-ऋद्ध्यै । पश्चात् । पृश्निसक्थइतिपृश्नि-सक्थः । भवति । पश्चादन्ववसायिनीमितिपश्चात्-अन्ववसायिनीम् । एव । अस्मै । विशम् । करोति । सौम्यम् । बभ्रुम् । एति । लभेत । अन्नकामइत्यन्न-कामः । सौम्यम् । वै । अन्नम् । सोमम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । अन्नम् । प्रेति । यच्छति । अन्नादइत्यन्न-अदः । एव । भवति । बभ्रुः । भवति । एतत् । वै । अन्नस्य । रूपम् । समृद्ध्याइतिसं-ऋद्ध्यै । सौम्यम् । बभ्रुम् । एति । लभेत । यम् । अलम् । [१८] राज्याय । सन्तम् । राज्यम् । न । उपनमेदित्युप-नमेत् । सौम्यम् । वै । राज्यम् । सोमम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । राज्यम् । प्रेति । यच्छति । उपेति । एनम् । राज्यम् । नमति । बभ्रुः । भवति । एतत् । वै । सोमस्य । रूपम् । समृद्ध्याइतिसं-ऋद्ध्यै । इन्द्राय । वृत्रतुरइतिवृत्र-तुरे । ललामम् । प्राशृङ्गम् । एति । लभेत । गतश्रीरितिगत-श्रीः । प्रतिष्ठाकामइतिप्रतिष्ठा-कामः । पाप्मानम् । एव । वृत्रम् । तीर्त्वा । प्रतिष्ठामितिप्रति-स्थाम् । गच्छति । इन्द्राय । अभिमातिघ्नइत्यभिमाति-घ्ने । ललामम् । प्राशृङ्गम् । एति । [१९] लभेत । यः । पाप्मना । गृहीतः । स्यात् । पाप्मा । वै । अभिमातिरित्यभि-मातिः । इन्द्रम् । एव । अभिमातिहनमित्यभिमाति-हनम् । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मात् । पाप्मानम् । अभिमातिमित्यभि-मातिम् । प्रेति । नुदते । इन्द्राय । वज्रिणे । ललामम् । प्राशृङ्गम् । एति । लभेत । यम् । अलम् । राज्याय । सन्तम् । राज्यम् । न । उपनमेदित्युप-नमेत् । इन्द्रम् । एव । वज्रिणम् । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । वज्रम् । प्रेति । यच्छति । सः । एनम् । वज्रः । भूत्यै । इन्धे । उपेति । एनम् । राज्यम् । नमति । ललामः । प्राशृङ्गः । भवति । एतत् । वै । वज्रस्य । रूपम् । समृद्ध्याइतिसं-ऋद्ध्यै ॥ [२०]

सङ्ग्राममेतेनालमभिमातिघ्नेललामम्प्राशृङ्गमेनम्पञ्चदशच ॥ ❁ ❁ ॥३॥

असौ । आदित्यः । न । वीति । अरोचत । तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन्न् । तस्मै । एताम् । दशर्षभामितिदश-ऋषभाम् । एति । अलभन्त । तया । एव । अस्मिन्न् । रुचम् । अदधुः । यः । ब्रह्मवर्चसकामइतिब्रह्मवर्चस-कामः । स्यात् । तस्मै । एताम् । दशर्षभामितिदश-ऋषभाम् । एति । लभेत । अमुम् । एव । आदित्यम् । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मिन्न् । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । दधाति । ब्रह्मवर्चसीतिब्रह्म-वर्चसी । एव । भवति । वसन्ता । प्रातः । त्रीन् । ललामान् । एति । लभेत । ग्रीष्मे । मध्यन्दिने । [२१] त्रीन् । शितिपृष्ठानितिशिति-पृष्ठान् । शरदि । अपराह्णइत्यपर-अह्ने । त्रीन् । शितिवारानितिशिति-वारान् । त्रीणि । वै । आदित्यस्य । तेजांसि । वसन्ता । प्रातः । ग्रीष्मे । मध्यन्दिने । शरदि । अपराह्णइत्यपर-अह्ने । यावन्ति । एव । तेजांसि । तानि । एव । अवेति । रुन्धे । त्रयस्त्रयइतित्रयः-त्रयः । एति । लभ्यन्ते । अभिपूर्वमित्यभि-पूर्वम् । एव । अस्मिन्न् । तेजः । दधाति । सँव्वथ्सरमितिसं-वथ्सरम् । पर्यालभ्यन्तइतिपरि-आलभ्यन्ते । सँव्वथ्सरइतिसं-वथ्सरः । वै । ब्रह्मवर्चसस्येतिब्रह्म-वर्चसस्य । प्रदातेतिप्र-दाता । सँव्वथ्सरइतिसं-वथ्सरः । एव । अस्मै । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । प्रेति । यच्छति । ब्रह्मवर्चसीतिब्रह्म-वर्चसी । एव । भवति । सँव्वथ्सरस्येतिसं-वथ्सरस्य । परस्तात् । प्राजापत्यमितिप्राजा-पत्यम् । कद्रुम् । [२२] एति । लभेत । प्रजापतिरितिप्रजा-पतिः । सर्वाः । देवताः । देवतासु । एव । प्रतीति । तिष्ठति । यदि । बिभीयात् । दुश्चर्मेतिदुः-चर्मा । भविष्यामि । इति । सोमापौष्णमितिसोमा-पौष्णम् । श्यामम् । एति । लभेत । सौम्यः । वै । देवतया । पुरुषः । पौष्णाः । पशवः । स्वया । एव । अस्मै । देवतया । पशुभिरितिपशु-भिः । त्वचम् । करोति । न । दुश्चर्मेतिदुः-चर्मा । भवति । देवाः । च । वै । यमः । च । अस्मिन्न् । लोके । अस्पर्धन्त । सः । यमः । देवानाम् । इन्द्रियम् । वीर्यम् । अयुवत । तत् । यमस्य । [२३] यमत्वमितियम-त्वम् । ते । देवाः । अमन्यन्त । यमः । वै । इदम् । अभूत् । यत् । वयम् । स्मः । इति । ते । प्रजापतिमितिप्रजा-पतिम् । उपेति । अधावन्न् । सः । एतौ । प्रजापतिरितिप्रजा-पतिः । आत्मनः । उक्षवशावित्युक्ष-वशौ । निरिति । अमिमीत । ते । देवाः ।

वैष्णावरुणीमितिवैष्णा-वरुणीम् । वशाम् । एति । अलभन्त । ऐन्द्रम् । उरुषाणम् । तम् । वरुणेन । एव । ग्राहयित्वा । विष्णुना । यज्ञेन । प्रेति । अनुदन्त । ऐन्द्रेण । एव । अस्य । इन्द्रियम् । अवृञ्जत । यः । भ्रातृव्यवानितिभ्रातृव्य-वान् । स्यात् । सः । स्पर्धमानः । वैष्णावरुणीमितिवैष्णा-वरुणीम् । [ २४ ] वशाम् । एति । लभेत । ऐन्द्रम् । उरुषाणम् । वरुणेन । एव । भ्रातृव्यम् । ग्राहयित्वा । विष्णुना । यज्ञेन । प्रेति । नुदते । ऐन्द्रेण । एव । अस्य । इन्द्रियम् । वृङ्क्ते । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । इन्द्रः । वृत्रम् । अहन् । तम् । वृत्रः । हतः । षोडशभिरितिषोडश-भिः । भोगैः । असिनात् । तस्य । वृत्रस्य । शीर्षतः । गावः । उदिति । आयन् । ताः । वैदेह्यः । अभवन् । तासाम् । ऋषभः । जघने । अनु । उदिति । ऐत् । तम् । इन्द्रः । [ २५ ] अचायत् । सः । अमन्यत । यः । वै । इमम् । आलभेतेत्या-लभेत । मुच्येत । अस्मात् । पाप्मनः । इति । सः । आग्नेयम् । कृष्णग्रीवमितिकृष्ण-ग्रीवम् । एति । अलभत । ऐन्द्रम् । ऋषभम् । तस्य । अग्निः । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपसृतइत्युप-सृतः । षोडशधेतिषोडश-धा । वृत्रस्य । भोगान् । अपीति । अदहत् । ऐन्द्रेण । इन्द्रियम् । आत्मन् । अधत्त । यः । पाप्मना । गृहीतः । स्यात् । सः । आग्नेयम् । कृष्णग्रीवमितिकृष्ण-ग्रीवम् । एति । लभेत । ऐन्द्रम् । ऋषभम् । अग्निः । एव । अस्य । स्वेन । भागधेयेनेतिभाग-धेयेन । उपसृतइत्युप-सृतः । [ २६ ] पाप्मानम् । अपीति । दहति । ऐन्द्रेण । इन्द्रियम् । आत्मन् । धत्ते । मुच्यते । पाप्मनः । भवति । एव । द्यावापृथिव्यामितिद्यावा-पृथिव्याम् । धेनुम् । एति । लभेत । ज्योगपरुद्धइतिज्योक्-अपरुद्धः । अनयोः । हि । वै । एषः । अप्रतिष्ठितइत्यप्रति-स्थितः । अथ । एषः । ज्योक् । अपरुद्धइत्यप-रुद्धः । द्यावापृथिवीइतिद्यावा-पृथिवी । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । तेइति । एव । एनम् । प्रतिष्ठामितिप्रति-स्थाम् । गमयतः । प्रतीति । एव । तिष्ठति । पर्यारिणी । भवति । पर्यारि । इव । हि । एतस्य । राष्ट्रम् । यः । ज्योगपरुद्धइतिज्योक्-अपरुद्धः । समृद्ध्याइतिसं-ऋद्ध्यै । वायव्यम् । [ २७ ] वत्सम् । एति । लभेत । वायुः । वै । अनयोः । वत्सः । इमे । वै ।

एतस्मै । लोकाः । अपशुष्काइत्यप-शुष्काः । विट् । अपशुष्केत्यप-शुष्का । अथं । एषः । ज्योक् । अपरुद्धइत्यप-रुद्धः । वायुम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । इमान् । लोकान् । विशम् । प्रेति । दापयति । प्रेति । अस्मै । इमे । लोकाः । स्नुवन्ति । भुञ्जती । एनम् । विट् । उपेति । तिष्ठते ॥ [२८] मध्यन्दिनेकद्रुय्यँमस्यस्पर्द्धमानोवैष्णावरुणीन्तमिन्द्रोऽस्यस्वेनंभागधेयेनोपसृतोवायव्यन्द्विचत्वारिꣳशच्च ॥ ❀ ❀ ॥४॥

इन्द्रः । वलस्य । बिलम् । अपेति । और्णोत् । सः । यः । उत्तमइत्युत्-तमः । पशुः । आसीत् । तम् । पृष्ठम् । प्रतीति । सङ्गृह्येतिसं-गृह्य । उदिति । अखिदत् । तम् । सहस्रम् । पशवः । अनु । उदिति । आयन् । सः । उन्नतइत्युत्-नतः । अभवत् । यः । पशुकामइतिपशु-कामः । स्यात् । सः । एतम् । ऐन्द्रम् । उन्नतमित्युत्-नतम् । एति । लभेत । इन्द्रम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । पशून् । प्रेति । यच्छति । पशुमानितिपशु-मान् । एव । भवति । उन्नतइत्युत्-नतः । [२९] भवति । साहस्री । वै । एषा । लक्ष्मी । यत् । उन्नतइत्युत्-नतः । लक्ष्मिया । एव । पशून् । अवेति । रुन्धे । यदा । सहस्रम् । पशून् । प्राप्नुयादितिप्र-आप्नुयात् । अथ । वैष्णवम् । वामनम् । एति । लभेत । एतस्मिन् । वै । तत् । सहस्रम् । अधीति । अतिष्ठत् । तस्मात् । एषः । वामनः । समीषितइतिसं-ईषितः । पशुभ्यइतिपशु-भ्यः । एव । प्रजातेभ्यइतिप्र-जातेभ्यः । प्रतिष्ठामितिप्रति-स्थाम् । दधाति । कः । अर्हति । सहस्रम् । पशून् । प्राप्तुमितिप्र-आप्तुम् । इति । आहुः । अहोरात्राणीत्यहः-रात्राणि । एव । सहस्रम् । सम्पाद्येतिसं-पाद्य । एति । लभेत । पशवः । [३०] वै । अहोरात्राणीत्यहः-रात्राणि । पशून् । एव । प्रजातानितिप्र-जातान् । प्रतिष्ठामितिप्रति-स्थाम् । गमयति । ओषधीभ्यइत्योषधि-भ्यः । वेहतम् । एति । लभेत । प्रजाकामइतिप्रजा-कामः । ओषधयः । वै । एतम् । प्रजायाइतिप्र-जायै । परीति । बाधन्ते । यः । अलम् । प्रजायाइतिप्र-जायै । सन् । प्रजामितिप्र-जाम् । न । विन्दते । ओषधयः । खलु । वै । एतस्यै । सूतुम् । अपीति । घ्नन्ति । या । वेहत् । भवति । ओषधीः । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धा

वति । ताः । एव । अस्मै । स्वात् । योनेः । प्रजामितिप्र-जाम् । प्रेति । जन यन्ति । विन्दते । [३१] प्रजामितिप्र-जाम् । आपः । वै । ओषधयः । असत् । पुरुषः । आपः । एव । अस्मै । असतः । सत् । ददति । तस्मात् । आहुः । यः । च । एवम् । वेद । यः । च । न । आपः । तु । वाव । असतः । सत् । ददति । इ ति । ऐन्द्रीम् । सूतवशामितिसूत-वशाम् । एति । लभेत । भूतिकामइतिभूति-का मः । अजातः । वै । एषः । यः । अलम् । भूत्यै । सन् । भूतिम् । न । प्राप्नोतीति प्र-आप्नोति । इन्द्रम् । खलु । वै । एषा । सूत्वा । वशा । अभवत् । [३२] इन्द्रम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । एनम् । भू तिम् । गमयति । भवति । एव । यम् । सूत्वा । वशा । स्यात् । तम् । ऐन्द्रम् । एव । एति । लभेत । एतत् । वाव । तत् । इन्द्रियम् । साक्षादितिस-अक्षात् । एव । इन्द्रियम् । अवेति । रुन्धे । ऐन्द्राग्नमित्यैन्द्र-अग्नम् । पुनरुथ्सृष्टमितिपुनः-उ थ्सृष्टम् । एति । लभेत । यः । एति । तृतीयात् । पुरुषात् । सोमम् । न । पि बेत् । विच्छिन्नइतिवि-छिन्नः । वै । एतस्य । सोमपीथइतिसोम-पीथः । यः । ब्रा ह्मणः । सन् । एति । [३३] तृतीयात् । पुरुषात् । सोमम् । न । पिबति । इ न्द्राग्नीइतीन्द्र-अग्नी । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । तौ । एव । अस्मै । सोमपीथमितिसोम-पीथम् । प्रेति । यच्छतः । उपेति । ए नम् । सोमपीथइतिसोम-पीथः । नमति । यत् । ऐन्द्रः । भवति । इन्द्रियम् । वै । सोमपीथइतिसोम-पीथः । इन्द्रियम् । एव । सोमपीथमितिसोम-पीथम् । अवेति । रुन्धे । यत् । आग्नेयः । भवति । आग्नेयः । वै । ब्राह्मणः । स्वाम् । एव । देव ताम् । अनु । समिति । तनोति । पुनरुथ्सृष्टइतिपुनः-उथ्सृष्टः । भवति । पुनरु थ्सृष्टइतिपुनः-उथ्सृष्टः । इव । हि । एतस्य । [३४] सोमपीथइतिसोम-पीथः । समृध्यैइतिसं-ऋध्यै । ब्राह्मणस्पत्यमितिब्राह्मणः-पत्यम् । तूपरम् । एति । लभेत । अभिचरन्नित्यभि-चरन् । ब्रह्मणः । पतिम् । एव । स्वेन । भागधेयेनेतिभाग-धेये न । उपेति । धावति । तस्मै । एव । एनम् । एति । वृश्चति । ताजक् । आ र्तिम् । एति । ऋच्छति । तूपरः । भवति । क्षुरपविरितिक्षुर-पविः । वै । एषा । लक्ष्मी । यत् । तूपरः । समृध्याइतिसं-ऋध्यै । स्फ्यः । यूपः । भवति । वज्रः ।

वै । स्फ्यः । वज्रम् । एव । अस्मै । प्रेति । हरति । शरमयमितिशर-मयम् । बर्हिः । शृणाति । एव । एनम् । वैभीदकः । इध्मः । भिनत्ति । एव । एनम् ॥
[ ३५ ] भवत्युन्नतःपशवोजनयन्तिविन्दतेऽभवत्सन्नैतस्येध्मस्त्रीणिच ॥ ❀ ॥ ५ ॥

बार्हस्पत्यम् । शितिपृष्ठमितिशिति-पृष्ठम् । एति । लभेत । ग्रामकामइति ग्राम-कामः । यः । कामयेत । पृष्ठम् । समानानाम् । स्याम् । इति । बृहस्पतिम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । एनम् । पृष्ठम् । समानानाम् । करोति । ग्रामी । एव । भवति । शितिपृष्ठइतिशिति-पृष्ठः । भवति । बार्हस्पत्यः । हि । एषः । देवतया । समृद्ध्याइतिसं-ऋद्ध्यै । पौष्णम् । श्यामम् । एति । लभेत । अन्नकामइत्यन्न-कामः । अन्नम् । वै । पूषा । पूषणम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । [ ३६ ] अन्नम् । प्रेति । यच्छति । अन्नादइत्यन्न-अदः । एव । भवति । श्यामः । भवति । एतत् । वै । अन्नस्य । रूपम् । समृद्ध्याइतिसं-ऋद्ध्यै । मारुतम् । पृश्निम् । एति । लभेत । अन्नकामइत्यन्न-कामः । अन्नम् । वै । मरुतः । मरुतः । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । ते । एव । अस्मै । अन्नम् । प्रेति । यच्छन्ति । अन्नादइत्यन्न-अदः । एव । भवति । पृश्निः । भवति । एतत् । वै । अन्नस्य । रूपम् । समृद्ध्याइतिसं-ऋद्ध्यै । ऐन्द्रम् । अरुणम् । एति । लभेत । इन्द्रियकामइतीन्द्रिय-कामः । इन्द्रम् । एव । [ ३७ ] स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मिन्न् । इन्द्रियम् । दधाति । इन्द्रियावी । एव । भवति । अरुणः । भ्रूमानितिभ्रू-मान् । भवति । एतत् । वै । इन्द्रस्य । रूपम् । समृद्ध्याइतिसं-ऋद्ध्यै । सावित्रम् । उपध्वस्तमित्युप-ध्वस्तम् । एति । लभेत । सनिकामइतिसनि-कामः । सविता । वै । प्रसवानामितिप्र-सवानाम् । ईशे । सवितारम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । सनिम् । प्रेति । सुवति । दानकामाइतिदान-कामाः । अस्मै । प्रजाइतिप्र-जाः । भवन्ति । उपध्वस्तइत्युप-ध्वस्तः । भवति । सावित्रः । हि । एषः । [ ३८ ] देवतया । समृद्ध्याइतिसं-ऋद्ध्यै । वैश्वदेवमितिवैश्व-देवम् । बहुरूपमितिबहु-रूपम् । एति । लभेत । अन्नकामइत्यन्न-कामः । वैश्वदेवमितिवैश्व-देवम् । वै ।

अन्नम् । विश्वान् । एव । देवान् । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । ते । एव । अस्मै । अन्नम् । प्रेति । यच्छन्ति । अन्नादइत्यन्न-अदः । एव । भवति । बहुरूपइतिबहु-रूपः । भवति । बहुरूपमितिबहु-रूपम् । हि । अन्नम् । समृद्ध्याइतिसं-ऋद्ध्यै । वैश्वदेवमितिवैश्व-देवम् । बहुरूपमितिबहु-रूपम् । एति । लभेत । ग्रामकामइतिग्राम-कामः । वैश्वदेवाइतिवैश्व-देवाः । वै । सजाताइतिस-जाताः । विश्वान् । एव । देवान् । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । ते । एव । अस्मै । [३९] सजातानितिस-जातान् । प्रेति । यच्छन्ति । ग्रामी । एव । भवति । बहुरूपइतिबहु-रूपः । भवति । बहुदेवत्यइतिबहु-देवत्यः । हि । एषः । समृद्ध्याइतिसं-ऋद्ध्यै । प्राजापत्यमितिप्राजा-पत्यम् । तूपरम् । एति । लभेत । यस्य । अनाज्ञातमित्यना-ज्ञातम् । इव । ज्योक् । आमयेत् । प्राजापत्यइतिप्राजा-पत्यः । वै । पुरुषः । प्रजापतिरितिप्रजा-पतिः । खलु । वै । तस्य । वेद । यस्य । अनाज्ञातमित्यना-ज्ञातम् । इव । ज्योक् । आमयति । प्रजापतिमितिप्रजा-पतिम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । एनम् । तस्मात् । स्रामात् । मुञ्चति । तूपरः । भवति । प्राजापत्यइतिप्राजा-पत्यः । हि । एषः । देवतया । समृद्ध्याइतिसं-ऋद्ध्यै ॥ [४०] अस्माइन्द्रमेवैषसंजातविश्वान्नेवदेवान्थ्स्वेनभागधेयेनोपधावति तएवास्मैप्राजापत्योहित्रीणिच ॥ ❀ ॥६॥

वषट्कारइतिवषट्-कारः । वै । गायत्रियै । शिरः । अच्छिनत् । तस्यै । रसः । परेति । अपतत् । तम् । बृहस्पतिः । उपेति । अगृह्णात् । सा । शितिपृष्ठेतिशिति-पृष्ठा । वशा । अभवत् । यः । द्वितीयः । परापतदितिपरा-अपतत् । तम् । मित्रावरुणावितिमित्रा-वरुणौ । उपेति । अगृह्णीताम् । सा । द्विरूपेतिद्वि-रूपा । वशा । अभवत् । यः । तृतीयः । परापतदितिपरा-अपतत् । तम् । विश्वे । देवाः । उपेति । अगृह्णन् । सा । बहुरूपेतिबहु-रूपा । वशा । अभवत् । यः । चतुर्थः । परापतदितिपरा-अपतत् । सः । पृथिवीम् । प्रेति । अविशत् । तम् । बृहस्पतिः । अभीति । [४१] अगृह्णात् । अस्तु । एव । अयम् । भोगाय । इति । सः । उक्षवशाइत्युक्ष-वशः । समिति । अभवत् । यत् । लोहितम् । परापतदितिपरा-अपतत् ।

तत् । रुद्रः । उपेति । अगृह्णात् । सा । रौद्री । रोहिणी । वशा । अभवत् । बार्हस्प त्याम् । शितिपृष्ठामितिशिति-पृष्ठाम् । एति । लभेत । ब्रह्मवर्चसकामइतिब्रह्मवर्चस-कामः । बृहस्पतिम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मिन् । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । दधाति । ब्रह्मवर्चसीतिब्रह्म-व र्चसी । एव । भवति । छन्दसाम् । वै । एषः । रसः । यत् । वशा । रसः । इव । खलु । [४२] वै । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । छन्दसाम् । एव । रसेन । रसम् । ब्रह्म वर्चसमितिब्रह्म-वर्चसम् । अवेति । रुन्धे । मैत्रावरुणीमितिमैत्रा-वरुणीम् । द्विरूपा मितिद्वि-रूपाम् । एति । लभेत । वृष्टिकामइतिवृष्टि-कामः । मैत्रम् । वै । अहः । वारुणी । रात्रिः । अहोरात्राभ्यामित्यहः-रात्राभ्याम् । खलु । वै । पर्जन्यः । वर्ष ति । मित्रावरुणावितिमित्रा-वरुणौ । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उ पेति । धावति । तौ । एव । अस्मै । अहोरात्राभ्यामित्यहः-रात्राभ्याम् । पर्जन्यम् । वर्षयतः । छन्दसाम् । वै । एषः । रसः । यत् । वशा । रसः । इव । खलु । वै । वृष्टिः । छन्दसाम् । एव । रसेन । [४३] रसम् । वृष्टिम् । अवेति । रुन्धे । मैत्रावरु णीमितिमैत्रा-वरुणीम् । द्विरूपामितिद्वि-रूपाम् । एति । लभेत । प्रजाकामइतिप्र जा-कामः । मैत्रम् । वै । अहः । वारुणी । रात्रिः । अहोरात्राभ्यामित्यहः-रात्रा भ्याम् । खलु । वै । प्रजाइतिप्र-जाः । प्रेति । जायन्ते । मित्रावरुणावितिमित्रा-व रुणौ । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । तौ । एव । अ स्मै । अहोरात्राभ्यामित्यहः-रात्राभ्याम् । प्रजामितिप्र-जाम् । प्रेति । जनयतः । छन्द साम् । वै । एषः । रसः । यत् । वशा । रसः । इव । खलु । वै । प्रजेतिप्र-जा । छन्द साम् । एव । रसेन । रसम् । प्रजामितिप्र-जाम् । अवेति । [४४] रुन्धे । वैश्वदे वीमितिवैश्व-देवीम् । बहुरूपामितिबहु-रूपाम् । एति । लभेत । अन्नकामइत्यन्न-का मः । वैश्वदेवमितिवैश्व-देवम् । वै । अन्नम् । विश्वान् । एव । देवान् । स्वेन । भा गधेयेनेतिभाग-धेयेन । उपेति । धावति । ते । एव । अस्मै । अन्नम् । प्रेति । यच्छ न्ति । अन्नादइत्यन्न-अदः । एव । भवति । छन्दसाम् । वै । एषः । रसः । यत् । वशा । रसः । इव । खलु । वै । अन्नम् । छन्दसाम् । एव । रसेन । रसम् । अन्नम् । अ वेति । रुन्धे । वैश्वदेवीमितिवैश्व-देवीम् । बहुरूपामितिबहु-रूपाम् । एति । लभेत ।

ग्रामकामइतिग्राम-कामः । वैश्वदेवाइतिवैश्व-देवाः । वै । [ ४५ ] सजाताइतिस-जाताः । विश्वान् । एव । देवान् । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । ते । एव । अस्मै । सजातानितिस-जातान् । प्रेति । यच्छन्ति । ग्रामी । एव । भवति । छन्दसाम् । वै । एषः । रसः । यत् । वशा । रसः । इव । खलु । वै । सजाताइतिस-जाताः । छन्दसाम् । एव । रसेन । रसम् । सजातानितिस-जातान् । अवेति । रुन्धे । बार्हस्पत्यम् । उक्षवशमित्युक्ष-वशम् । एति । लभेत । ब्रह्मवर्चसकामइतिब्रह्मवर्चस-कामः । बृहस्पतिम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मिन्न् । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । [ ४६ ] दधाति । ब्रह्मवर्चसीतिब्रह्म-वर्चसी । एव । भवति । वशम् । वै । एषः । चरति । यत् । उक्षा । वशः । इव । खलु । वै । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । वशेन । एव । वशम् । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । अवेति । रुन्धे । रौद्रीम् । रोहिणीम् । एति । लभेत । अभिचरन्नित्यभि-चरन्न् । रुद्रम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । तस्मै । एव । एनम् । एति । वृश्चति । ताजक् । आर्तिम् । एति । ऋच्छति । रोहिणी । भवति । रौद्री । हि । एषा । देवतया । समृद्ध्याइतिसं-ऋद्ध्यै । स्फ्यः । यूपः । भवति । वज्रः । वै । स्फ्यः । वज्रम् । एव । अस्मै । प्रेति । हरति । शरमयमितिशर-मयम् । बर्हिः । शृणाति । एव । एनम् । वैभीदकः । इध्मः । भिनत्ति । एव । एनम् ॥ [ ४७ ] अभिखलुवृष्टिश्छन्दसामेवरसेनप्रजामवंवैश्वदेवावैब्रह्मवर्चसंयूपएकान्नविंशतिश्च ॥ ❀ ❀ ॥७॥

असौ । आदित्यः । न । वीति । अरोचत । तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन्न् । तस्मै । एताम् । सौरीम् । श्वेताम् । वशाम् । एति । अलभन्त । तया । एव । अस्मिन्न् । रुचम् । अदधुः । यः । ब्रह्मवर्चसकामइतिब्रह्मवर्चस-कामः । स्यात् । तस्मै । एताम् । सौरीम् । श्वेताम् । वशाम् । एति । लभेत । अमुम् । एव । आदित्यम् । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मिन्न् । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । दधाति । ब्रह्मवर्चसीतिब्रह्म-वर्चसी । एव । भवति । बैल्वः । यूपः । भवति । असौ । [ ४८ ] वै । आदित्यः । यतः । अजायत । ततः । बिल्वः । उदिति । अतिष्ठत् । सयोनीतिस-योनि । एव । ब्रह्मवर्चस

मितिंब्रह्म-वर्चसम् । अवेति । रुन्धे । ब्राह्मणस्पत्यामितिंब्राह्मणः-पत्याम् । बभ्रुकर्णी
मितिंबभ्रु-कर्णीम् । एति । लभेत । अभिचरन्नित्यंभि-चरन्न् । वारुणम् । दशकपाल
मितिदश-कपालम् । पुरस्तात् । निरिति । वपेत् । वरुणेन । एव । भ्रातृव्यम् । ग्राहयि
त्वा । ब्रह्मणा । स्तृणुते । बभ्रुकर्णीतिबभ्रु-कर्णी । भवति । एतत् । वै । ब्रह्मणः ।
रूपम् । समृद्ध्याइतिसं-ऋद्ध्यै । स्फ्यः । यूपः । भवति । वज्रः । वै । स्फ्यः । वज्रम् ।
एव । अस्मै । प्रेति । हरति । शरमयमितिशर-मयम् । बर्हिः । शृणाति । [४९]
एव । एनम् । वैभीदकः । इध्मः । भिनत्ति । एव । एनम् । वैष्णवम् । वामनम् ।
एति । लभेत । यम् । यज्ञः । न । उपनमेदित्युप-नमेत् । विष्णुः । वै । यज्ञः । वि
ष्णुम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव ।
अस्मै । यज्ञम् । प्रेति । यच्छति । उपेति । एनम् । यज्ञः । नमति । वामनः । भ
वति । वैष्णवः । हि । एषः । देवतया । समृद्ध्याइतिसं-ऋद्ध्यै । त्वाष्ट्रम् । वडबम् ।
एति । लभेत । पशुकामइतिपशु-कामः । त्वष्टा । वै । पशूनाम् । मिथुनानाम् ।
[५०] प्रजनयितेतिप्र-जनयिता । त्वष्टारम् । एव । स्वेन । भागधेयेनेतिभाग-
धेयेन । उपेति । धावति । सः । एव । अस्मै । पशून् । मिथुनान् । प्रेति । जन
यति । प्रजेतिप्र-जा । हि । वै । एतस्मिन्न् । पशवः । प्रविष्टाइतिप्र-विष्टाः । अथ ।
एषः । पुमान् । सन्न् । वडबः । साक्षादितिस-अक्षात् । एव । प्रजामितिप्र-जाम् ।
पशून् । अवेति । रुन्धे । मैत्रम् । श्वेतम् । एति । लभेत । सङ्ग्रामइतिसं-ग्रामे । स
यँत्तइतिसं-यत्ते । समयकामइतिसमय-कामः । मित्रम् । एव । स्वेन । भागधेयेने
तिभाग-धेयेन । उपेति । धावति । सः । एव । एनम् । मित्रेण । समिति । नयति ।
[५१] विशालइतिवि-शालः । भवति । व्यवसाययतीतिवि-अवसाययति । एव ।
एनम् । प्राजापत्यमितिप्राजा-पत्यम् । कृष्णम् । एति । लभेत । वृष्टिकामइतिवृष्टि-
कामः । प्रजापतिरितिप्रजा-पतिः । वै । वृष्ट्याः । ईशे । प्रजापतिमितिप्रजा-प
तिम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अ
स्मै । पर्जन्यम् । वर्षयति । कृष्णः । भवति । एतत् । वै । वृष्ट्यै । रूपम् । रूपेण ।
एव । वृष्टिम् । अवेति । रुन्धे । शबलः । भवति । विद्युतमितिवि-द्युतम् । एव ।
अस्मै । जनयित्वा । वर्षयति । अवाशृङ्गः । भवति । वृष्टिम् । एव । अस्मै । नी

ति । यच्छति ॥ [५२] असौशृणातिमिथुनानांन्नयतियच्छति ॥ ❀ ॥८॥

वरुणम् । सुषुवाणम् । अन्नाद्यमित्यन्न-अद्यम् । न । उपेति । अनमत् । सः । एताम् । वारुणीम् । कृष्णाम् । वशाम् । अपश्यत् । ताम् । स्वायै । देवतायै । एति । अलभत । ततः । वै । तम् । अन्नाद्यमित्यन्न-अद्यम् । उपेति । अनमत् । यम् । अलम् । अन्नाद्यायेत्यन्न-अद्याय । सन्तम् । अन्नाद्यमित्यन्न-अद्यम् । न । उपनमेदित्युप-नमेत् । सः । एताम् । वारुणीम् । कृष्णाम् । वशाम् । एति । लभेत । वरुणम् । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । अन्नम् । प्रेति । यच्छति । अन्नादइत्यन्न-अदः । [५३] एव । भवति । कृष्णा । भवति । वारुणी । हि । एषा । देवतया । समृद्ध्याइतिसं-ऋद्ध्यै । मैत्रम् । श्वेतम् । एति । लभेत । वारुणम् । कृष्णम् । अपाम् । च । ओषधीनाम् । च । सन्धाविति सं-धौ । अन्नकामइत्यन्न-कामः । मैत्रीः । वै । ओषधयः । वारुणीः । आपः । अपाम् । च । खलु । वै । ओषधीनाम् । च । रसम् । उपेति । जीवामः । मित्रावरुणावितिमित्रा-वरुणौ । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । तौ । एव । अस्मै । अन्नम् । प्रेति । यच्छतः । अन्नादइत्यन्न-अदः । एव । भवति । [५४] अपाम् । च । ओषधीनाम् । च । सन्धाविति सं-धौ । एति । लभते । उभयस्य । अवरुद्ध्याइत्यव-रुद्ध्यै । विशाखइति वि-शाखः । यूपः । भवति । द्वेइति । हि । एतेइति । देवतेइति । समृद्ध्याइतिसं-ऋद्ध्यै । मैत्रम् । श्वेतम् । एति । लभेत । वारुणम् । कृष्णम् । ज्योगामयावीति ज्योक्-आमयावी । यत् । मैत्रः । भवति । मित्रेण । एव । अस्मै । वरुणम् । शमयति । यत् । वारुणः । साक्षादितिस-अक्षात् । एव । एनम् । वरुणपाशादितिवरुण-पाशात् । मुञ्चति । उत । यदि । इतासुरितीत-असुः । भवति । जीवति । एव । देवाः । वै । पुष्टिम् । न । अविन्दन् । [५५] ताम् । मिथुने । अपश्यन् । तस्याम् । न । समिति । अराधयन् । तौ । अश्विनौ । अब्रूताम् । आवयोः । वै । एषा । मा । एतस्याम् । वदध्वम् । इति । सा । अश्विनोः । एव । अभवत् । यः । पुष्टिकामइतिपुष्टि-कामः । स्यात् । सः । एताम् । आश्विनीम् । यमीम् । वशाम् । एति । लभेत । अश्विनौ । एव । स्वेन । भागधेयेनेतिभाग-धेयेन ।

उपेति । धावति । तौ । एव । अस्मिन् । पुष्टिम् । धत्तः । पुष्यति । प्रजयेतिप्र-जया ।
पशुभिरितिपशु-भिः ॥ [५६] अन्नादोऽन्नादएवभवत्यविन्दन्पञ्चचत्वारिꣳशच्च ॥९॥

आश्विनम् । धूम्रललाममितिधूम्र-ललामम् । एति । लभेत । यः । दुर्ब्राह्म
णइतिदुः-ब्राह्मणः । सोमम् । पिपासेत् । अश्विनौ । वै । देवानाम् । असोमपावि
त्यसोम-पौ । आस्ताम् । तौ । पश्चा । सोमपीथमितिसोम-पीथम् । प्रेति । आप्नु
ताम् । अश्विनौ । एतस्य । देवता । यः । दुर्ब्राह्मणइतिदुः-ब्राह्मणः । सोमम् ।
पिपासति । अश्विनौ । एव । स्वेन । भागधेयेनेतिभाग-धेयेन । उपेति । धाव
ति । तौ । एव । अस्मै । सोमपीथमितिसोम-पीथम् । प्रेति । यच्छतः । उपेति ।
एनम् । सोमपीथइतिसोम-पीथः । नमति । यत् । धूम्रः । भवति । धूम्रिमाणम् ।
एव । अस्मात् । अपेति । हन्ति । ललामः । [५७] भवति । मुखतः । एव ।
अस्मिन् । तेजः । दधाति । वायव्यम् । गोमृगमितिगो-मृगम् । एति । लभेत ।
यम् । अजघ्निवाꣳसम् । अभिशꣳसेयुरित्यभि-शꣳसेयुः । अपूता । वै । एतम् ।
वाक् । ऋच्छति । यम् । अजघ्निवाꣳसम् । अभिशꣳसन्तीत्यभि-शꣳसन्ति । न ।
एषः । ग्राम्यः । पशुः । न । आरण्यः । यत् । गोमृगइतिगो-मृगः । न । इव । ए
षः । ग्रामे । न । अरण्ये । यम् । अजघ्निवाꣳसम् । अभिशꣳसन्तीत्यभि-शꣳस
न्ति । वायुः । वै । देवानाम् । पवित्रम् । वायुम् । एव । स्वेन । भागधेयेनेतिभा
ग-धेयेन । उपेति । धावति । सः । एव । [५८] एनम् । पवयति । पराची । वै ।
एतस्मै । व्युच्छन्तीतिवि-उच्छन्ती । वीति । उच्छति । तमः । पाप्मानम् । प्रेति ।
विशति । यस्य । आश्विने । शस्यमाने । सूर्यः । न । आविः । भवति । सौर्यम् ।
बहुरूपमितिबहु-रूपम् । एति । लभेत । अमुम् । एव । आदित्यम् । स्वेन । भाग
धेयेनेतिभाग-धेयेन । उपेति । धावति । सः । एव । अस्मात् । तमः । पाप्मा
नम् । अपेति । हन्ति । प्रतीची । अस्मै । व्युच्छन्तीतिवि-उच्छन्ती । वीति । उच्छ
ति । अपेति । तमः । पाप्मानम् । हते ॥ [५९] ललामस्सएवषट्चत्वारिꣳशच्च ॥१०॥

इन्द्रम् । वः । विश्वतः । परीति । इन्द्रम् । नरः । मरुतः । यत् । ह । वः । दि
वः । या । वः । शर्म ॥ भरेषु । इन्द्रम् । सुहवमितिसु-हवम् । हवामहे । अꣳहो
मुचमित्यꣳहः-मुचम् । सुकृतमितिसु-कृतम् । दैव्यम् । जनम् ॥ अग्निम् । मित्रम् ।

वरुणम् । सातये । भगम् । द्यावापृथिवीइतिद्यावा-पृथिवी । मरुतः । स्वस्तये ॥ म मत्तु । नः । परिज्मेतिपरि-ज्मा । वसरूहा । ममत्तु । वातः । अपाम् । वृषण्वानिति वृषण्-वान् ॥ शिशीतम् । इन्द्रापर्वतेतीन्द्रा-पर्वता । युवम् । नः । तत् । नः । वि श्वे । वरिवस्यन्तु । देवाः ॥ प्रिया । वः । नाम । [६०] हुवे । तुराणाम् ॥ एति । यत् । तृपत् । मरुतः । वावशानाः ॥ श्रियसे । कम् । भानुभिरितिभानु-भिः । समि ति । मिमिक्षिरे । ते । रश्मिभिरितिरश्मि-भिः । ते । ऋक्वभिरित्यृक्व-भिः । सुखाद यइतिसु-खादयः ॥ ते । वाशीमन्तइतिवाशि-मन्तः । इष्मिणः । अभीरवः । वि द्रे । प्रियस्य । मारुतस्य । धाम्नः ॥ अग्निः । प्रथमः । वसुभिरितिवसु-भिः । नः । अव्यात् । सोमः । रुद्रेभिः । अभीति । रक्षतु । त्मना ॥ इन्द्रः । मरुद्भिरितिम रुत्-भिः । ऋतुधेत्यृतु-धा । कृणोतु । आदित्यैः । नः । वरुणः । समिति । शिशा तु ॥ समिति । नः । देवः । वसुभिरितिवसु-भिः । अग्निः । समिति । [६१] सो मः । तनूभिः । रुद्रियाभिः ॥ समिति । इन्द्रः । मरुद्भिरितिमरुत्-भिः । यज्ञियैः । समिति । आदित्यैः । नः । वरुणः । अजिज्ञिपत् ॥ यथा । आदित्याः । वसुभि रितिवसु-भिः । सम्बभूवुरितिसं-बभूवुः । मरुद्भिरितिमरुत्-भिः । रुद्राः । समजान तेतिसं-अजानत । अभि ॥ एवा । त्रिणामन्निति त्रि-नामन् । अहृणीयमानाः । विश्वे । देवाः । समनसइतिस-मनसः । भवन्तु ॥ कुत्र । चित् । यस्य । समृताविति सं-ऋतौ । रण्वाः । नरः । नृषदनइतिनृ-सदने ॥ अर्हन्तः । चित् । यम् । इ न्धते । सञ्जनयन्तीतिसं-जनयन्ति । जन्तवः ॥ समिति । यत् । इषः । वनामहे । समिति । हव्या । मानुषाणाम् ॥ उत । द्युम्नस्य । शवसः । [६२] ऋतस्य । र श्मिम् । एति । ददे ॥ यज्ञः । देवानाम् । प्रतीति । एति । सुम्नम् । आदित्यासः । भवत । मृडयन्तः ॥ एति । वः । अर्वाची । सुमतिरितिसु-मतिः । ववृत्यात् । अ ꣳहोः । चित् । या । वरिवोवित्तरेतिवरिवोवित्-तरा । असत् ॥ शुचिः । अपः । सूयवसाइतिसु-यवसाः । अदब्धः । उपेति । क्षेति । वृद्धवयाइतिवृद्ध-वयाः । सु वीरइतिसु-वीरः ॥ नकिः । तम् । घ्नन्ति । अन्तितः । न । दूरात् । यः । आदि त्यानाम् । भवति । प्रणीताविति प्र-नीतौ ॥ धारयन्तः । आदित्यासः । जगत् । स्थाः । देवाः । विश्वस्य । भुवनस्य । गोपाइतिगो-पाः ॥ दीर्घाधियइतिदीर्घ-धि

यः । रक्षमाणाः । [६३] असुर्यम् । ऋतावानित्यृत-वानः । चयमानाः । ऋणानि ॥ तिस्रः । भूमीः । धारयन्न् । त्रीन् । उत । द्यून् । त्रीणि । व्रता । विदथे । अन्तः । एषाम् ॥ ऋतेन । आदित्याः । महि । वः । महित्वमितिमहि-त्वम् । तत् । अर्यमन्न् । वरुण । मित्र । चारु ॥ त्यान् । नु । क्षत्रियान् । अवः । आदित्यान् । याचिषामहे ॥ सुमृडीकानितिसु-मृडीकान् । अभिष्टये ॥ न । दक्षिणा । वीति । चिकिते । न । सव्या । न । प्राचीनम् । आदित्याः । न । उत । पश्चा ॥ पाक्या । चित् । वसवः । धीर्या । चित् । [६४] युष्मानीतः । अभयम् । ज्योतिः । अश्याम् ॥ आदित्यानाम् । अवसा । नूतनेन । सक्षीमहि । शर्मणा । शन्तमेनेतिशं-तमेन ॥ अनागास्त्वइत्यनागाः-त्वे । अदितित्वइत्यदिति-त्वे । तुरासः । इमम् । यज्ञम् । दधतु । श्रोषमाणाः ॥ इमम् । मे । वरुण । श्रुधि । हवम् । अद्य । च । मृडय ॥ त्वाम् । अवस्युः । एति । चके ॥ तत् । त्वा । यामि । ब्रह्मणा । वन्दमानः । तत् । एति । शास्ते । यजमानः । हविर्भिरितिहविः-भिः ॥ अहेडमानः । वरुण । इह । बोधि । उरुशꣳसेत्युरु-शꣳस । मा । नः । आयुः । प्रेति । मोषीः ॥ [६५] नामाभिस्सꣳशवसोरक्षमाणाधीर्याचिदेकान्नपञ्चाशच्च ॥ ❀ ❀ ॥११॥

वायव्यम्प्रजापतिस्तावरुणन्देवासुराएष्वसावादित्योदश ऋषभामिन्द्रोवलस्य बार्हस्पत्यꣳवषट्कारोऽसौसौरीꣳवरुणमाश्विनमिन्द्रꣳवोनरएकादश ॥११॥ वायव्यमाग्नेयीङ्कृष्णग्रीवीमसावादित्योवाअहोरात्राणिवषट्कारःप्रजनयिताहुवेतुराणाम्पञ्चषष्टिः ॥ ६५ ॥ वायव्यम्प्रमोषीः ॥ ❀ ❀ ❀ ❀ ॥

हरिः ओ (३) म् ॥

इति द्वितीयकाण्डे प्रथमः प्रश्नः ॥

---

(१) 'ऋता' इत्यवग्रहपदस्थः अन्त्यस्वरः पदविभागसमये ह्रस्वमापद्यते । तदुक्तं प्रातिशाख्ये—'अथादावुत्तरे विभागे ह्रस्वं व्यञ्जनपरः ॥ १ ॥ देवा शीका सुम्ना श्वर्ता वयुना हृदयाऽघोक्था शुद्धा' ॥ २ ॥ इति (अ-३,सू-१,२) अस्यार्थः—अथेतिशब्दोऽधिकारार्थः । आदौ पदादौ उत्तरे पदान्ते च वर्तमानो दीर्घः विभागे पदविभागसमये व्यञ्जनपरः ह्रस्वमापद्यते । देवा, शीका, सुम्ना, श्वा, ऋता, वयुना हृदया, अघा, उक्था, शुद्ध', एतेषामवग्रहपदानामन्ते वर्तमानो दीर्घः पदविभागसमये व्यञ्जनपरः ह्रस्वमापद्यते । (उदा) देवायते यजमानाय । शीकायते स्वाहा । सुम्नायन्तो हवामहे । द्यावापृथिव्या श्वावित् । 'अप्यकारादि' (प्रा-अ-१,सू-९२) इति वचनात् अश्वावतीꣳसोमवती' मित्यप्युदाहरणम् । संपृच्यध्वमृतावरीः । वयुनाविदेकः । हृदयाविधश्चित् । अघायवो मा गन्धर्वः । वयस्वत उक्थायुवे । आपोदेवीश्शुद्धायुवः ॥

स्य । जुषाणेन॑ । यजति । तेन॑ । अन्यतोदतइत्यन्यतः॑-दतः । दाधार । ऋचम् । अनू
च्येत्यनु-उच्य॑ । हविषः॑ । ऋचा । यजति । तेन॑ । उभयतोदतइत्युभयतः॑-दतः । दा
धार । मूर्द्धन्वतीतिमूर्द्धन्न्-वती । पुरोनुवाक्येतिपुरः-अनुवाक्या । भवति । मूर्द्धानम् ।
एव । एनम् । समानानाम् । करोति । [९] नियुत्वत्येतिनि-युत्वत्या । यजति । भ्रातृ
व्यस्य । एव । पशून् । नीति । युवते । केशिनम् । ह । दार्भ्यम् । केशी । सात्यकामि
रितिसात्य-कामिः । उवाच । सप्तपदामितिसप्त-पदाम् । ते । शक्करीम् । श्वः । यज्ञे ।
प्रयोक्तासइतिप्र-योक्तासे । यस्यै । वीर्येण । प्रेति । जातान् । भ्रातृव्यान् । नुदते ।
प्रतीति । जनिष्यमाणान् । यस्यै । वीर्येण । उभयोः । लोकयोः । ज्योतिः । धत्ते ।
यस्यै । वीर्येण । पूर्वार्द्धेनेतिपूर्व-अर्द्धेन । अनड्वान् । भुनक्ति । जघनार्द्धेनेतिजघन-
अर्द्धेन । धेनुः । इति । पुरस्ताल्लख्ष्मेतिपुरस्तात्-लख्ष्मा । पुरोनुवाक्येतिपुरः-अ
नुवाक्या । भवति । जातान् । एव । भ्रातृव्यान् । प्रेति । नुदते । उपरिष्टाल्लख्ष्मेत्युप
रिष्टात्-लख्ष्मा । [१०] याज्या । जनिष्यमाणान् । एव । प्रतीति । नुदते । पुर
स्ताल्लख्ष्मेतिपुरस्तात्-लख्ष्मा । पुरोनुवाक्येतिपुरः-अनुवाक्या । भवति । अस्मि
न्न् । एव । लोके । ज्योतिः । धत्ते । उपरिष्टाल्लख्ष्मेत्युपरिष्टात्-लख्ष्मा । याज्या ।
अमुष्मिन्न् । एव । लोके । ज्योतिः । धत्ते । ज्योतिष्मन्तौ । अस्मै । इमौ । लोकौ ।
भवतः । यः । एवम् । वेद । पुरस्ताल्लख्ष्मेतिपुरस्तात्-लख्ष्मा । पुरोनुवाक्येतिपुरः-
अनुवाक्या । भवति । तस्मात् । पूर्वार्द्धेनेतिपूर्व-अर्द्धेन । अनड्वान् । भुनक्ति ।
उपरिष्टाल्लख्ष्मेत्युपरिष्टात्-लख्ष्मा । याज्या । तस्मात् । जघनार्द्धेनेतिजघन-अ
र्द्धेन । धेनुः । यः । एवम् । वेद । भुङ्क्तः । एनम् । एतौ । वज्रः । आज्यम् । व
ज्रः । आज्यभागावित्याज्य-भागौ । [११] वज्रः । वषट्कारइतिवषट्-कारः । त्रिवृत
मितित्रि-वृतम् । एव । वज्रम् । सम्भृत्येतिसं-भृत्य । भ्रातृव्याय । प्रेति । हरति । अ
छम्बट्कारमित्यछम्बट्-कारम् । अपगूर्येत्यप-गूर्य । वषट् । करोति । स्तृत्यै । गाय
त्री । पुरोनुवाक्येतिपुरः-अनुवाक्या । भवति । त्रिष्टुक् । याज्या । ब्रह्मन् । एव ।
ख्षत्रम् । अन्वारम्भयतीत्यनु-आरम्भयति । तस्मात् । ब्राह्मणः । मुख्यः । मुख्यः ।
भवति । यः । एवम् । वेद । प्रेति । एव । एनम् । पुरोनुवाक्ययेतिपुरः-अनुवा
क्यया । आह । प्रेति । नयति । याज्यया । गमयति । वषट्कारेणेतिवषट्-कारेण ।

एति । एव । एनम् । पुरोनुवाक्यंयेतिपुरः-अनुवाक्यंया । दत्ते । प्रेति । यच्छति । याज्यंया । प्रतीति । [१२] वषट् कारेणेतिवषट्-कारेण । स्थापयति । त्रिपदेतित्रि-पदा । पुरोनुवाक्येतिपुरः-अनुवाक्या । भवति । त्रयः । इमे । लोकाः । एषु । एव । लोकेषु । प्रतीति । तिष्ठति । चतुंष्पदेतिचतुः-पदा । याज्या । चतुंष्पदइतिचतुः-पदः । एव । पशून् । अवेति । रुन्धे । द्व्यक्षरइतिद्वि-अक्षरः । वषट् कारइतिवषट्-कारः । द्विपादितिद्वि-पात् । यजमानः । पशुषु । एव । उपरिष्टात् । प्रतीति । तिष्ठति । गायत्री । पुरोनुवाक्येतिपुरः-अनुवाक्या । भवति । त्रिष्टुक् । याज्या । एषा । वै । सप्तपदेतिसप्त-पदा । शक्वरी । यत् । वै । एतया । देवाः । अशिक्षन् । तत् । अशक्नुवन्न् । यः । एवम् । वेदं । शक्नोति । एव । यत् । शिक्षति ॥ [१३] देवतानाङ्करोत्युपरिष्टाल्लुक्ष्माज्यभागौप्रतिशक्नोत्येवद्वेच ॥ ❀ ❀ ॥ २ ॥

प्रजापतिरितिप्रजा-पतिः । देवेभ्यः । यज्ञान् । व्यादिशदितिवि-आदिशत् । सः । आत्मन्न् । आज्यम् । अधत्त । तम् । देवाः । अब्रुवन्न् । एषः । वाव । यज्ञः । यत् । आज्यम् । अपीति । एव । नः । अत्रं । अस्तु । इति । सः । अब्रवीत् । यजान् । वः । आज्यभागावित्याज्य-भागौ । उपेति । स्तृणान् । अभीति । घारयान् । इति । तस्मात् । यजन्ति । आज्यभागावित्याज्य-भागौ । उपेति । स्तृणन्ति । अभीति । घारयन्ति । ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । कस्मात् । सत्यात् । यातयामानीतियात-यामानि । अन्यानि । हवीꣳषि । अयातयाममित्ययात-यामम् । आज्यम् । इति । प्राजापत्यमितिप्राजा-पत्यम् । [१४] इति । ब्रूयात् । अयातयामेत्ययात-यामा । हि । देवानाम् । प्रजापतिरितिप्रजा-पतिः । इति । छन्दाꣳसि । देवेभ्यः । अपेति । अक्रामन्न् । न । वः । अभागानि । हव्यम् । वक्ष्यामः । इति । तेभ्यः । एतत् । चतुरवत्तमितिचतुः-अवत्तम् । अधारयन्न् । पुरोनुवाक्यायाइतिपुरः-अनुवाक्यायै । याज्यायै । देवतायै । वषट्कारायेतिवषट्-काराय । यत् । चतुरवत्तमितिचतुः-अवत्तम् । जुहोति । छन्दाꣳसि । एव । तत् । प्रीणाति । तानि । अस्य । प्रीतानि । देवेभ्यः । हव्यम् । वहन्ति । अङ्गिरसः । वै । इतः । उत्तमाइत्युत्-तमाः । सुवर्गमितिसुवः-गम् । लोकम् । आयन्न् । तत् । ऋषयः । यज्ञवास्त्वितियज्ञ-वास्तु । अभ्यवायन्नित्यभि-अवायन्न् । ते । [१५] अपश्यन्न् । पुरो

डाशम् । कूर्मम् । भूतम् । सर्पन्तम् । तम् । अब्रुवन्न् । इन्द्राय । ध्रियस्व । बृहस्पतये । ध्रियस्व । विश्वेभ्यः । देवेभ्यः । ध्रियस्व । इति । सः । न । अध्रियत । तम् । अब्रुवन्न् । अग्नये । ध्रियस्व । इति । सः । अग्नये । अध्रियत । यत् । आग्नेयः । अष्टाकपालइत्यष्टा-कपालः । अमावास्यायामित्यमा-वास्यायाम् । च । पौर्णमास्यामितिपौर्ण-मास्याम् । च । अच्युतः । भवति । सुवर्गस्येतिसुवः-गस्य । लोकस्य । अभिजित्याइत्यभि-जित्यै । तम् । अब्रुवन्न् । कथा । अहास्थाः । इति । अनुपाक्तइत्यनुप-अक्तः । अभूवम् । इति । अब्रवीत् । यथा । अक्षः । अनुपाक्तइत्यनुप-अक्तः । [१६] अवार्च्छतीत्यव-ऋच्छति । एवम् । अवेति । आरम् । इति । उपरिष्टात् । अभ्यज्येत्यभि-अज्य । अधस्तात् । उपेति । अनक्ति । सुवर्गस्येतिसुवः-गस्य । लोकस्य । समष्ट्याइतिसं-अष्ट्यै । सर्वाणि । कपालानि । अभीति । प्रथयति । तावतः । पुरोडाशान् । अमुष्मिन्न् । लोके । अभीति । जयति । यः । विदग्धइतिवि-दग्धः । सः । नैरृतइतिनैः-ऋतः । यः । अशृतः । सः । रौद्रः । यः । शृतः । सः । सदेवइतिस-देवः । तस्मात् । अविदहतेत्यवि-दहता । शृतङ्कृत्यइतिशृतं-कृत्यः । सदेवत्वायेतिसदेव-त्वाय । भस्मना । अभीति । वासयति । तस्मात् । माꣳसेन । अस्थि । छन्नम् । वेदेन । अभीति । वासयति । तस्मात् । [१७] केशैः । शिरः । छन्नम् । प्रच्युतमितिप्र-च्युतम् । वै । एतत् । अस्मात् । लोकात् । अगतम् । देवलोकमितिदेव-लोकम् । यत् । शृतम् । हविः । अनभिघारितमित्यनभि-घारितम् । अभिघार्येत्यभि-घार्य । उदिति । वासयति । देवत्रेतिदेव-त्रा । एव । एनत् । गमयति । यदि । एकम् । कपालम् । नश्येत् । एकः । मासः । सꣳवथ्सरस्येतिसं-वथ्सरस्य । अनवेतइत्यनव-इतः । स्यात् । अथ । यजमानः । प्रेति । मीयेत । यत् । द्वे इति । नश्येताम् । द्वौ । मासौ । सꣳवथ्सरस्येतिसं-वथ्सरस्य । अनवेतावित्यनव-इतौ । स्याताम् । अथ । यजमानः । प्रेति । मीयेत । सङ्ख्यायेतिसं-ख्याय । उदिति । वासयति । यजमानस्य । [१८] गोपीथाय । यदि । नश्येत् । आश्विनम् । द्विकपालमितिद्वि-कपालम् । निरिति । वपेत् । द्यावापृथिव्यमितिद्यावा-पृथिव्यम् । एककपालमित्येक-कपालम् । अश्विनौ । वै । देवानाम् । भिषजौ । ताभ्याम् । एव । अस्मै । भेषजम् । करोति । द्यावापृथिव्यइतिद्यावा-पृथिव्यः । एककपालइत्येक-कपालः ।

भवति । अनयोः । वै । एतत् । नश्यति । यत् । नश्यति । अनयोः । एव । एनत् । विन्दति । प्रतिष्ठित्याइतिप्रति-स्थित्यै ॥ [ १९ ] प्राजापत्यन्तेऽस्षोऽनुपाक्तोवेदेन । भिवासयतितस्माद्यजमानस्यद्वात्रिंशच्च ॥ ❀ ❀ ॥ ३ ॥

देवस्य । त्वा । सवितुः । प्रसवइतिप्र-सवे । इति । स्फ्यम् । एति । दत्ते । प्रसूत्याइतिप्र-सूत्यै । अश्विनोः । बाहुभ्यामितिबाहु-भ्याम् । इति । आह । अश्विनौ । हि । देवानाम् । अध्वर्यूइति । आस्ताम् । पूष्णः । हस्ताभ्याम् । इति । आह । यत्यै । शतभृष्टिरितिशत-भृष्टिः । असि । वानस्पत्यः । द्विषतः । वधः । इति । आह । वज्रम् । एव । तत् । समिति । श्यति । भ्रातृव्याय । प्रहरिष्यन्नितिप्र-हरिष्यन् । स्तम्बयजुरितिस्तम्ब-यजुः । हरति । एतावती । वै । पृथिवी । यावती । वेदिः । तस्याः । एतावतः । एव । भ्रातृव्यम् । निरिति । भजति । [ २० ] तस्मात् । न । अभागम् । निरिति । भजन्ति । त्रिः । हरति । त्रयः । इमे । लोकाः । एभ्यः । एव । एनम् । लोकेभ्यः । निरिति । भजति । तूष्णीम् । चतुर्थम् । हरति । अपरिमितादित्यपरि-मितात् । एव । एनम् । निरिति । भजति । उदिति । हन्ति । यत् । एव । अस्याः । अमेध्यम् । तत् । अपेति । हन्ति । उदिति । हन्ति । तस्मात् । ओषधयः । परेति । भवन्ति । मूलम् । छिनत्ति । भ्रातृव्यस्य । एव । मूलम् । छिनत्ति । पितृदेवत्येतिपितृ-देवत्या । अतिखातेत्यति-खाता । इयतीम् । खनति । प्रजापतिनेतिप्रजा-पतिना । [२१] यज्ञमुखेनेतियज्ञ-मुखेन । संमितामितिसं-मिताम् । एति । प्रतिष्ठायाइतिप्रति-स्थायै । खनति । यजमानम् । एव । प्रतिष्ठामितिप्रति-स्थाम् । गमयति । दक्षिणतः । वर्षीयसीम् । करोति । देवयजनस्येतिदेव-यजनस्य । एव । रूपम् । अकः । पुरीषवतीमितिपुरीष-वतीम् । करोति । प्रजेतिप्र-जा । वै । पशवः । पुरीषम् । प्रजयेतिप्र-जया । एव । एनम् । पशुभिरितिपशु-भिः । पुरीषवन्तमितिपुरीष-वन्तम् । करोति । उत्तरमित्युत्-तरम् । परिग्राहमितिपरि-ग्राहम् । परीति । गृह्णाति । एतावती । वै । पृथिवी । यावती । वेदिः । तस्याः । एतावतः । एव । भ्रातृव्यम् । निर्भज्येतिनिः-भज्य । आत्मने । उत्तरमित्युत्-तरम् । परिग्राहमितिपरि-ग्राहम् । परीति । गृह्णाति । क्रूरम् । इव । वै । [२२] एतत् । करोति । यत् । वेदिम् । करोति । धाः । असि । स्वधेतिस्व-धा । असि । इति । योयुप्यते । शा

न्त्यै । प्रोक्षणीरितिप्र-उक्षणीः । एति । सादयति । आपः । वै । रक्षोघ्नीरितिरक्षः-घ्नीः । रक्षसाम् । अपहत्याइत्यप-हत्यै । स्फ्यस्य । वर्त्मन् । सादयति । यज्ञस्य । सन्तत्याइतिसं-तत्यै । यम् । द्विष्यात् । तम् । ध्यायेत् । शुचा । एव । एनम् । अर्पयति ॥ [ २३ ] भजतिप्रजापतिनेववैत्रयस्त्रिꣳशच्च ॥ ❀ ❀ ॥ ४ ॥

ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । अद्भिरित्यत्-भिः । हवीꣳषि । प्रेति । औक्षीः । केन । अपः । इति । ब्रह्मणा । इति । ब्रूयात् । अद्भिरित्यत्-भिः । हि । एव । हवीꣳषि । प्रोक्षतीतिप्र-उक्षति । ब्रह्मणा । अपः । इध्माबर्हिरितीध्मा-बर्हिः । प्रेति । उक्षति । मेध्यम् । एव । एनत् । करोति । वेदिम् । प्रेति । उक्षति । ऋक्षा । वै । एषा । अलोमका । अमेध्या । यत् । वेदिः । मेध्याम् । एव । एनाम् । करोति । दिवे । त्वा । अन्तरिक्षाय । त्वा । पृथिव्यै । त्वा । इति । बर्हिः । आसाद्येत्या-साद्य । प्रेति । [ २४ ] उक्षति । एभ्यः । एव । एनत् । लोकेभ्यः । प्रेति । उक्षति । क्रूरम् । इव । वै । एतत् । करोति । यत् । खनति । अपः । नीति । नयति । शान्त्यै । पुरस्तात् । प्रस्तरमितिप्र-स्तरम् । गृह्णाति । मुख्यम् । एव । एनम् । करोति । इयन्तम् । गृह्णाति । प्रजापतिनेतिप्रजा-पतिना । यज्ञमुखेनेतियज्ञ-मुखेन । सम्मितमितिसं-मितम् । बर्हिः । स्तृणाति । प्रजाइतिप्र-जाः । वै । बर्हिः । पृथिवी । वेदिः । प्रजाइतिप्र-जाः । एव । पृथिव्याम् । प्रतीति । स्थापयति । अनतिदृश्नमित्यनति-दृश्नम् । स्तृणाति । प्रजयेतिप्र-जया । एव । एनम् । पशुभिरिति पशु-भिः । अनतिदृश्नमित्यनति-दृश्नम् । करोति । [२५] उत्तरमित्युत-तरम् । बर्हिषः । प्रस्तरमितिप्र-स्तरम् । सादयति । प्रजाइतिप्र-जाः । वै । बर्हिः । यजमानः । प्रस्तरइतिप्र-स्तरः । यजमानम् । एव । अयजमानात् । उत्तरमित्युत-तरम् । करोति । तस्मात् । यजमानः । अयजमानात् । उत्तरइत्युत-तरः । अन्तः । दधाति । व्यावृत्त्याइतिवि-आवृत्त्यै । अनक्ति । हविष्कृतमितिहविः-कृतम् । एव । एनम् । सुवर्गमितिसुवः-गम् । लोकम् । गमयति । त्रेधा । अनक्ति । त्रयः । इमे । लोकाः । एभ्यः । एव । एनम् । लोकेभ्यः । अनक्ति । न । प्रतीति । शृणाति । यत् । प्रतिशृणीयादितिप्रति-शृणीयात् । अनूर्ध्वम्भावुकमित्यनूर्ध्वं-भावुकम् । यजमानस्य । स्यात् । उपरि । इव । प्रेति । हरति । [ २६ ] उपरि । इव । हि । सुवर्गइतिसुवः-

गः । लोकः । नीति । यच्छति । वृष्टिम् । एव । अस्मै । नीति । यच्छति । न । अत्यग्रमित्यति-अग्रम् । प्रेति । हरेत् । यत् । अत्यग्रमित्यति-अग्रम् । प्रहरेदितिप्र-हरेत् । अत्यासारिणीत्यति-आसारिणी । अध्वर्योः । नाशुका । स्यात् । न । पुरस्तात् । प्रतीति । अस्येत् । यत् । पुरस्तात् । प्रत्यस्येदितिप्रति-अस्येत् । सुवर्गादितिसुवः-गात् । लोकात् । यजमानम् । प्रतीति । नुदेत् । प्राञ्चम् । प्रेति । हरति । यजमानम् । एव । सुवर्गमितिसुवः-गम् । लोकम् । गमयति । न । विष्वञ्चम् । वीति । युयात् । यत् । विष्वञ्चम् । वियुयादितिवि-युयात् । [२७] स्त्री । अस्य । जायेत । ऊर्ध्वम् । उदिति । यौति । ऊर्ध्वम् । इव । हि । पुꣳसः । पुमान् । एव । अस्य । जायते । यत् । स्फ्येन । वा । उपवेषेणेत्युप-वेषेण । वा । योयुप्येत । स्तृतिः । एव । अस्य । सा । हस्तेन । योयुप्यते । यजमानस्य । गोपीथाय । ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । किम् । यज्ञस्य । यजमानः । इति । प्रस्तरइतिप्र-स्तरः । इति । तस्य । क्व । सुवर्गइतिसुवः-गः । लोकः । इति । आहवनीयइत्या-हवनीयः । इति । ब्रूयात् । यत् । प्रस्तरमितिप्र-स्तरम् । आहवनीयइत्या-हवनीये । प्रहरतीतिप्र-हरति । यजमानम् । एव । [२८] सुवर्गमितिसुवः-गम् । लोकम् । गमयति । वीति । वै । एतत् । यजमानः । लिशते । यत् । प्रस्तरमितिप्र-स्तरम् । योयुप्यन्ते । बर्हिः । अनु । प्रेति । हरति । शान्त्यै । अनारम्भणइत्यना-रम्भणः । इव । वै । एतर्हि । अध्वर्युः । सः । ईश्वरः । वेपनः । भवितोः । ध्रुवा । असि । इति । इमाम् । अभीति । मृशति । इयम् । वै । ध्रुवा । अस्याम् । एव । प्रतीति । तिष्ठति । न । वेपनः । भवति । अगा (३) न् । अग्नीदित्यग्नि-इत् । इति । आह । यत् । ब्रूयात् । अगन्न् । अग्निः । इति । अग्नौ । अग्निम् । गमयेत् । निरिति । यजमानम् । सुवर्गादितिसुवः-गात् । लोकात् । भजेत् । अगन्न् । इति । एव । ब्रूयात् । यजमानम् । एव । सुवर्गमितिसुवः-गम् । लोकम् । गमयति ॥ [२९] आसाद्यप्रानतिहरत्यङ्क्रोतिहरतिवियुयाद्यजमानमेवाग्निरिति सप्तदश च ॥ ❀ ॥ ५ ॥

अग्नेः । त्रयः । ज्यायाꣳसः । भ्रातरः । आसन्न् । ते । देवेभ्यः । हव्यम् । वहन्तः । प्रेति । अमीयन्त । सः । अग्निः । अबिभेत् । इत्थम् । वाव । स्यः । आर्तिम् । एति । अरिष्यति । इति । सः । निलायत । सः । अपः । प्रेति । अविशत् । तम् ।

देवताः । प्रैषमितिप्र-एषम् । ऐच्छन्न् । तम् । मथ्स्यः । प्रेति । अब्रवीत् । तम् । अ शपत् । धियाधियेतिधिया-धिया । त्वा । वध्यासुः । यः । मा । प्रेति । अवोचः । इति । तस्मात् । मथ्स्यम् । धियाधियेतिधिया-धिया । घ्नन्ति । शप्तः । [ ३० ] हि । तम् । अन्विति । अविन्दन्न् । तम् । अब्रुवन्न् । उपेति । नः । एति । वर्तस्व । हव्यम् । नः । वह । इति । सः । अब्रवीत् । वरम् । वृणै । यत् । एव । गृहीतस्य । अहुतस्य । बहिः परिधीतिबहिः-परिधि । स्कन्दात् । तत् । मे । भ्रातृणाम् । भागधेयमितिभाग-धेयम् । असत् । इति । तस्मात् । यत् । गृहीतस्य । अहुतस्य । बहिःपरिधीतिबहिः-परिधि । स्कन्दति । तेषाम् । तत् । भागधेयमितिभाग-धेयम् । तान् । एव । तेन । प्रीणाति । परिधीनितिपरि-धीन् । परीति । दधाति । रक्षसाम् । अपहत्याइत्यप-हत्यै । समिति । स्पर्शयति । [ ३१ ] रक्षसाम् । अनन्ववचारायेत्यनन्नु-अवचाराय । न । पुरस्तात् । परीति । दधाति । आदित्यः । हि । एव । उद्यन्नित्युत्-यन्न् । पुर स्तात् । रक्षाꣳसि । अपहन्तीत्यप-हन्ति । ऊर्ध्वेइति । समिधावितिसं-इधौ । एति । दधाति । उपरिष्टात् । एव । रक्षाꣳसि । अपेति । हन्ति । यजुषा । अन्याम् । तू ष्णीम् । अन्याम् । मिथुनत्वायेतिमिथुन-त्वाय । द्वेइति । एति । दधाति । द्विपा दितिद्वि-पात् । यजमानः । प्रतिष्ठित्या इतिप्रति-स्थित्यै । ब्रह्मवादिनइतिब्रह्म-वा दिनः । वदन्ति । सः । तु । वै । यजेत । यः । यज्ञस्य । आर्त्या । वसीयान् । स्यात् । इति । भूपतयइतिभू-पतये । स्वाहा । भुवनपतयइतिभुवन-पतये । स्वाहा । भूता नाम् । [ ३२ ] पतये । स्वाहा । इति । स्कन्नम् । अन्विति । मन्त्रयेत । यज्ञस्य । एव । तत् । आर्त्या । यजमानः । वसीयान् । भवति । भूयसीः । हि । देवताः । प्रीणाति । जामि । वै । एतत् । यज्ञस्य । क्रियते । यत् । अन्वञ्चौ । पुरोडाशौ । उपाꣳशुया जमित्युपाꣳशु-याजम् । अन्तरा । यजति । अजामित्वायेत्यजामि-त्वाय । अथोइति । मिथुनत्वायेतिमिथुन-त्वाय । अग्निः । अमुष्मिन्न् । लोके । आसीत् । यमः । अ स्मिन्न् । ते । देवाः । अब्रुवन्न् । एति । इत । इमौ । वि । परीति । ऊहाम । इति । अन्नाद्येनेत्यन्न-अद्येन । देवाः । अग्निम् । [ ३३ ] उपामन्त्रयन्तेत्युप-अमन्त्रयन्त । राज्येन । पितरः । यमम् । तस्मात् । अग्निः । देवानाम् । अन्नादइत्यन्न-अदः । यमः । पितृणाम् । राजा । यः । एवम् । वेद । प्रेति । राज्यम् । अन्नाद्यमित्यन्न-अद्यम् ।

आप्नोति । तस्मै । एतत् । भागधेयमितिभाग-धेयम् । प्रेति । अयच्छन् । यत् । अग्नये । स्विष्टकृतइतिस्विष्ट-कृते । अवद्यन्तीत्यव-द्यन्ति । यत् । अग्नये । स्विष्टकृतइति स्विष्ट-कृते । अवद्यतीत्यव-द्यति । भागधेयेनेतिभाग-धेयेन । एव । तत् । रुद्रम् । स मिति । अर्द्धयति । सकृत्सकृदितिसकृत्-सकृत् । अवेति । द्यति । सकृत् । इव । हि । रुद्रः । उत्तरार्द्धादित्युत्तर-अर्द्धात् । अवेति । द्यति । एषा । वै । रुद्रस्य । [३४] दिक् । स्वायाम् । एव । दिशि । रुद्रम् । निरवदयतइतिनिः-अवदयते । द्विः । अ भीति । घारयति । चतुरवत्तस्येतिचतुः-अवत्तस्य । आप्त्यै । पशवः । वै । पूर्वाः । आ हुतयइत्या-हुतयः । एषः । रुद्रः । यत् । अग्निः । यत् । पूर्वाः । आहुतीरित्या-हुतीः । अभीति । जुहुयात् । रुद्राय । पशून् । अपीति । दध्यात् । अपशुः । यजमानः । स्यात् । अतिहायेत्यति-हाय । पूर्वाः । आहुतीरित्या-हुतीः । जुहोति । पशूनाम् । गोपीथाय ॥ [३५] शत्रस्स्पर्शयतिभूतानामग्निᳪ रुद्रस्यसप्तत्रिᳪ शच ॥ ॥६॥

मनुः । पृथिव्याः । यज्ञियम् । ऐच्छन् । सः । घृतम् । निषिक्तमितिनि-सि क्तम् । अविन्दत् । सः । अब्रवीत् । कः । अस्य । ईश्वरः । यज्ञे । अपीति । कर्तोः । इति । तौ । अब्रूताम् । मित्रावरुणावितिमित्रा-वरुणौ । गोः । एव । आवम् । ईश्व रौ । कर्तोः । स्वः । इति । तौ । ततः । गाम् । समिति । ऐरयताम् । सा । यत्रयत्रे तियत्र-यत्र । न्यक्रामदितिनि-अक्रामत् । ततः । घृतम् । अपीड्यत । तस्मात् । घृतपदीतिघृत-पदी । उच्यते । तत् । अस्यै । जन्म । उपहूतमित्युप-हूतम् । रथन्त रमितिरथं-तरम् । सह । पृथिव्या । इति । आह । [३६] इयम् । वै । रथन्तरमिति रथं-तरम् । इमाम् । एव । सह । अन्नाद्येनेत्यन्न-अद्येन । उपेति । ह्वयते । उपहूतमि त्युप-हूतम् । वामदेव्यमितिवाम-देव्यम् । सह । अन्तरिक्षेण । इति । आह । पशवः । वै । वामदेव्यमितिवाम-देव्यम् । पशून् । एव । सह । अन्तरिक्षेण । उपेति । ह्व यते । उपहूतमित्युप-हूतम् । बृहत् । सह । दिवा । इति । आह । ऐरम् । वै । बृहत् । इराम् । एव । सह । दिवा । उपेति । ह्वयते । उपहूताइत्युप-हूताः । सप्त । होत्राः । इति । आह । होत्राः । एव । उपेति । ह्वयते । उपहूतेत्युप-हूता । धेनुः । [३७] सहर्षभेतिसह-ऋषभा । इति । आह । मिथुनम् । एव । उपेति । ह्वयते । उपहूत इत्युप-हूतः । भक्षः । सखा । इति । आह । सोमपीथमितिसोम-पीथम् । एव । उपेति ।

हूयते । उपहूताँ (४) इत्युप-हूताँ (४)। होइति । इति । आह । आत्मानम् । एव । उपेति । हूयते । आत्मा । हि । उपहूतानामित्युप-हूतानाम् । वसिष्ठः । इडाम् । उपेति । हूयते । पशवः । वै । इडा । पशून् । एव । उपेति । हूयते । चतुः । उपेति । हूयते । चतुष्पादइतिचतुः-पादः । हि । पशवः । मानवी । इति । आह । मनुः । हि । एताम् । [३८] अग्रे । अपश्यत् । घृतपदीतिघृत-पदी । इति । आह । यत् । एव । अस्यै । पदात् । घृतम् । अपीब्यत । तस्मात् । एवम् । आह । मैत्रावरुणीतिमैत्रा-वरुणी । इति । आह । मित्रावरुणावितिमित्रा-वरुणौ । हि । एनाम् । समैरयतामितिसं-ऐरयताम् । ब्रह्म । देवकृतमितिदेव-कृतम् । उपहूतमित्युप-हूतम् । इति । आह । ब्रह्म । एव । उपेति । हूयते । दैव्याः । अध्वर्यवः । उपहूताइत्युप-हूताः । उपहूताइत्युप-हूताः । मनुष्याः । इति । आह । देवमनुष्यानितिदेव-मनुष्यान् । एव । उपेति । हूयते । ये । इमम् । यज्ञम् । अवान् । ये । यज्ञपतिमितियज्ञ-पतिम् । वर्द्धान् । इति । आह । [३९] यज्ञाय । च । एव । यजमानाय । च । आशिषमित्या-शिषम् । एति । शास्ते । उपहूतेइत्युप-हूते । द्यावापृथिवीइतिद्यावा-पृथिवी । इति । आह । द्यावापृथिवीइतिद्यावा-पृथिवी । एव । उपेति । हूयते । पूर्वजेइतिपूर्व-जे । ऋतावरीइत्यृत-वरी । इति । आह । पूर्वजेइतिपूर्व-जे । हि । एतेइति । ऋतावरीइत्यृत-वरी । देवीइति । देवपुत्रेइतिदेव-पुत्रे । इति । आह । देवीइति । हि । एतेइति । देवपुत्रेइतिदेव-पुत्रे । उपहूतइत्युप-हूतः । अयम् । यजमानः । इति । आह । यजमानम् । एव । उपेति । हूयते । उत्तरस्यामित्युत्-तरस्याम् । देवयज्यायामितिदेव-यज्यायाम् । उपहूतइत्युप-हूतः । भूयसि । हविष्करणइतिहविः-करणे । उपहूतइत्युप-हूतः । दिव्ये । धामन् । उपहूतइत्युप-हूतः । [४०] इति । आह । प्रजेतिप्र-जा । वै । उत्तरेत्युत्-तरा । देवयज्येतिदेव-यज्या । पशवः । भूयः । हविष्करणमितिहविः-करणम् । सुवर्गइतिसुवः-गः । लोकः । दिव्यम् । धाम । इदम् । असि । इदम् । असि । इति । एव । यज्ञस्य । प्रियम् । धाम । उपेति । हूयते । विश्वम् । अस्य । प्रियम् । उपहूतमित्युप-हूतम् । इति । आह । अछम्बट्कारमित्यछम्बट्-कारम् । एव । उपेति । हूयते ॥ [४१] आहधेनुरेताँवर्द्धानित्याहधामन्नुपहूतश्चतुस्त्रिँशच्च ॥७॥

पशवः । वै । इडा । स्वयम् । एति । दत्ते । कामम् । एव । आत्मना । पशू

नाम् । एति । दत्ते । न । हि । अन्यः । कामम् । पशूनाम् । प्रयच्छतीतिप्र-यच्छति । वाचः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । वाचम् । एव । भागधेयेने तिभाग-धेयेन । प्रीणाति । सदसः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । स्वगाकृत्याइतिस्वगा-कृत्यै । चतुरवत्तमितिचतुः-अवत्तम् । भवति । हविः । वै । चतुरवत्तमितिचतुः-अवत्तम् । पशवः । चतुरवत्तमितिचतुः-अवत्तम् । यत् । होता । प्रा श्नीयादितिप्र-अश्नीयात् । होता । [४२] आर्तिम् । एति । ऋच्छेत् । यत् । अग्नौ । जुहुयात् । रुद्राय । पशून् । अपीति । दध्यात् । अपशुः । यजमानः । स्यात् । वाचः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । परोक्षमितिपरः-अक्षम् । एव । एनत् । जुहोति । सदसः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । स्व गाकृत्याइतिस्वगा-कृत्यै । प्रेति । अश्नन्ति । तीर्थे । एव । प्रेति । अश्नन्ति । दक्षि णाम् । ददाति । तीर्थे । एव । दक्षिणाम् । ददाति । वीति । वै । एतत् । यज्ञम् । [४३] छिन्दन्ति । यत् । मध्यतः । प्राश्नन्तीतिप्र-अश्नन्ति । अद्भिरित्यत्-भिः । मार्जयन्ते । आपः । वै । सर्वाः । देवताः । देवताभिः । एव । यज्ञम् । समिति । त न्वन्ति । देवाः । वै । यज्ञात् । रुद्रम् । अन्तः । आयन् । सः । यज्ञम् । अविध्यत् । तम् । देवाः । अभि । समिति । अगच्छन्त । कल्पताम् । नः । इदम् । इति । ते । अ ब्रुवन् । स्विष्टमितिसु-इष्टम् । वै । नः । इदम् । भविष्यति । यत् । इमम् । राधयिष्या मः । इति । तत् । स्विष्टकृतइतिस्विष्ट-कृतः । स्विष्टकृत्त्वमितिस्विष्टकृत-त्वम् । तस्य । आविद्धमित्या-विद्धम् । निरिति । [४४] अकृन्तन् । यवेन । सम्मितमितिसं-मि तम् । तस्मात् । यवमात्रमितियव-मात्रम् । अवेति । द्येत् । यत् । ज्यायः । अवद्ये दित्यव-द्येत् । रोपयेत् । तत् । यज्ञस्य । यत् । उपेति । च । स्तृणीयात् । अभीति । च । घारयेत् । उभयतस्सꣳश्वायीत्युभयतः-सꣳश्वायि । कुर्यात् । अवदायेत्यव-दाय । अभीति । घारयति । द्विः । समिति । पद्यते । द्विपादितिद्वि-पात् । यजमानः । प्र तिष्ठित्याइतिप्रति-स्थित्यै । यत् । तिरश्चीनम् । अतिहरेदित्यति-हरेत् । अनभिविद्धमि त्यनभि-विद्धम् । यज्ञस्य । अभीति । विध्येत् । अग्रेण । परीति । हरति । तीर्थेन । एव । परीति । हरति । तत् । पूष्णे । परीति । अहरन् । तत् । [४५] पूषा । प्राश्ये तिप्र-अश्य । दतः । अरुणत् । तस्मात् । पूषा । प्रपिष्टभागइतिप्रपिष्ट-भागः । अदन्तकः ।

हि । तम् । देवाः । अब्रुवन्न् । वीति । वै । अयम् । आर्द्धि । अप्राशित्रियइत्यप्र-अ
शित्रियः । वै । अयम् । अभूत् । इति । तत् । बृहस्पतये । परीति । अहरन्न् । सः ।
अबिभेत् । बृहस्पतिः । इत्थम् । वाव । स्यः । आर्तिम् । एति । अरिष्यति । इति ।
सः । एतम् । मन्त्रम् । अपश्यत् । सूर्यस्य । त्वा । चक्षुषा । प्रतीति । पश्यामि ।
इति । अब्रवीत् । न । हि । सूर्यस्य । चक्षुः । [४६] किम् । चन । हिनस्ति । सः ।
अबिभेत् । प्रतिगृह्णन्तमितिप्रति-गृह्णन्तम् । मा । हिंसिष्यति । इति । देवस्य ।
त्वा । सवितुः । प्रसवइतिप्र-सवे । अश्विनोः । बाहुभ्यामितिबाहु-भ्याम् । पूष्णः ।
हस्ताभ्याम् । प्रतीति । गृह्णामि । इति । अब्रवीत् । सवितृप्रसूतइतिसवितृ-प्रसूतः ।
एव । एनत् । ब्रह्मणा । देवताभिः । प्रतीति । अगृह्णात् । सः । अबिभेत् । प्राश्न
न्तमितिप्र-अश्नन्तम् । मा । हिंसिष्यति । इति । अग्नेः । त्वा । आस्येन । प्रेति ।
अश्नामि । इति । अब्रवीत् । न । हि । अग्नेः । आस्यम् । किम् । चन । हिनस्ति ।
सः । अबिभेत् । [४७] प्राशितमितिप्र-अशितम् । मा । हिंसिष्यति । इति । ब्रा
ह्मणस्य । उदरेण । इति । अब्रवीत् । न । हि । ब्राह्मणस्य । उदरम् । किम् । चन ।
हिनस्ति । बृहस्पतेः । ब्रह्मणा । इति । सः । हि । ब्रह्मिष्ठः । अपेति । वै । एतस्मात् ।
प्राणाइतिप्र-अनाः । क्रामन्ति । यः । प्राशित्रमितिप्र-अशित्रम् । प्राश्नातीतिप्र-अ
श्नाति । अद्भिरित्यत्-भिः । मार्जयित्वा । प्राणानितिप्र-अनान् । समिति । मृश
ते । अमृतम् । वै । प्राणाइतिप्र-अनाः । अमृतम् । आपः । प्राणानितिप्र-अनान् ।
एव । यथास्थानमितियथा-स्थानम् । उपेति । ह्वयते ॥ [४८] प्राश्नीयाद्धोतायज्ञ
न्निरहरन्तचक्षुरास्यङ्किञ्चनहिनस्तिसोऽबिभेच्चतुश्चत्वारिंशच्च ॥ ❀ ॥८॥

अग्नीधइत्यग्नि-इधे । एति । दधाति । अग्निमुखानित्यग्नि-मुखान् । एव । ऋ
तून् । प्रीणाति । समिधमितिसं-इधम् । एति । दधाति । उत्तरासामित्युत्-तरसाम् ।
आहुतीनामित्या-हुतीनाम् । प्रतिष्ठित्याइतिप्रति-स्थित्यै । अथोइति । समिद्वतीति
समित्-वति । एव । जुहोति । परिधीनितिपरि-धीन् । समिति । मार्ष्टि । पुनाति । एव ।
एनान् । सकृथ्सकृदितिसकृत्-सकृत् । समिति । मार्ष्टि । पराङ् । इव । हि । एतर्
हि । यज्ञः । चतुः । समिति । पद्यते । चतुष्पादइतिचतुः-पादः । पशवः । पशून् ।
एव । अवेति । रुन्धे । ब्रह्मन् । प्रेति । स्थास्यामः । इति । आह । अत्र । वै । एतर्हि ।

यज्ञः । श्रितः । [४९] यत्रं । ब्रह्मा । यत्रं । एव । यज्ञः । श्रितः । ततः । एव । ए
नम् । एति । रभते । यत् । हस्तेन । प्रमीवेदितिप्र-मीवेत् । वेपनः । स्यात् । यत् ।
शीर्ष्णा । शीर्षक्तिमानितिशीर्षक्ति-मान् । स्यात् । यत् । तूष्णीम् । आसीत ।
असंम्प्रत्तइत्यसं-प्रत्तः । यज्ञः । स्यात् । प्रेति । तिष्ठ । इति । एव । ब्रूयात् । वाचि ।
वै । यज्ञः । श्रितः । यत्रं । एव । यज्ञः । श्रितः । ततः । एव । एनम् । सम् । प्रेति ।
यच्छति । देव । सवितः । एतत् । ते । प्रेति । [५०] आह । इति । आह । प्रसूत्या
इतिप्र-सूत्यै । बृहस्पतिः । ब्रह्मा । इति । आह । सः । हि । ब्रह्मिष्ठः । सः । यज्ञम् ।
पाहि । सः । यज्ञपतिमितियज्ञ-पतिम् । पाहि । सः । माम् । पाहि । इति । आह ।
यज्ञाय । यजमानाय । आत्मने । तेभ्यः । एव । आशिषमित्या-शिषम् । एति । शा
स्ते । अनार्त्यै । आश्राव्येत्या-श्राव्य । आह । देवान् । यज । इति । ब्रह्मवादिनइति
ब्रह्म-वादिनः । वदन्ति । इष्टाः । देवताः । अथ । कतमे । एते । देवाः । इति ।
छन्दाꣳसि । इति । ब्रूयात् । गायत्रीम् । त्रिष्टुभम् । [५१] जगतीम् । इति । अ
थोइति । खलु । आहुः । ब्राह्मणाः । वै । छन्दाꣳसि । इति । तान् । एव । तत् । य
जति । देवानाम् । वै । इष्टाः । देवताः । आसन्न् । अथ । अग्निः । न । उदिति । अज्व
लत् । तम् । देवाः । आहुतीभिरित्याहुति-भिः । अनूयाजेष्वित्यनु-याजेषु । अन्वि
ति । अविन्दन्न् । यत् । अनूयाजानित्यनु-याजान् । यजति । अग्निम् । एव । तत् ।
समिति । इन्धे । एतदुः । वै । नाम । आसुरः । आसीत् । सः । एतर् । हि । यज्ञस्य ।
आशिषमित्या-शिषम् । अवृङ्क्त । यत् । ब्रूयात् । एतत् । [५२] उ । द्यावापृथिवी
इतिद्यावा-पृथिवी । भद्रम् । अभूत् । इति । एतदुम् । एव । आसुरम् । यज्ञस्य । आ
शिषमित्या-शिषम् । गमयेत् । इदम् । द्यावापृथिवीइतिद्यावा - पृथिवी । भद्रम् । अ
भूत् । इति । एव । ब्रूयात् । यजमानम् । एव । यज्ञस्य । आशिषमित्या-शिषम् ।
गमयति । आध्मे । सूक्तवाकमितिसूक्त-वाकम् । उत । नमोवाकमितिनमः-वाकम् ।
इति । आह । इदम् । अराध्म । इति । वाव । एतत् । आह । उपश्रितइत्युप-श्रि
तः । दिवः । पृथिव्योः । इति । आह । द्यावापृथिव्योरितिद्यावा-पृथिव्योः । हि । यज्ञः ।
उपश्रितइत्युप-श्रितः । ओमन्वतीइत्योमन्न्-वती । ते । अस्मिन्न् । यज्ञे । यजमान ।
द्यावापृथिवीइतिद्यावा-पृथिवी । [५३] स्ताम् । इति । आह । आशिषमित्या-शिषम् ।

एव । एताम् । एति । शास्ते । यत् । ब्रूयात् । सूपावसानेतिसु-उपावसाना । च । स्वध्यवसानेतिसु-अध्यवसाना । च । इति । प्रमायुकइतिप्र-मायुकः । यजमानः । स्यात् । यदा । हि । प्रमीयतइतिप्र-मीयते । अथ । इमाम् । उपावस्यतीत्युप-अव स्यति । सूपचरणेतिसु-उपचरणा । च । स्वधिचरणेतिसु-अधिचरणा । च । इति । एव । ब्रूयात् । वरीयसीम् । एव । अस्मै । गव्यूतिम् । एति । शास्ते । न । प्रमा युकइतिप्र-मायुकः । भवति । तयोः । आविदीत्या-विदि । अग्निः । इदम् । हविः । अजुषत । इति । आह । याः । अयाख्ष्म । [ ५४ ] देवताः । ताः । अरीरधाम । इति । वाव । एतत् । आह । यत् । न । निर्दिशेदितिनिः-दिशेत् । प्रतिवेशमितिप्र ति-वेशम् । यज्ञस्य । आशीरित्या-शीः । गच्छेत् । एति । शास्ते । अयम् । यज मानः । असौ । इति । आह । निर्दिश्येतिनिः-दिश्य । एव । एनम् । सुवर्गमितिसु वः-गम् । लोकम् । गमयति । आयुः । एति । शास्ते । सुप्रजास्त्वमितिसुप्रजाः-त्वम् । एति । शास्ते । इति । आह । आशिषमित्या-शिषम् । एव । एताम् । एति । शास्ते । सजातवनस्यामितिसजात-वनस्याम् । एति । शास्ते । इति । आह । प्राणाइतिप्र-अनाः । वै । सजाताइतिस-जाताः । प्राणानितिप्र-अनान् । एव । [ ५५ ] न । अ न्तः । एति । तत् । अग्निः । देवः । देवेभ्यः । वनते । वयम् । अग्नेः । मानुषाः । इति । आह । अग्निः । देवेभ्यः । वनुते । वयम् । मनुष्येभ्यः । इति । वाव । एतत् । आह । इह । गतिः । वामस्य । इदम् । च । नमः । देवेभ्यः । इति । आह । याः । च । एव । देवताः । यजति । याः । च । न । ताभ्यः । एव । उभयीभ्यः । नमः । करोति । आत्मनः । अनार्त्यै ॥ [ ५६ ] श्रितस्तेप्रत्रिष्टुभंमेतद्द्यावापृथिवीयाअया ख्ष्मप्राणानेवषट् चत्वारिꣳशच्च ॥ ❀ ❀ ❀ ॥ ९ ॥

देवाः । वै । यज्ञस्य । स्वगाकर्तारमितिस्वगा-कर्तारम् । न । अविन्दन् । ते । शंय्युमितिशं-युम् । बार्हस्पत्यम् । अब्रुवन् । इमम् । नः । यज्ञम् । स्वगेतिस्व-गा । कुरु । इति । सः । अब्रवीत् । वरम् । वृणै । यत् । एव । अब्राह्मणोक्तइत्यब्राह्मण-उ क्तः । अश्रद्दधानइत्यश्रत्-दधानः । यजातै । सा । मे । यज्ञस्य । आशीरित्या-शीः । असत् । इति । तस्मात् । यत् । अब्राह्मणोक्तइत्यब्राह्मण-उक्तः । अश्रद्दधानइत्य श्रत्-दधानः । यजते । शंय्युमितिशं-युम् । एव । तस्य । बार्हस्पत्यम् । यज्ञस्य ।

आशीरित्या-शीः । गच्छति । एतत् । मर्म । इति । अब्रवीत् । किम् । मे । प्रजाया इतिप्र-जायाः । [५७] इति । यः । अपगुरातादृत्यप-गुराते । शतेन । यातयात् । यः । निहनदितिनि-हनत् । सहस्रेण । यातयात् । यः । लोहितम् । करवत् । याव तः । प्रस्कद्येतिप्र-स्कद्य । पाꣳसून् । सङ्गृह्णादितिसं-गृह्णात् । तावतः । सꣳवत्सरा नितिसं-वत्सरान् । पितृलोकमितिपितृ-लोकम् । न । प्रेति । जानात् । इति । तस्मात् । ब्राह्मणाय । न । अपेति । गुरेत । न । नीति । हन्यात् । न । लोहितम् । कुर्यात् । एतावता । ह । एनसा । भवति । तत् । शꣳयोरितिशं-योः । एति । वृणीमहे । इति । आह । यज्ञम् । एव । तत् । स्वगेतिस्व-गा । करोति । तत् । [५८] शय्ँयोरितिशं-योः । एति । वृणीमहे । इति । आह । शय्ँयुमितिशं-युम् । एव । बार्हस्पत्यम् । भा गधेयेनेतिभाग-धेयेन । समिति । अर्द्धयति । गातुम् । यज्ञाय । गातुम् । यज्ञपतयइति यज्ञ-पतये । इति । आह । आशिषमित्या-शिषम् । एव । एताम् । एति । शास्ते । सोमम् । यजति । रेतः । एव । तत् । दधाति । त्वष्टारम् । यजति । रेतः । एव । हितम् । त्वष्टा । रूपाणि । वीति । करोति । देवानाम् । पत्नीः । यजति । मिथुन त्वायेतिमिथुन-त्वाय । अग्निम् । गृहपतिमितिगृह-पतिम् । यजति । प्रतिष्ठित्या इतिप्रति-स्थित्यै । जामि । वै । एतत् । यज्ञस्य । क्रियते । [५९] यत् । आज्येन । प्रयाजाइतिप्र-याजाः । इज्यन्ते । आज्येन । पत्नीसय्ँयाजाइतिपत्नी-सय्ँयाजाः । ऋ चम् । अनूच्येत्यनु-उच्य । पत्नीसय्ँयाजानामितिपत्नी-सय्ँयाजानाम् । ऋचा । य जति । अजामित्वायेत्यजामि-त्वाय । अथोइति । मिथुनत्वायेतिमिथुन-त्वाय । प ङ्क्तिप्रायणइतिपङ्क्ति-प्रायणः । वै । यज्ञः । पङ्क्त्युदयनइतिपङ्क्ति-उदयनः । पञ्च । प्रयाजाइतिप्र-याजाः । इज्यन्ते । चत्वारः । पत्नीसय्ँयाजाइतिपत्नी-सय्ँयाजाः । समिष्टयजुरितिसमिष्ट-यजुः । पञ्चमम् । पङ्क्तिम् । एव । अन्विति । प्रयन्तीतिप्र-यन्ति । पङ्क्तिम् । अनु । उदिति । यन्ति ॥ [६०] प्रजायाःकरोतितत्क्रियते त्रयस्त्रिꣳशच्च ॥ ❀ ❀ ❀ ❀ ❀ ॥१०॥

युक्ष्व । हि । देवहूतमानितिदेव-हूतमान् । अश्वान् । अग्ने । रथीः । इव ॥ नीति । होता । पूर्व्यः । सदः ॥ उत । नः । देव । देवान् । अच्छ । वोचः । विदुष्ट रइतिविदुः-तरः ॥ श्रत् । विश्वा । वार्या । कृधि ॥ त्वम् । ह । यत् । यविष्ठ्य । सह

सः । सू नो । आहुतेत्या-हुत ॥ ऋतावेत्यृत-वा । यज्ञियः । भुवः ॥ अयम् । अग्निः । सहस्रिणः । वाजस्य । शतिनः । पतिः ॥ मूर्द्धा । कविः । रयीणाम् ॥ तम् । नेमिम् । ऋभवः । यथा । एति । नमस्व । सहूतिभिरितिसहूति-भिः ॥ नेदीयः । यज्ञम् । [ ६१ ] अङ्गिरः ॥ तस्मै । नूनम् । अभिद्यवइत्यभि-द्यवे । वाचा । विरूपेतिविरूप । नित्यया ॥ वृष्णे । चोदस्व । सुष्टुतिमितिसु-स्तुतिम् ॥ कम् । उ । स्वित् । अस्य । सेनया । अग्नेः । अपाकचक्षसइत्यपाक-चक्षसः ॥ पणिम् । गोषु । स्तरामहे ॥ मा । नः । देवानाम् । विशः । प्रस्नातीरितिप्र-स्नातीः । इव । उस्राः ॥ कृशम् । न । हासुः । अघ्नियाः ॥ मा । नः । समस्य । दूढ्यः । परिद्वेषसइतिपरि-द्वेषसः । अंहतिः ॥ ऊर्मिः । न । नावम् । एति । वधीत् ॥ नमः । ते । अग्ने । ओजसे । गृणन्ति । देव । कृष्टयः ॥ अमैः । [ ६२ ] अमित्रम् । अर्दय ॥ कुवित् । स्विति । नः । गविष्टयइतिगो-इष्टये । अग्ने । सम्वेषिषइतिसं-वेषिषः । रयिम् ॥ उरुकृदित्युरु-कृत् । उरु । नः । कृधि ॥ मा । नः । अस्मिन् । महाधनइतिमहा-धने । परेति । वर्क् । भारभृदितिभार-भृत् । यथा ॥ सम्वर्गमितिसं-वर्गम् । समिति । रयिम् । जय ॥ अन्यम् । अस्मत् । भिये । इयम् । अग्ने । सिषक्तु । दुच्छुना ॥ वर्द्ध । नः । अमवदित्यम-वत् । शवः ॥ यस्य । अजुषत् । नमस्विनः । शमीम् । अदुर्मखस्येत्यदुः-मखस्य । वा ॥ तम् । घ । इत् । अग्निः । वृधा । अवति ॥ परस्याः । अधीति । [ ६३ ] सम्वतइतिसं-वतः । अवरान् । अभि । एति । तर ॥ यत्र । अहम् । अस्मि । तान् । अव ॥ विद्म । हि । ते । पुरा । वयम् । अग्ने । पितुः । यथा । अवसः ॥ अध । ते । सुम्नम् । ईमहे ॥ यः । उग्रः । इव । शर्यहेतिशर्य-हा । तिग्मशृङ्गइतितिग्म-शृङ्गः । न । वंसगः ॥ अग्ने । पुरः । रुरोजिथ ॥ सखायः । समिति । वः । सम्यञ्चम् । इषम् । स्तोमम् । च । अग्नये ॥ वर्षिष्ठाय । क्षितीनाम् । ऊर्जः । नप्त्रे । सहस्वते ॥ सं समितिसं-सम् । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्यः । आ ॥ इडः । पदे । समिति । इध्यसे । सः । नः । वसूनि । एति । भर ॥ प्रजापतइतिप्रजा-पते ॥ सः । वेद । सोमापूषणेतिसोमा-पूषणा । इमौ । देवौ ॥ [ ६४ ] यज्ञमग्नेरधिवृषन्नेकान्नविंशतिश्च ॥ ❀ ❀ ❀ ❀ ॥ ११ ॥

उशन्तः । त्वा । हवामहे । उशन्तः । समिति । इधीमहि ॥ उशन् । उशतः ।

एति । वह । पितॄन् । हविषे । अत्तवे ॥ त्वम् । सोम । प्रचिकितइतिप्र-चिकितः ।
मनीषा । त्वम् । रजिष्ठम् । अन्विति । नेषि । पन्थाम् ॥ तव । प्रणीतीतिप्र-नीती ।
पितरः । नः । इन्दोइति । देवेषु । रत्नम् । अभजन्त । धीराः ॥ त्वया । हि । नः ।
पितरः । सोम । पूर्वे । कर्माणि । चक्रुः । पवमान । धीराः ॥ वन्वन्न् । अवातः । प
रिधीनितिपरि-धीन् । अपेति । ऊर्णु । वीरेभिः । अश्वैः । मघवेतिमघ-वा । भव ।
[६५] नः ॥ त्वम् । सोम । पितृभिरितिपितृ-भिः । सम्विँदानइतिसं-विदानः । अ
न्विति । द्यावापृथिवीइतिद्यावा-पृथिवी । एति । ततन्थ ॥ तस्मै । ते । इन्दोइति ।
हविषा । विधेम । वयम् । स्याम । पतयः । रयीणाम् ॥ अग्निष्वात्ताइत्यग्नि-स्वात्ताः ।
पितरः । एति । इह । गच्छत । सदस्सदइतिसदः-सदः । सदत । सुप्रणीतयइतिसु-
प्रणीतयः ॥ अत्त । हवीꣳषि । प्रयतानीतिप्र-यतानि । बर्हिषि । अथ । रयिम् ।
सर्ववीरमितिसर्व-वीरम् । दधातन ॥ बर्हिषदइतिबर्हि-सदः । पितरः । ऊती । अ
र्वाक् । इमा । वः । हव्या । चकृम । जुषध्वम् ॥ ते । एति । गत । अवसा । शन्त
मेनेतिशं-तमेन । अथ । अस्मभ्यमित्यस्म-भ्यम् । [६६] शम् । योः । अरपः । द
धात ॥ एति । अहम् । पितॄन् । सुविदत्रानितिसु-विदत्रान् । अविथ्सि । नपातम् ।
च । विक्रमणमितिवि-क्रमणम् । च । विष्णोः ॥ बर्हिषदइतिबर्हि-सदः । ये । स्वध
येतिस्व धया । सुतस्य । भजन्त । पित्वः । ते । इह । आगमिष्ठाइत्या-गमिष्ठाः ॥
उपहूताइत्युप-हूताः । पितरः । सोम्यासः । बर्हिष्येषु । निधिष्वितिनि-धिषु ।
प्रियेषु ॥ ते । एति । गमन्तु । ते । इह । श्रुवन्तु । अधीति । ब्रुवन्तु । ते । अव
न्तु । अस्मान् ॥ उदिति । ईरताम् । अव रे । उदिति । परासः । उदिति । मध्य
माः । पितरः । सोम्यासः ॥ असुम् । [६७] ये । ईयुः । अवृकाः । ऋतज्ञाइ
त्यृत-ज्ञाः । ते । नः । अवन्तु । पितरः । हवेषु ॥ इदम् । पितृभ्यइतिपितृ-भ्यः । नमः ।
अस्तु । अद्य । ये । पूर्वासः । ये । उपरासः । ईयुः ॥ ये । पार्थिवे । रजसि । एति । नि
षत्ताइतिनि-सत्ताः । ये । वा । नूनम् । सुवृजनास्वितिसु-वृजनासु । विक्षु ॥ अध ।
यथा । नः । पितरः । परासः । प्रत्नासः । अग्ने । ऋतम् । आशुषाणाः ॥ शुचि ।
इत् । अयन्न् । दीधितिम् । उक्थशासइत्युक्थ-शासः । क्षाम । भिन्दन्तः । अरु
णीः । अपेति । व्रन्न् ॥ यत् । अग्ने । [६८] कव्यवाहनेतिकव्य-वाहन । पितॄन् ।

यरिंष । ऋतावृधइत्यृत-वृधः ॥ प्रेति । च । हव्यानि । वक्ष्यसि । देवेभ्यः । च । पितृभ्यइतिपितृ-भ्यः । आ ॥ त्वम् । अग्ने । ईडितः । जातवेदइतिजात-वेदः । अवाट् । हव्यानि । सुरभीणि । कृत्वा ॥ प्रेति । अदाः । पितृभ्यइतिपितृ-भ्यः । स्वधयेति स्व-धया । ते । अक्षन्न् । अद्धि । त्वम् । देव । प्रयतेतिप्र-यता । हवीꣳषि ॥ मातली । कव्यैः । यमः । अङ्गिरोभिरित्यङ्गिरः-भिः । बृहस्पतिः । ऋक्वभिरित्यृक्व-भिः । वावृधानः ॥ यान् । च । देवाः । वावृधुः । ये । च । देवान् । स्वाहा । अन्ये । स्वधयेतिस्व-धया । अन्ये । मदन्ति ॥ [६९] इमम् । यम । प्रस्तरमितिप्र-स्तरम् । एति । हि । सीद । अङ्गिरोभिरित्यङ्गिरः-भिः । पितृभिरितिपितृ-भिः । सव्ँविदानइतिसं-विदानः ॥ एति । त्वा । मन्त्राः । कविशस्ताइतिकवि-शस्ताः । वहन्तु । एना । राजन्न् । हविषा । मादयस्व ॥ अङ्गिरोभिरित्यङ्गिरः-भिः । एति । गहि । यज्ञियेभिः । यम । वैरूपैः । इह । मादयस्व ॥ विवस्वन्तम् । हुवे । यः । पिता । ते । अस्मिन्न् । यज्ञे । बर्हिषि । एति । निषद्येतिनि-सद्य ॥ अङ्गिरसः । नः । पितरः । नवग्वाः । अथर्वाणः । भृगवः । सोम्यासः ॥ तेषाम् । वयम् । सुमताविति सु-मतौ । यज्ञियानाम् । अपीति । भद्रे । सौमनसे । स्याम ॥ [७०] भवास्मभ्यमसुँय्यद्भेमदन्ति सौमनसएकंच ॥ १२ ॥ समिधश्चक्षुषीप्रजापतिराज्यन्देवस्यस्फ्यमब्रह्मवादिनोऽङ्गिरसस्त्रयोमनुःपृथिव्याःपशवोऽग्नीधेदेवावैयुक्ष्वोशन्तस्त्वाद्वादश ॥ १२ ॥ समिधोयाज्यातस्मान्नाभागꣳहितमन्वित्याहप्रजावाअहेत्याहयुक्ष्वाहिसंप्ततिः ॥७०॥ समिधस्सौमनसेस्याम ॥ हरिः ओ (३) म् ॥

इति द्वितीयकाण्डे षष्ठः प्रश्नः ॥

तैत्तिरीयसंहितापदपाठे द्वितीयकाण्डस्समाप्तः ॥

## द्वितीयकाण्डस्य प्रश्नादिसङ्ख्यानिर्णयः

| प्रश्नाः | अनुवाकाः | पञ्चाशतः | पदानि |
|---|---|---|---|
| १ | ११ | ६५ | ३२७८ |
| २ | १२ | ७१ | ३५२६ |
| ३ | १४ | ५६ | २९६५ |
| ४ | १४ | ४८ | २४०६ |
| ५ | १२ | ७४ | ३६६५ |
| ६ | १२ | ७० | ३४३३ |
| **संहतसङ्ख्या** | | | |
| ६ | ७५ | ३८४ | १९२७३ |

श्रीः॥

# तैत्तिरीयसंहितापदपाठे

## तृतीयकाण्डे प्रथमः प्रश्नः॥

हरिः ओ (४) म्॥

प्रजापतिरितिप्रजा-पतिः। अकामयत। प्रजाइतिप्र-जाः। सृजेय। इति। सः। तपः। अतप्यत। सः। सर्पान्। असृजत। सः। अकामयत। प्रजाइतिप्र-जाः। सृजेय। इति। सः। द्वितीयम्। अतप्यत। सः। वया॒ँसि। असृजत। सः। अकामयत। प्रजाइतिप्र-जाः। सृजेय। इति। सः। तृतीयम्। अतप्यत। सः। एतम्। दीक्षितवादमितिदीक्षित-वादम्। अपश्यत्। तम्। अवदत्। ततः। वै। सः। प्रजाइतिप्र-जाः। असृजत। यत्। तपः। तप्त्वा। दीक्षितवादमितिदीक्षित-वादम्। वदति। प्रजाइतिप्र-जाः। एव। तत्। यजमानः। [१] सृजते। यत्। वै। दीक्षितः। अमेध्यम्। पश्यति। अपेति। अस्मात्। दीक्षा। क्रामति। नीलम्। अस्य। हरः। वीति। एति। अबद्धम्। मनः। दरिद्रम्। चक्षुः। सूर्यः। ज्योतिषाम्। श्रेष्ठः। दीक्षे। मा। मा। हासीः। इति। आह। न। अस्मात्। दीक्षा। अपेति। क्रामति। न। अस्य। नीलम्। न। हरः। वीति। एति। यत्। वै। दीक्षितम्। अभिवर्षतीत्यभि-वर्षति। दिव्याः। आपः। अशान्ताः। ओजः। बलम्। दीक्षाम्। [२] तपः। अस्य। निरिति। घ्नन्ति। उन्दतीः। बलम्। धत्त। ओजः। धत्त। बलम्। धत्त। मा। मे। दीक्षाम्। मा। तपः। निरिति। वधिष्ट। इति। आह। एतत्। एव। सर्वम्। आत्मन्। धत्ते। न। अस्य। ओजः। बलम्। न। दीक्षाम्। न। तपः। निरिति। घ्नन्ति। अग्निः। वै। दीक्षितस्य। देवता। सः। अस्मात्। एतर्हि। तिरः। इव। यर्हि। याति। तम्। ईश्वरम्। रक्षा॒ँसि। हन्तोः। [३] भद्रात्। अभीति। श्रेयः। प्रेति। इहि। बृहस्पतिः। पुरएतेतिपुरः-एता। ते। अस्तु। इति। आह। ब्रह्म। वै। देवानाम्। बृहस्पतिः। तम्। एव। अन्वारभतइत्यनु-आरभते। सः। एनम्। समिति। पारयति। एति। इदम्। अगन्म। देवयजनमितिदेव-यजनम्। पृथिव्याः। इति। आह। देवयजन

मितिदेव-यजनम् । हि । एषः । पृथिव्याः । आगच्छतीत्या-गच्छति । यः । यजते । विश्वे । देवाः । यत् । अजुषन्त । पूर्वे । इति । आह । विश्वे । हि । एतत् । देवाः । जोषयन्ते । यत् । ब्राह्मणाः । ऋक्सामाभ्यामित्यृक्साम-भ्याम् । यजुषा । सन्तरन्त इतिसं-तरन्तः । इति । आह । ऋक्सामाभ्यामित्यृक्साम-भ्याम् । हि । एषः । यजुषा । सन्तरतीतिसं-तरति । यः । यजते । रायः । पोषेण । समिति । इषा । मदेम । इति । आह । आशिषमित्या-शिषम् । एव । एताम् । एति । शास्ते ॥ [४] यजमानोदीक्षां हन्तोर्ब्राह्मणाश्चतुर्विंशतिश्च ॥ ❀ ❀ ॥१॥

एषः । ते । गायत्रः । भागः । इति । मे । सोमाय । ब्रूतात् । एषः । ते । त्रैष्टुभः । जागतः । भागः । इति । मे । सोमाय । ब्रूतात् । छन्दोमानामितिछन्दः-मानाम् । साम्राज्यमितिसां-राज्यम् । गच्छ । इति । मे । सोमाय । ब्रूतात् । यः । वै । सोमम् । राजानम् । साम्राज्यमितिसां-राज्यम् । लोकम् । गमयित्वा । क्रीणाति । गच्छति । स्वानाम् । साम्राज्यमितिसां-राज्यम् । छन्दांसि । खलु । वै । सोमस्य । राज्ञः । साम्राज्यइतिसां-राज्यः । लोकः । पुरस्तात् । सोमस्य । क्रयात् । एवम् । अभीति । मन्त्रयेत । साम्राज्यमितिसां-राज्यम् । एव । [५] एनम् । लोकम् । गमयित्वा । क्रीणाति । गच्छति । स्वानाम् । साम्राज्यमितिसां-राज्यम् । यः । वै । तानूनप्त्रस्येतितानू-नप्त्रस्य । प्रतिष्ठामितिप्रति-स्थाम् । वेद । प्रतीति । एव । तिष्ठति । ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । न । प्राश्नन्तीतिप्र-अश्नन्ति । न । जुह्वति । अथ । क्व । तानूनप्त्रमितितानू-नप्त्रम् । प्रतीति । तिष्ठति । इति । प्रजापतावितिप्रजा-पतौ । मनसि । इति । ब्रूयात् । त्रिः । अवेति । जिघ्रेत् । प्रजापतावितिप्रजा-पतौ । त्वा । मनसि । जुहोमि । इति । एषा । वै । तानूनप्त्रस्येतितानू-नप्त्रस्य । प्रतिष्ठेतिप्रति-स्था । यः । एवम् । वेद । प्रतीति । एव । तिष्ठति । यः । [६] वै । अध्वर्योः । प्रतिष्ठामितिप्रति-स्थाम् । वेद । प्रतीति । एव । तिष्ठति । यतः । मन्येत । अनभिक्रम्येत्यनभि-क्रम्य । होष्यामि । इति । तत् । तिष्ठन् । एति । आश्रावयेत् । एषा । वै । अध्वर्योः । प्रतिष्ठेतिप्रति-स्था । यः । एवम् । वेद । प्रतीति । एव । तिष्ठति । यत् । अभिक्रम्येत्यभि-क्रम्य । जुहुयात् । प्रतिष्ठायाइतिप्रति-स्थायाः । इयात् । तस्मात् । समानत्र । तिष्ठता । होतव्यम् । प्रतिष्ठित्याइतिप्रति-स्थित्यै ।

यः । वै । अध्वर्योः । स्वम् । वेद । स्ववानितिस्व-वान् । एव । भवति । स्रुक् । वै । अस्य । स्वम् । वायव्यम् । अस्य । [७] स्वम् । चमसः । अस्य । स्वम् । यत् । वायव्यम् । वा । चमसम् । वा । अनन्वारभ्येत्यनन्‌-आरभ्य । आश्रावयेदित्या-श्रावयेत् । स्वात् । इयात् । तस्मात् । अन्वारभ्येत्यनु-आरभ्य । आश्राव्यमित्या-श्राव्यम् । स्वात् । एव । न । एति । यः । वै । सोमम् । अप्रतिष्ठाप्येत्यप्रति-स्थाप्य । स्तोत्रम् । उपाकरोतीत्युप-आकरोति । अप्रतिष्ठितइत्यप्रति-स्थितः । सोमः । भवति । अप्रतिष्ठितइत्यप्रति-स्थितः । स्तोमः । अप्रतिष्ठितानीत्यप्रति-स्थितानि । उक्थानि । अप्रतिष्ठितइत्यप्रति-स्थितः । यजमानः । अप्रतिष्ठितइत्यप्रति-स्थितः । अध्वर्युः । वायव्यम् । वै । सोमस्य । प्रतिष्ठेतिप्रति-स्था । चमसः । अस्य । प्रतिष्ठेतिप्रति-स्था । सोमः । स्तोमस्य । स्तोमः । उक्थानाम् । ग्रहम् । वा । गृहीत्वा । चमसम् । वा । उन्नीयेत्युत्-नीय । स्तोत्रम् । उपाकुर्यादित्युप-आकुर्यात् । प्रतीति । एव । सोमम् । स्थापयति । प्रतीति । स्तोमम् । प्रतीति । उक्थानि । प्रतीति । यजमानः । तिष्ठति । प्रतीति । अध्वर्युः ॥ [८] एवतिष्ठतियोवायव्यमस्यग्रहँ वैकान्नवि ँ शतिश्च ॥२॥

यज्ञस्य । वै । एतत् । समिति । भरन्ति । यत् । सोमक्रयण्याइतिसोम-क्रयण्यै । पदम् । यज्ञमुखमितियज्ञ-मुखम् । हविर्धानेइतिहविः-धाने । यर्हि । हविर्धानेइतिहविः-धाने । प्राचीइति । प्रवर्तयेयुरितिप्र-वर्तयेयुः । तर्हि । तेन । अक्षम् । उपेति । अञ्ज्यात् । यज्ञमुखइतियज्ञ-मुखे । एव । यज्ञम् । अनु । समिति । तनोति । प्राञ्चम् । अग्निम् । प्रेति । हरन्ति । उदिति । पत्नीम् । एति । नयन्ति । अन्विति । अनांसि । प्रेति । वर्तयन्ति । अथ । वै । अस्य । एषः । धिष्णियः । हीयते । सः । अन्विति । ध्यायति । सः । ईश्वरः । रुद्रः । भूत्वा । [९] प्रजामितिप्र-जाम् । पशून् । यजमानस्य । शमयितोः । यर्हि । पशुम् । आप्रीतमित्या-प्रीतम् । उदञ्चम् । नयन्ति । तर्हि । तस्य । पशुश्रपणमितिपशु-श्रपणम् । हरेत् । तेन । एव । एनम् । भागिनम् । करोति । यजमानः । वै । आहवनीयइत्या-हवनीयः । यजमानम् । वै । एतत् । वीति । कर्षन्ते । यत् । आहवनीयादित्या-हवनीयात् । पशुश्रपणमितिपशु-श्रपणम् । हरन्ति । सः । वा । एव । स्यात् । निर्मन्थ्यमितिनिः-मन्थ्यम् । वा । कुर्यात् । यजमानस्य । सात्मत्वायेतिसात्म-त्वाय । यदि । पशोः । अवदानमित्य

व-दानम् । नश्येत् । आज्यस्य । प्रत्याख्यायमितिप्रति-आख्यायम् । अवेति । द्येत् । सा । एव । ततः । प्रायश्चित्तिः । ये । पशुम् । विमथ्नीरन्नितिवि-मथ्नीरन् । यः । तान् । कामयेत । आर्तिम् । एति । ऋच्छेयुः । इति । कुवित् । अङ्ग । इति । नमो वृक्तिवत्येतिनमोवृक्ति-वत्या । ऋचा । आग्नीध्रइत्याग्नि-इध्रे । जुहुयात् । नमोवृक्ति मितिनमः-वृक्तिम् । एव । एषाम् । वृङ्क्ते । तजक् । आर्तिम् । एति । ऋच्छन्ति ॥ [१०] भूत्वाततष्षड्विꣳशतिश्च ॥ ❀ ❀ ❀ ॥ ३ ॥

प्रजापतेरितिप्रजा-पतेः । जायमानाः । प्रजाइतिप्र-जाः । जाताः । च । याः । इमाः ॥ तस्मै । प्रति । प्रेति । वेदय । चिकित्वान् । अन्विति । मन्यताम् ॥ इमम् । पशुम् । पशुपतइतिपशु-पते । ते । अद्य । बध्नामि । अग्ने । सुकृतस्येतिसु-कृतस्य । मध्ये ॥ अन्विति । मन्यस्व । सुयजेतिसु-यजा । यजाम । जुष्टम् । देवानाम् । इ दम् । अस्तु । हव्यम् ॥ प्रजानन्तइतिप्र-जानन्तः । प्रतीति । गृह्णन्ति । पूर्वे । प्राण मितिप्र-अनम् । अङ्गेभ्यः । परीति । आचरन्तमित्या-चरन्तम् ॥ सुवर्गमितिसुवः-गम् । याहि । पथिभिरितिपथि-भिः । देवयानैरितिदेव-यानैः । ओषधीषु । प्रतीति । तिष्ठ । शरीरैः ॥ येषाम् । ईशे । [११] पशुपतिरितिपशु-पतिः । पशूनाम् । चतु ष्पदामितिचतुः-पदाम् । उत । च । द्विपदामितिद्वि-पदाम् ॥ निष्क्रीतइतिनिः-क्री तः । अयम् । यज्ञियम् । भागम् । एतु । रायः । पोषाः । यजमानस्य । सन्तु ॥ ये । बध्यमानम् । अन्विति । बध्यमानाः । अभ्यैक्षन्तेत्यभि-ऐक्षन्त । मनसा । च चक्षुषा । च ॥ अग्निः । तान् । अग्रे । प्रेति । मुमोक्तु । देवः । प्रजापतिरितिप्रजा-पतिः । प्रजयेतिप्र-जया । संविदानइतिसं-विदानः ॥ ये । आरण्याः । पशवः । वि श्वरूपाइतिविश्व-रूपाः । विरूपाइतिवि-रूपाः । सन्तः । बहुधेतिबहु-धा । एकरूपा इत्येक-रूपाः ॥ वायुः । तान् । अग्रे । प्रेति । मुमोक्तु । देवः । प्रजापतिरितिप्रजा-पतिः । प्रजयेतिप्र-जया । संविदानइतिसं-विदानः ॥ प्रमुञ्चमानाइतिप्र-मुञ्चमानाः । [१२] भुवनस्य । रेतः । गातुम् । धत्त । यजमानाय । देवाः ॥ उपाकृतमित्युप-आकृतम् । शशमानम् । यत् । अस्थात् । जीवम् । देवानाम् । अपीति । एतु । पाथः ॥ नाना । प्राणइतिप्र-अनः । यजमानस्य । पशुना । यज्ञः । देवेभिः । सह । देवयानइतिदेव-यानः ॥ जीवम् । देवानाम् । अपीति । एतु । पाथः । सत्याः ।

सन्तु । यजमानस्य । कामाः ॥ यत् । पशुः । मायुम् । अकृत । उरः । वा । पद्भिरितिपत्-भिः । आहतइत्या-हते ॥ अग्निः । मा । तस्मात् । एनसः । विश्वात् । मुञ्चतु । अꣳहसः ॥ शमितारः । उपेतनेत्युप-एतन । यज्ञम् । [ १३ ] देवेभिः । इन्वितम् ॥ पाशात् । पशुम् । प्रेति । मुञ्चत । बन्धात् । यज्ञपतिमितियज्ञ-पतिम् । परि ॥ अदितिः । पाशम् । प्रेति । मुमोक्तु । एतम् । नमः । पशुभ्यइतिपशु-भ्यः । पशुपतयइतिपशु-पतये । करोमि ॥ अरातीयन्तम् । अधरम् । कृणोमि । यम् । द्विष्मः । तस्मिन्न् । प्रतीति । मुञ्चामि । पाशम् ॥ त्वाम् । उ । ते । दधिरे । हव्यवाहमितिहव्य-वाहम् । शृतङ्कर्तारमितिशृतं-कर्तारम् । उत । यज्ञियम् । च ॥ अग्ने । सदक्षइतिस-दक्षः । सतनुरितिस-तनुः । हि । भूत्वा । अथ । हव्या । जातवेदइतिजात-वेदः । जुषस्व ॥ जातवेदइतिजात-वेदः । वपया । गच्छ । देवान् । त्वम् । हि । होता । प्रथमः । बभूथ ॥ घृतेन । त्वम् । तनुवः । वर्द्धयस्व । स्वाहाकृतमितिस्वाहा-कृतम् । हविः । अदन्तु । देवाः ॥ स्वाहा । देवेभ्यः । देवेभ्यः । स्वाहा ॥ [ १४ ]

ईशेप्रमुञ्चमानायज्ञन्त्वꣳ षोडशच ॥ ❋ ❋ ❋ ॥ ४ ॥

प्राजापत्याइतिप्राजा-पत्याः । वै । पशवः । तेषाम् । रुद्रः । अधिपतिरित्यधि-पतिः । यत् । एताभ्याम् । उपाकरोतीत्युप-आकरोति । ताभ्याम् । एव । एनम् । प्रतिप्रोच्येतिप्रति-प्रोच्य । एति । लभते । आत्मनः । अनाव्रस्कायेत्यना-व्रस्काय । द्वाभ्याम् । उपाकरोतीत्युप-आकरोति । द्विपादितिद्वि-पात् । यजमानः । प्रतिष्ठित्याइतिप्रति-स्थित्यै । उपाकृत्येत्युप-आकृत्य । पञ्च । जुहोति । पाङ्क्ताः । पशवः । पशून् । एव । अवेति । रुन्धे । मृत्यवे । वै । एषः । नीयते । यत् । पशुः । तम् । यत् । अन्वारभेतेत्यनु-आरभेत । प्रमायुकइतिप्र-मायुकः । यजमानः । स्यात् । नाना । प्राणइतिप्र-अनः । यजमानस्य । पशुना । इति । आह । व्यावृत्त्याइतिवि-आवृत्त्यै । [ १५ ] यत् । पशुः । मायुम् । अकृत । इति । जुहोति । शान्त्यै । शमितारः । उपेतनेत्युप-एतन । इति । आह । यथायजुरितियथा-यजुः । एव । एतत् । वपायाम् । वै । आह्रियमाणायामित्या-ह्रियमाणायाम् । अग्नेः । मेधः । अपेति । क्रामति । त्वाम् । उ । ते । दधिरे । हव्यवाहमितिहव्य-वाहम् । इति । वपाम् । अभीति । जुहोति । अग्नेः । एव । मेधम् । अवेति । रुन्धे । अथोइति । शृतत्वायेतिशृत-त्वाय ।

पुरस्तात्स्वाहाकृतयइति पुरस्तात्-स्वाहाकृतयः । वै अन्ये । देवाः । उपरिष्टात्स्वाहाकृतयइत्युपरिष्टात्-स्वाहाकृतयः । अन्ये । स्वाहा । देवेभ्यः । देवेभ्यः । स्वाहा । इति । अभितः । वपाम् । जुहोति । तान् । एव । उभयान् । प्रीणाति ॥ [ १६ ] व्यावृत्त्या अभितोवपाम्पञ्च च ॥ ❀ ❀ ❀ ❀ ॥ ५ ॥

यः । वै । अयथादेवतमित्ययथा-देवतम् । यज्ञम् । उपचरतीत्युप-चरति । एति । देवताभ्यः । वृश्च्यते । पापीयान् । भवति । यः । यथादेवतमितियथा-देवतम् । न । देवताभ्यः । एति । वृश्च्यते । वसीयान् । भवति । आग्नेय्या । ऋचा । आग्नीध्रमित्याग्नि-इध्रम् । अभीति । मृशेत् । वैष्णव्या । हविर्धानमितिहविः-धानम् । आग्नेय्या । स्रुचः । वायव्यया । वायव्यानि । ऐन्द्रिया । सदः । यथादेवतमिति यथा-देवतम् । एव । यज्ञम् । उपेति । चरति । न । देवताभ्यः । एति । वृश्च्यते । वसीयान् । भवति । युनज्मि । ते । पृथिवीम् । ज्योतिषा । सह । युनज्मि । वायुम् । अन्तरिक्षेण । [ १७ ] ते । सह । युनज्मि । वाचम् । सह । सूर्येण । ते । युनज्मि । तिस्रः । विपृचइतिवि-पृचः । सूर्यस्य । ते ॥ अग्निः । देवता । गायत्री । छन्दः । उपांशोरित्युप-अंशोः । पात्रम् । असि । सोमः । देवता । त्रिष्टुप् । छन्दः । अन्तर्यामस्येत्यन्तः-यामस्य । पात्रम् । असि । इन्द्रः । देवता । जगती । छन्दः । इन्द्रवायुवोरितीन्द्र-वायुवोः । पात्रम् । असि । बृहस्पतिः । देवता । अनुष्टुबित्यनु-स्तुप् । छन्दः । मित्रावरुणयोरितिमित्रा-वरुणयोः । पात्रम् । असि । अश्विनौ । देवता । पङ्क्तिः । छन्दः । अश्विनोः । पात्रम् । असि । सूर्यः । देवता । बृहती । [ १८ ] छन्दः । शुक्रस्य । पात्रम् । असि । चन्द्रमाः । देवता । सतोबृहतीतिसतः-बृहती । छन्दः । मन्थिनः । पात्रम् । असि । विश्वे । देवाः । देवता । उष्णिहा । छन्दः । आग्रयणस्य । पात्रम् । असि । इन्द्रः । देवता । ककुत् । छन्दः । उक्थानाम् । पात्रम् । असि । पृथिवी । देवता । विराडितिवि-राट् । छन्दः । ध्रुवस्य । पात्रम् । असि ॥ [ १९ ] अन्तरिक्षेणबृहतीत्रयस्त्रिंशच्च ॥ ॥ ६ ॥

इष्टर्गः । वै । अध्वर्युः । यजमानस्य । इष्टर्गः । खलु । वै । पूर्वः । अर्ष्टुः । क्षीयते । आसन्यात् । मा । मन्त्रात् । पाहि । कस्याः । चित् । अभिशस्त्याइत्यभि-शस्त्याः । इति । पुरा । प्रातरनुवाकादितिप्रातः-अनुवाकात् । जुहुयात् । आत्मनः ।

एव । तत् । अध्वर्युः । पुरस्तात् । शर्म । नह्यते । अनार्त्यै । सँवेशायेतिसं-वेशाय । त्वा । उपवेशायेत्युप-वेशाय । त्वा । गायत्रियाः । त्रिष्टुभः । जगत्याः । अभिभूत्या इत्यभि-भूत्यै । स्वाहा । प्राणापानावितिप्राण-अपानौ । मृत्योः । मा । पातम् । प्राणापानावितिप्राण-अपानौ । मा । मा । हासिष्टम् । देवतासु । वै । एते । प्राणापानयोरितिप्राण-अपानयोः । [२०] व्यायच्छन्तइतिवि-आयच्छन्ते । येषाम् । सोमः । समृच्छतइतिसं-ऋच्छते । सँवेशायेतिसं-वेशाय । त्वा । उपवेशायेत्युप - वेशाय । त्वा । इति । आह । छन्दाँसि । वै । सँवेशइतिसं-वेशः । उपवेशइत्युप -वेशः । छन्दोभिरितिछन्दः-भिः । एव । अस्य । छन्दाँसि । वृङ्क्ते । प्रेतिवन्तीतिप्रेति-वन्ति । आज्यानि । भवन्ति । अभिजित्याइत्यभि-जित्यै । मरुत्वतीः । प्रतिपद इतिप्रति-पदः । विजित्याइतिवि-जित्यै । उभेइति । बृहद्रथन्तरेइतिबृहत्-रथन्तरे । भवतः । इयम् । वाव । रथन्तरमितिरथं-तरम् । असौ । बृहत् । आभ्याम् । एव । एनम् । अन्तः । एति । अद्य । वाव । रथन्तरमितिरथं-तरम् । श्वः । बृहत् । अद्या श्वादित्यद्य-श्वात् । एव । एनम् । अन्तः । एति । भूतम् । [२१] वाव । रथन्तरमितिरथं-तरम् । भविष्यत् । बृहत् । भूतात् । च । एव । एनम् । भविष्यतः । च । अन्तः । एति । परिमितमितिपरि-मितम् । वाव । रथन्तरमितिरथं-तरम् । अपरिमितमित्यपरि-मितम् । बृहत् । परिमितादितिपरि-मितात् । च । एव । एनम् । अपरिमितादित्यपरि-मितात् । च । अन्तः । एति । विश्वामित्रजमदग्नीइतिविश्वामित्र-जमदग्नी । वसिष्ठेन । अस्पर्द्धेताम् । सः । एतत् । जमदग्निः । विहव्यमितिवि-हव्यम् । अपश्यत् । तेन । वै । सः । वसिष्ठस्य । इन्द्रियम् । वीर्यम् । अवृङ्क्त । यत् । विहव्यमितिवि-हव्यम् । शस्यते । इन्द्रियम् । एव । तत् । वीर्यम् । यजमानः । भ्रातृव्यस्य । वृङ्क्ते । यस्य । भूयाँसः । यज्ञक्रतवइतियज्ञ-क्रतवः । इति । आहुः । सः । देवताः । वृङ्क्ते । इति । यदि । अग्निष्टोमइत्यग्नि-स्तोमः । सोमः । परस्तात् । स्यात् । उक्थ्यम् । कुर्वीत । यदि । उक्थ्यः । स्यात् । अतिरात्रमित्यति-रात्रम् । कुर्वीत । यज्ञक्रतुभिरितियज्ञक्रतु-भिः । एव । अस्य । देवताः । वृङ्क्ते । वसीयान् । भवति ॥ [२२] प्राणापानयोर्भूतवँवृङ्क्तेऽष्टाविँशतिश्च ॥ ❀ ❀ ❀ ॥७॥

निग्राभ्याइतिनि-ग्राभ्याः । स्थ । देवश्रुतइतिदेव-श्रुतः । आयुः । मे । तर्पयत । प्राण

मितिप्र-अनम् । मे । तर्पयत । अपानमित्यप-अनम् । मे । तर्पयत । व्यानमितिवि-अनम् । मे । तर्पयत । चक्षुः । मे । तर्पयत । श्रोत्रम् । मे । तर्पयत । मनः । मे । तर्पयत । वाचम् । मे । तर्पयत । आत्मानम् । मे । तर्पयत । अङ्गानि । मे । तर्पयत । प्रजामितिप्र-जाम् । मे । तर्पयत । पशून् । मे । तर्पयत । गृहान् । मे । तर्पयत । गणान् । मे । तर्पयत । सर्वगणमितिसर्व-गणम् । मा । तर्पयत । तर्पयत । मा । [२३] गणाः । मे । मा । वीति । तृप्यन् । ओषधयः । वै । सोमस्य । विशः । विशः । खलु । वै । राज्ञः । प्रदातोरितिप्र-दातोः । ईश्वराः । ऐन्द्रः । सोमः । अवीवृधम् । वः । मनसा । सुजाताइतिसु-जाताः । ऋतप्रजाताइत्यृत-प्रजाताः । भगे । इत् । वः । स्याम ॥ इन्द्रेण । देवीः । वीरुधः । संविदानाइतिसं-विदानाः । अन्विति । मन्यन्ताम् । सवनाय । सोमम् । इति । आह । ओषधीभ्यइत्योषधि-भ्यः । एव । एनम् । स्वायै । विशः । स्वायै । देवतायै । निर्याच्येतिनिः-याच्य । अभीति । सुनोति । यः । वै । सोमस्य । अभिषूयमाणस्येत्यभि-सूयमानस्य । [२४] प्रथमः । अंशुः । स्कन्दति । सः । ईश्वरः । इन्द्रियम् । वीर्यम् । प्रजामितिप्र-जाम् । पशून् । यजमानस्य । निर्हन्तोरितिनिः-हन्तोः । तम् । अभीति । मन्त्रयेत । एति । मा । अस्कान् । सह । प्रजयेतिप्र-जया । सह । रायः । पोषेण । इन्द्रियम् । मे । वीर्यम् । मा । निरिति । वधीः । इति । आशिषमित्या-शिषम् । एव । एताम् । एति । शास्ते । इन्द्रियस्य । वीर्यस्य । प्रजायाइतिप्र-जायै । पशूनाम् । अनिर्घातायेत्यनिः-घाताय । द्रप्सः । चस्कन्द । पृथिवीम् । अन्विति । द्याम् । इमम् । च । योनिम् । अन्विति । यः । च । पूर्वः ॥ तृतीयम् । योनिम् । अन्विति । सञ्चरन्तमितिसं-चरन्तम् । द्रप्सम् । जुहोमि । अन्विति । सप्त । होत्राः ॥ [२५] तर्पयतमाऽभिषूयमाणस्ययश्चदशच ॥ ❀ ॥८॥

यः । वै । देवान् । देवयशसेनेतिदेव-यशसेन । अर्पयति । मनुष्यान् । मनुष्ययशसेनेतिमनुष्य-यशसेन । देवयशसीतिदेव-यशसी । एव । देवेषु । भवति । मनुष्ययशसीतिमनुष्य-यशसी । मनुष्येषु । यान् । प्राचीनम् । आग्रयणात् । ग्रहान् । गृह्णीयात् । तान् । उपांश्वित्युप-अंशु । गृह्णीयात् । यान् । ऊर्ध्वान् । तान् । उपब्दिमतइत्युपब्दि-मतः । देवान् । एव । तत् । देवयशसेनेतिदेव-यशसेन । अर्पयति । मनुष्यान् । मनुष्ययशसेनेतिमनुष्य-यशसेन । देवयशसीतिदेव-यशसी । एव ।

देवेषु। भवति। मनुष्ययशसीतिमनुष्य-यशसी। मनुष्येषु। अग्निः। प्रातस्सवनइति प्रातः-सवने। पातु। अस्मान्। वैश्वानरः। महिना। विश्वशम्भूरितिविश्व-शम्भूः॥ सः। नः। पावकः। द्रविणम्। दधातु। [२६] आयुष्मन्तः। सहभक्षाइतिसह-भक्षाः। स्याम॥ विश्वे। देवाः। मरुतः। इन्द्रः। अस्मान्। अस्मिन्। द्वितीये। सवने। न। जह्युः॥ आयुष्मन्तः। प्रियम्। एषाम्। वदन्तः। वयम्। देवानाम्। सुमताविति सु-मतौ। स्याम॥ इदम्। तृतीयम्। सवनम्। कवीनाम्। ऋतेन। ये। चमसम्। ऐरयन्त॥ ते। सौधन्वनाः। सुवः। आनशानाः। स्विष्टिमितिसु-इष्टिम्। नः। अभीति। वसीयः। नयन्तु॥ आयतनवतीरित्यायतन-वतीः। वै। अन्याः। आहुतयइत्या-हुतयः। हूयन्ते। अनायतनाइत्यना-यतनाः। अन्याः। याः। आघारवतीरित्याघार-वतीः। ताः। आयतनवतीरित्यायतन-वतीः। याः। [२७] सौम्याः। ताः। अनायतनाइत्यना-यतनाः। ऐन्द्रवायवमित्यैन्द्र-वायवम्। आदायेत्या-दाय। आघारमित्या-घारम्। एति। घारयेत्। अध्वरः। यज्ञः। अयम्। अस्तु। देवाः। ओषधीभ्यइत्योषधि-भ्यः। पशवे। नः। जनाय। विश्वस्मै। भूताय। अध्वरः। असि। सः। पिन्वस्व। घृतवदितिघृत-वत्। देव। सोम। इति। सौम्याः। एव। तत्। आहुतीरित्या-हुतीः। आयतनवतीरित्यायतन-वतीः। करोति। आयतनवानित्यायतन-वान्। भवति। यः। एवम्। वेद। अथोइति। द्यावापृथिवीइतिद्यावा-पृथिवी। एव। घृतेन। वीति। उनत्ति। तेइति। व्युत्तेइतिवि-उत्ते। उपजीवनीयेइत्युप-जीवनीये। भवतः। उपजीवनीयइत्युप-जीवनीयः। भवति। [२८] यः। एवम्। वेद। एषः। ते। रुद्र। भागः। यम्। निरयाचथाइतिनिः-अयाचथाः। तम्। जुषस्व। विदेः। गौपत्यम्। रायः। पोषम्। सुवीर्यमितिसु-वीर्यम्। सँवथ्सरीणामितिसं-वथ्सरीणाम्। स्वस्तिम्॥ मनुः। पुत्रेभ्यः। दायम्। वीति। अभजत्। सः। नाभानेदिष्ठम्। ब्रह्मचर्यमितिब्रह्म-चर्यम्। वसन्तम्। निरिति। अभजत्। सः। एति। अगच्छत्। सः। अब्रवीत्। कथा। मा। निरिति। अभाक्। इति। न। त्वा। निरिति। अभाक्षम्। इति। अब्रवीत्। आङ्गिरसः। इमे। सत्रम्। आसते। ते। [२९] सुवर्गमितिसुवः-गम्। लोकम्। न। प्रेति। जानन्ति। तेभ्यः। इदम्। ब्राह्मणम्। ब्रूहि। ते। सुवर्गमितिसुवः-गम्। लोकम्।

यन्तः । ये । एषाम् । पशवः । तान् । ते । दास्यन्ति । इति । तत् । एभ्यः । अब्रवीत् । ते । सुवर्गमितिसुवः-गम् । लोकम् । यन्तः । ये । एषाम् । पशवः । आसन्न् । तान् । अस्मै । अददुः । तम् । पशुभिरितिपशु-भिः । चरन्तम् । यज्ञवास्तावितियज्ञ-वास्तौ । रुद्रः । एति । अगच्छत् । सः । अब्रवीत् । मम । वै । इमे । पशवः । इति । अदुः । वै । [३०] मह्यम् । इमान् । इति । अब्रवीत् । न । वै । तस्य । ते । ईशते । इति । अब्रवीत् । यत् । यज्ञवास्तावितियज्ञ-वास्तौ । हीयते । मम । वै । तत् । इति । तस्मात् । यज्ञवास्त्विति तियज्ञ-वास्तु । न । अभ्यवेत्यमित्यभि-अवेत्यम् । सः । अब्रवीत् । यज्ञे । मा । एति । भज । अथ । ते । पशून् । न । अभीति । मꣳस्ये । इति । तस्मै । एतम् । मन्थिनः । सꣳस्रावमितिसं-स्रावम् । अजुहोत् । ततः । वै । तस्य । रुद्रः । पशून् । न । अभीति । अमन्यत । यत्र । एतम् । एवम् । विद्वान् । मन्थिनः । सꣳस्रावमितिसं-स्रावम् । जुहोति । न । तत्र । रुद्रः । पशून् । अभीति । मन्यते ॥ [३१] दधात्वायतनवती यांउपजीवनीयोभवतितेऽदुर्वैयत्रैतमेकादशच ॥ ❋ ❋ ॥९॥

जुष्टः । वाचः । भूयासम् । जुष्टः । वाचः । पतये । देवि । वाक् ॥ यत् । वाचः । मधुमदितिमधु-मत् । तस्मिन्न् । मा । धाः । स्वाहा । सरस्वत्यै ॥ ऋचा । स्तोमम् । समिति । अर्द्धय । गायत्रेण । रथन्तरमितिरथं-तरम् ॥ बृहत् । गायत्र वर्तनीतिगायत्र-वर्तनि ॥ यः । ते । द्रप्सः । स्कन्दति । यः । ते । अꣳशुः । बाहु च्युतइतिबाहु-च्युतः । धिषणयोः । उपस्थादित्युप-स्थात् ॥ अध्वर्योः । वा । परीति । यः । ते । पवित्रात् । स्वाहाकृतमितिस्वाहा-कृतम् । इन्द्राय । तम् । जुहोमि ॥ यः । द्रप्सः । अꣳशुः । पतितः । पृथिव्याम् । परिवापादितिपरि-वापात् । [३२] पुरो डाशात् । करम्भात् ॥ धानासोमादितिधाना-सोमात् । मन्थिनः । इन्द्र । शुक्रात् । स्वाहाकृतमितिस्वाहा-कृतम् । इन्द्राय । तम् । जुहोमि ॥ यः । ते । द्रप्सः । मधु मानितिमधु-मान् । इन्द्रियावानितीन्द्रिय-वान् । स्वाहाकृतइतिस्वाहा-कृतः । पुनः । अप्येतीत्यपि-एति । देवान् ॥ दिवः । पृथिव्याः । परीति । अन्तरिक्षात् । स्वाहाकृतमि तिस्वाहा-कृतम् । इन्द्राय । तम् । जुहोमि ॥ अध्वर्युः । वै । ऋत्विजाम् । प्रथमः । यु ज्यते । तेन । स्तोमः । योक्तव्यः । इति । आहुः । वाक् । अग्रेगाइत्यग्रे-गाः । अ ग्रे । एतु । ऋजुगाइत्यृजु-गाः । देवेभ्यः । यशः । मयि । दधती । प्राणानितिप्र-

अन्नाद्य॑ । पशुषु॑ । प्रजामितिप्र-जाम् । मयि॑ । [३३] च । यजमाने । च । इति॑ । आह । वाच॑म् । एव । तत् । यज्ञमुखइतियज्ञ-मुखे । युनक्ति । वास्तु॑ । वै । एतत् । यज्ञस्य॑ । क्रियते । यत् । ग्रहान् । गृहीत्वा । बहिष्पवमानमितिबहिः-पवमानम् । स र्पन्ति । पराञ्चः । हि । यन्ति॑ । पराचीभिः । स्तुवते॑ । वैष्णव्या । ऋचा । पुनः । ए त्येत्या-इत्य॑ । उपेति॑ । तिष्ठते । यज्ञः । वै । विष्णुः । यज्ञम् । एव । अकः । विष्णो इति॑ । त्वम् । नः । अन्त॑मः । शर्म॑ । यच्छ । सहन्त्य ॥ प्रेति॑ । ते । धाराः । मधु श्चुतइतिमधु-श्चुतः । उत्स॑म् । दुह्रते । अक्षि॑तम् । इति॑ । आह । यत् । एव । अस्य । शयानस्य । उपशुष्यतीत्युप-शुष्य॑ति । तत् । एव । अस्य । एतेन॑ । एति॑ । प्या ययति ॥ [३४] परिवापात्प्रजाम्मयिदुह्रतेचतु॑र्दशच ॥ ❋ ॥१०॥

अग्निना । रयिम् । अश्नवत् । पोष॑म् । एव । दिवेदिवइतिदिवे-दिवे ॥ यशस॑म् । वीरव॑त्तममितिवीरव॑त्-तमम् ॥ गोमानितिगो-मान् । अग्ने । अविमानित्यवि-मान् । अश्वी । यज्ञः । नृवत्सखेतिनृवत्-सखा । सद॑म् । इत् । अप्रमृष्यइत्यप्र-मृष्यः ॥ इडावा नितीडा-वान् । एषः । असुर । प्रजावानितिप्रजा-वान् । दीर्घः । रयिः । पृथुबुध्नइति पृथु-बुध्नः । सभावानितिसभा-वान् ॥ एति॑ । प्यायस्व । समिति॑ । ते ॥ इह । त्वष्टा रम् । अग्रियम् । विश्वरूपमितिविश्व-रूपम् । उपेति॑ । ह्वये ॥ अस्माक॑म् । अस्तु । केव॑लः ॥ तत् । नः । तुरीप॑म् । अध॑ । पोषयित्नु । देव । त्वष्टः । वीति॑ । रराणः । स्यस्व ॥ यतः । वीरः । [३५] कर्मण्यः । सुदक्षइतिसु-दक्षः । युक्तग्रावेतियुक्त-ग्रावा । जा यते । देवकामइतिदेव-कामः ॥ शिवः । त्वष्टः । इह । एति॑ । गहि । विभुरितिवि-भुः । पोषे । उत । त्मना ॥ यज्ञेयज्ञइतियज्ञे-यज्ञे । नः । उदिति॑ । अव ॥ पिशङ्गरूपइतिपि शङ्ग-रूपः । सुभरइतिसु-भरः । वयोधाइतिवयः-धाः । श्रुष्टी । वीरः । जायते । देव कामइतिदेव-कामः ॥ प्रजामितिप्र-जाम् । त्वष्टा । वीति॑ । स्यतु । नाभिम् । अस्मे इति॑ । अथ॑ । देवानाम् । अपीति॑ । एतु । पाथः ॥ प्रेति॑ । नः । देवी । एति॑ । नः । दिवः ॥ पीपिवांसम् । सरस्वतः । स्तन॑म् । यः । विश्वदर्शतइतिविश्व-दर्शतः ॥ धुक्षीमहि । प्रजामितिप्र-जाम् । इष॑म् ॥ [३६] ये । ते । सरस्वः । ऊर्मयः । मधु मन्तइतिमधु-मन्तः । घृतश्चुतइतिघृत-श्चुतः ॥ तेषाम् । ते । सुम्नम् । ईमहे ॥ यस्य॑ । व्रतम् । पशवः । यन्ति । सर्वे । यस्य॑ । व्रतम् । उपतिष्ठन्तइत्युप-तिष्ठन्ते । आपः ॥

यस्यं । व्रते । पुष्टिपतिरितिपुष्टि-पतिः । निविष्टइतिनि-विष्टः । तम् । सरस्वन्तम् । अवसे । हुवेम ॥ दिव्यम् । सुपर्णमितिसु-पर्णम् । वयसम् । बृहन्तम् । अपाम् । गर्भम् । वृषभम् । ओषधीनाम् ॥ अभीपतः । वृष्ट्या । तर्पयन्तम् । तम् । सरस्वन्तम् । अवसे । हुवेम ॥ सिनीवालि । पृथुष्टुकइतिपृथु-स्तुके । या । देवानाम् । असि । स्वसा ॥ जुषस्व । हव्यम् । [ ३७ ] आहुतमित्या-हुतम् । प्रजामितिप्र-जाम् । देवि । दिदिड्ढि । नः ॥ या । सुपाणिरितिसु-पाणिः । स्वङ्गुरिरितिसु-अङ्गुरिः । सुषूमेतिसु-सूमा । बहुसूवरीतिबहु-सूवरी ॥ तस्यै । विश्पत्न्यै । हविः । सिनीवाल्यै । जुहोतन ॥ इन्द्रम् । वः । विश्वतः । परीति । इन्द्रम् । नरः ॥ असितवर्णाइत्यसित-वर्णाः । हरयः । सुपर्णाइतिसु-पर्णाः । मिहः । वसानाः । दिवम् । उदिति । पतन्ति ॥ ते । एति ॥ अववृत्रन्न् । सदनानि । कृत्वा । आत् । इत् । पृथिवी । घृतैः । वीति । उद्यते ॥ हिरण्यकेशइतिहिरण्य-केशः । रजसः । विसारइतिवि-सारे । अहिः । धुनिः । वातः । इव । ध्रजीमान् ॥ शुचिभ्राजाइतिशुचि-भ्राजाः । उषसः । [३८] नवेदाः । यशस्वतीः । अपस्युवः । न । सत्याः ॥ एति । ते । सुपर्णाइतिसु-पर्णाः । अमिनन्त । एवैः । कृष्णः । नोनाव । वृषभः । यदि । इदम् ॥ शिवाभिः । न । स्मयमानाभिः । एति । अगात् । पतन्ति । मिहः । स्तनयन्ति । अभ्रा ॥ वाश्रा । इव । विद्युदितिवि-द्युत् । मिमाति । वत्सम् । न । माता । सिषक्ति ॥ यत् । एषाम् । वृष्टिः । असर्जि ॥ पर्वतः । चित् । महि । वृद्धः । बिभाय । दिवः । चित् । सानु । रेजत । स्वने । वः ॥ यत् । क्रीडथ । मरुतः । [ ३९ ] ऋष्टिमन्तइत्यृष्टि-मन्तः । आपः । इव । सध्रियञ्चः । धवध्वे ॥ अभीति । क्रन्द । स्तनय । गर्भम् । एति । धाः । उदन्वतेत्युदन्-वता । परीति । दीय । रथेन ॥ दृतिम् । स्विति । कर्ष । विषितमितिवि-सितम् । न्यञ्चम् । समाः । भवन्तु । उद्वतेत्युत्-वता । निपादाइतिनि-पादाः ॥ त्वम् । त्या । चित् । अच्युता । अग्ने । पशुः । न । यवसे ॥ धाम । ह । यत् । ते । अजर । वना । वृश्चन्ति । शिक्वसः ॥ अग्ने । भूरीणि । तव । जातवेदइतिजात-वेदः । देव । स्वधावइतिस्वधा-वः । अमृतस्य । धाम ॥ याः । च । [४०] मायाः । मायिनाम् । विश्वमिन्वेतिविश्वं-इन्व । त्वेइति । पूर्वीः । सन्दधुरितिसं-दधुः । पृष्टबन्धोइतिपृष्ट-बन्धो ॥ दिवः । नः । वृष्टिम् । मरुतः । ररीध्वम् । प्रेति । पिन्वत ।

वृष्णः। अश्वस्य। धाराः॥ अर्वाङ्। एतेन। स्तनयित्नुना। एति। इहि। अपः। निषिञ्चन्नितिनि-सिञ्चन्। असुरः। पिता। नः॥ पिन्वन्ति। अपः। मरुतः। सुदानवइतिसु-दानवः। पयः। घृतवदितिघृत-वत्। विदथेषु। आभुवइत्या-भुवः॥ अत्यम्। न। मिहे। वीति। नयन्ति। वाजिनम्। उत्सम्। दुहन्ति। स्तनयन्तम्। अक्षितम्॥ उदप्रुतइत्युद-प्रुतः। मरुतः। तान्। इयर्त। वृष्टिम्। [ ४१ ] ये। विश्वे। मरुतः। जुनन्ति॥ क्रोशाति। गर्दा। कन्या। इव। तुन्ना। पेरुम्। तुञ्जाना। पत्या। इव। जाया॥ घृतेन। द्यावापृथिवीइतिद्यावा-पृथिवी। मधुना। समिति। उक्षत। पयस्वतीः। कृणुत। आपः। ओषधीः॥ ऊर्जम्। च। तत्र। सुमतिमितिसु-मतिम्। च। पिन्वथ। यत्र। नरः। मरुतः। सिञ्चथ। मधु॥ उदिति। उ। त्यम्। चित्रम्॥ और्वभृगुवदित्यौर्वभृगु-वत्। शुचिम्। अप्नवानवदित्यप्नवान-वत्। एति। हुवे॥ अग्निम्। समुद्रवाससमितिसमुद्र-वाससम्॥ एति। सवम्। सवितुः। यथा। भगस्य। इव। भुजिम्। हुवे॥ अग्निम्। समुद्रवाससमितिसमुद्र-वाससम्॥ हुवे। वातस्वनमितिवात-स्वनम्। कविम्। पर्जन्यक्रन्द्यमितिपर्जन्य-क्रन्द्यम्। सहः॥ अग्निम्। समुद्रवाससमितिसमुद्र-वाससम्॥ [ ४२ ] वीरइषꣳ हव्यमुषसोमरुतश्चवृक्ष्णिम्भगस्यद्वादशच॥ ❀ ❀ ❀ ❀ ॥ ११ ॥

प्रजापतिरकामयतैषतेगायत्रोयज्ञꣳ वैप्रजापतेर्जायमानाःप्राजापत्यायोवाअयथादेवतमिष्टगौनिग्राभ्यास्स्थयो वैदेवाञ्जुष्टोऽग्निनारयिमेकादश॥११॥ प्रजापतिरकामयतप्रजापतेर्जायमानाव्यायच्छन्तेमह्यमिमान्मायामायिनान्द्विचत्वारिꣳशत्॥ ४२ ॥ प्रजापतिरकामयताग्निꣳ समुद्रवाससम्॥ ❀ ❀ ❀

हरिः ओ (३) म्॥

इति तृतीयकाण्डे प्रथमः प्रश्नः॥

(१) यत्रेतिपदस्थः आकारः पदकाले ह्रस्वत्वमापद्यते। तथा च प्रातिशाख्यं (अ-३ सू-८) 'अवा सचस्वा नुदा मृडा वर्द्धा शिक्षा रक्षाऽद्या भवा भजा यत्रा चरा पिबा ना धामा धारया धर्षा घा वर्द्धया बोधाऽत्रा तत्रा मुश्चाऽश्वस्या पृणस्वा हिष्ठा त्वन्तरा जनिष्वा युक्ष्वाऽच्छा' इति॥ अस्यार्थः 'अवा' इत्यादिषु 'अच्छा' इत्यन्तेषु पदेषु संहितायां वर्तमानः दीर्घः पदविभागसमये ह्रस्वत्वमापद्यते। (उदा) 'अवा नो देव्या। सचस्वानः। प्रणुदानः। मृडाजरित्रे। वर्द्धानः। शिक्षानः। रक्षाचनः। अद्यानः। भवापायुः। भजात्वन्नः। यत्रानरः। प्रचरासोम। पिबासोमम्। रिपवोनाह। धामाहयत्। धारयावसूनि। धर्षामानुषान्। उतवाघास्यालात्। वर्द्धयात्वम्। बोधानः। अत्रातेरूपम्। तत्रारथम्'। इत्यादीनि ऊह्यानि॥

# तृतीयकाण्डे द्वितीयः प्रश्नः ॥

हरिः ओ(४)म् ॥

यः । वै । पवमानानाम् । अन्वारोहानित्यनु-आरोहान् । विद्वान् । यजते । अन्विति । पवमानान् । एति । रोहति । न । पवमानेभ्यः । अवेति । छिद्यते । श्येनः । असि । गायत्रछन्दाइतिगायत्र-छन्दाः । अन्विति । त्वा । एति । रभे । स्वस्ति । मा । समिति । पारय । सुपर्णइतिसु-पर्णः । असि । त्रिष्टुप्छन्दाइतित्रिष्टुप् छन्दाः । अन्विति । त्वा । एति । रभे । स्वस्ति । मा । समिति । पारय । सघा । असि । जगतीछन्दाइतिजगती-छन्दाः । अन्विति । त्वा । एति । रभे । स्वस्ति । मा । समिति । पारय । इति । आह । एते । [१] वै । पवमानानाम् । अन्वारोहाइत्यनु-आरोहाः । तान् । यः । एवम् । विद्वान् । यजते । अन्विति । पवमानान् । एति । रोहति । न । पवमानेभ्यः । अवेति । छिद्यते । यः । वै । पवमानस्य । सन्ततिमिति सं-ततिम् । वेद । सर्वम् । आयुः । एति । न । पुरा । आयुषः । प्रेति । मीयते । पशुमानितिपशु-मान् । भवति । विन्दते । प्रजामितिप्र-जाम् । पवमानस्य । ग्रहाः । गृह्यन्ते । अथ । वै । अस्य । एते । अगृहीताः । द्रोणकलशइतिद्रोण-कलशः । आधवनीयइत्या-धवनीयः । पूतभृदितिपूत-भृत् । तान् । यत् । अगृहीत्वा । उपाकुर्यादित्युप-आकुर्यात् । पवमानम् । वीति । [२] छिन्द्यात् । तम् । विच्छिद्यमानमिति वि-छिद्यमानम् । अध्वर्योः । प्राणइतिप्र-अनः । अनु । वीति । छिद्येत । उपयामगृहीतइत्युपयाम-गृहीतः । असि । प्रजापतयइतिप्रजा-पतये । त्वा । इति । द्रोणकलशमितिद्रोण-कलशम् । अभीति । मृशेत् । इन्द्राय । त्वा । इति । आधवनीयमित्या-धवनीयम् । विश्वेभ्यः । त्वा । देवेभ्यः । इति । पूतभृतमितिपूत-भृतम् । पवमानम् । एव । तत् । समिति । तनोति । सर्वम् । आयुः । एति । न । पुरा । आयुषः । प्रेति । मीयते । पशुमानितिपशु-मान् । भवति । विन्दते । प्रजामितिप्र - जाम् ॥ [३] एतेविद्विचत्वारिंशच्च ॥ ❀ ❀ ❀ ❀ ॥ १ ॥

त्रीणि । वाव । सवनानि । अथ । तृतीयम् । सवनम् । अवेति । लुम्पन्ति । अनंशु । कुर्वन्तः । उपांशुमित्युप-अंशुम् । हुत्वा । उपांशुपात्रइत्युपांशु-पात्रे । अंशुम् । अवास्येत्यव-अस्य । तम् । तृतीयसवनइतितृतीय-सवने । अपि

सृज्येत्यपि-सृज्यं । अभीति । सुनुयात् । यत् । आप्याययतीत्या-प्याययति । तेन । अꣳशुमदित्यꣳशु-मत् । यत् । अभिषुणोतीत्यभि-सुनोति । तेन । ऋजीषि । सर्वाणि । एव । तत् । सवनानि । अꣳशुमन्तीत्यꣳशु-मन्ति । शुक्रवन्तीतिशुक्र-वन्ति । समावद्वीर्याणीतिसमावत्-वीर्याणि । करोति । द्वौ । समुद्रौ । विततावितिवि-ततौ । अजूर्यौ । पर्यावर्तेतेइतिपरि-आवर्तेते । जठरा । इव । पादाः ॥ तयोः । पश्यन्तः । अतीति । यन्ति । अन्यम् । अपश्यन्तः । [ ४ ] सेतुना । अतीति । यन्ति । अन्यम् ॥ द्वेइति । द्रधसीइति । सततीइतिस-तती । वस्ते । एकः । केशी । विश्वा । भुवनानि । विद्वान् ॥ तिरोधायेतितिरः-धाय । एति । असितम् । वसानः । शुक्रम् । एति । दत्ते । अनुहायेत्यनु-हाय । जार्यै ॥ देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । एतम् । महायज्ञमितिमहा-यज्ञम् । अपश्यन् । तम् । अतन्वत । अग्निहोत्रमित्यग्नि होत्रम् । व्रतम् । अकुर्वत । तस्मात् । द्विव्रतइतिद्वि-व्रतः । स्यात् । द्विः । हि । अग्निहोत्रमित्यग्नि-होत्रम् । जुह्वति । पौर्णमासमितिपौर्ण-मासम् । यज्ञम् । अग्नीषोमीयमित्यग्नी-सोमीयम् । [५] पशुम् । अकुर्वत । दार्श्यम् । यज्ञम् । आग्नेयम् । पशुम् । अकुर्वत । वैश्वदेवमितिवैश्व-देवम् । प्रातस्सवनमितिप्रातः-सवनम् । अकुर्वत । वरुणप्रघासानितिवरुण-प्रघासान् । माध्यन्दिनम् । सवनम् । साकमेधानितिसाक-मेधान् । पितृयज्ञमितिपितृ-यज्ञम् । त्र्यम्बकानितित्रि-अम्बकान् । तृतीयसवनमितितृतीय-सवनम् । अकुर्वत । तम् । एषाम् । असुराः । यज्ञम् । अन्ववाजिगाꣳसन्नित्यनु-अवाजिगाꣳसन् । तम् । न । अन्ववायन्नित्यनु-अवायन् । ते । अब्रुवन् । अध्वर्तव्याः । वै । इमे । देवाः । अभूवन् । इति । तत् । अध्वरस्य । अध्वरत्वमित्यध्वर-त्वम् । ततः । देवाः । अभवन् । परेति । असुराः । यः । एवम् । विद्वान् । सोमेन । यजते । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति ॥ [ ६ ]

अपश्यन्तोऽग्नीषोमीयमात्मनापरात्रीणिच ॥ ❀ ❀ ॥ २ ॥

परिभूरितिपरि-भूः । अग्निम् । परिभूरितिपरि-भूः । इन्द्रम् । परिभूरितिपरि-भूः । विश्वान् । देवान् । परिभूरितिपरि-भूः । माम् । सह । ब्रह्मवर्चसेनेतिब्रह्म-वर्चसेन । सः । नः । पवस्व । शम् । गवे । शम् । जनाय । शम् । अर्वते । शम् । राजन् । ओषधीभ्यइत्योषधि-भ्यः । अच्छिन्नस्य । ते । रयिपतइतिरयि-पते । सुवीर्यस्येतिसु-वीर्यस्य ।

रायः । पोषस्य । ददितारः । स्याम ॥ तस्य । मे । शस्व । तस्य । ते । भक्षीय । तस्य ।
ते । इदम् । उदिति । मृजे ॥ प्राणायेतिप्र-अनाय । मे । वर्चोदाइतिवर्चः-दाः । वर्च
से । पवस्व । अपानायेत्यप-अनाय । व्यानायेतिवि-अनाय । वाचे । [७] दक्ष
क्रतुभ्यामितिदक्षक्रतु-भ्याम् । चक्षुर्भ्यामितिचक्षुः-भ्याम् । मे । वर्चोदावितिवर्चः-
दौ । वर्चसे । पवेथाम् । श्रोत्राय । आत्मने । अङ्गेभ्यः । आयुषे । वीर्याय । विष्णोः ।
इन्द्रस्य । विश्वेषाम् । देवानाम् । जठरम् । असि । वर्चोदाइतिवर्चः-दाः । मे । वर्च
से । पवस्व । कः । असि । कः । नाम । कस्मै । त्वा । काय । त्वा । यम् । त्वा ।
सोमेन । अतीतृपम् । यम् । त्वा । सोमेन । अमीमदम् । सुप्रजाइतिसु-प्रजाः । प्र
जयेतिप्र-जया । भूयासम् । सुवीरइतिसु-वीरः । वीरैः । सुवर्चाइतिसु-वर्चाः । वर्च
सा । सुपोषइतिसु-पोषः । पोषैः । विश्वेभ्यः । मे । रूपेभ्यः । वर्चोदाइतिवर्चः-दाः ।
[८] वर्चसे । पवस्व । तस्य । मे । शस्व । तस्य । ते । भक्षीय । तस्य । ते । इदम् ।
उदिति । मृजे ॥ बुभूषन् । अवेति । ईक्षेत । एषः । वै । पात्रियः । प्रजापतिरि
तिप्रजा-पतिः । यज्ञः । प्रजापतिरितिप्रजा - पतिः । तम् । एव । तर्पयति । सः ।
एनम् । तृप्तः । भूत्या । अभीति । पवते । ब्रह्मवर्चसकामइतिब्रह्मवर्चस-कामः । अ
वेति । ईक्षेत । एषः । वै । पात्रियः । प्रजापतिरितिप्रजा - पतिः । यज्ञः । प्रजाप
तिरितिप्रजा-पतिः । तम् । एव । तर्पयति । सः । एनम् । तृप्तः । ब्रह्मवर्चसेनेति
ब्रह्म-वर्चसेन । अभीति । पवते । आमयावी । [९] अवेति । ईक्षेत । एषः । वै ।
पात्रियः । प्रजापतिरितिप्रजा-पतिः । यज्ञः । प्रजापतिरितिप्रजा-पतिः । तम् ।
एव । तर्पयति । सः । एनम् । तृप्तः । आयुषा । अभीति । पवते । अभिचरन्नित्यभि-
चरन् । अवेति । ईक्षेत । एषः । वै । पात्रियः । प्रजापतिरितिप्रजा-पतिः । यज्ञः ।
प्रजापतिरितिप्रजा-पतिः । तम् । एव । तर्पयति । सः । एनम् । तृप्तः । प्राणापाना
भ्यामितिप्राण-अपानाभ्याम् । वाचः । दक्षक्रतुभ्यामितिदक्षक्रतु - भ्याम् । चक्षु
र्भ्यामितिचक्षुः-भ्याम् । श्रोत्राभ्याम् । आत्मनः । अङ्गेभ्यः । आयुषः । अन्तः ।
एति । ताजक् । प्रेति । धन्वति ॥ [१०] वाचेरूपेभ्योवर्चोदाआमयावीपञ्चचत्वा
रिंशच्च ॥ ❀ ❀ ❀ ❀ ❀ ॥ ३ ॥

स्फ्यः । स्वस्तिः । विघनइतिवि-घनः । स्वस्तिः । पर्शुः । वेदिः । परशुः ।

नः । स्वस्ति ॥ यज्ञियाः । यज्ञकृतइतियज्ञ-कृतः । स्थ । ते । मा । अस्मिन् । यज्ञे । उपेति । ह्वयध्वम् । उपेति । मा । द्यावापृथिवीइतिद्यावा-पृथिवी । ह्वयेताम् । उपेति । आस्तावइत्या-स्तावः । कलशः । सोमः । अग्निः । उपेति । देवाः । उपेति । यज्ञः । उपेति । मा । होत्राः । उपहवइत्युप-हवे । ह्वयन्ताम् । नमः । अग्नये । मखघ्नइतिम ख-घ्ने । मखस्य । मा । यशः । अर्यात् । इति । आहवनीयमित्या-हवनीयम् । उपेति । तिष्ठते । यज्ञः । वै । मखः । [ ११ ] यज्ञम् । वाव । सः । तत् । अहन्न् । तस्मै । एव । नमस्कृत्येतिनमः-कृत्य । सदः । प्रेति । सर्पति । आत्मनः । अनार्त्यै । नमः । रुद्रा य । मखघ्नइतिमख-घ्ने । नमस्कृत्येतिनमः-कृत्या । मा । पाहि । इति । आग्नीध्रमि त्याग्नि-इध्रम् । तस्मै । एव । नमस्कृत्येतिनमः-कृत्य । सदः । प्रेति । सर्पति । आ त्मनः । अनार्त्यै । नमः । इन्द्राय । मखघ्नइतिमख-घ्ने । इन्द्रियम् । मे । वीर्यम् । मा । निरिति । वधीः । इति । होत्रीयम् । आशिषमित्या-शिषम् । एव । एताम् । एति । शास्ते । इन्द्रियस्य । वीर्यस्य । अनिर्घातायेत्यनिः-घाताय । याः । वै । [ १२ ] देव ताः । सदसि । आर्तिम् । आर्पयन्तीत्या-अर्पयन्ति । यः । ताः । विद्वान् । प्रसर्प तीतिप्र-सर्पति । न । सदसि । आर्तिम् । एति । ऋच्छति । नमः । अग्नये । मख घ्नइतिमख-घ्ने । इति । आह । एताः । वै । देवताः । सदसि । आर्तिम् । एति । अ र्पयन्ति । ताः । यः । एवम् । विद्वान् । प्रसर्पतीतिप्र-सर्पति । न । सदसि । आर्तिम् । एति । ऋच्छति । दृढेइति । स्थः । शिथिरेइति । समीचीइति । मा । अꣳहसः । पातम् । सूर्यः । मा । देवः । दिव्यात् । अꣳहसः । पातु । वायुः । अन्तरिक्षात् । [ १३ ] अग्निः । पृथिव्याः । यमः । पितृभ्यइतिपितृ-भ्यः । सरस्वती । मनुष्येभ्यः । देवीइति । द्वारौ । मा । मा । समिति । ताप्तम् । नमः । सदसे । नमः । सदसः । पतये । नमः । सखीनाम् । पुरोगाणामितिपुरः-गानाम् । चक्षुषे । नमः । दिवे । नमः । पृथिव्यै । अहे । दैधिषव्य । उदिति । अतः । तिष्ठ । अन्यस्य । सदने । सीद । यः । अस्मत् । पाकतरइतिपाक-तरः । उदिति । निवतइतिनि-वतः । उदिति । उद्व तइत्युत्-वतः । च । गेषम् । पातम् । मा । द्यावापृथिवीइतिद्यावा-पृथिवी । अद्य । अह्नः । सदः । वै । प्रसर्पन्तमितिप्र-सर्पन्तम् । [ १४ ] पितरः । अनु । प्रेति । सर्प न्ति । ते । एनम् । ईश्वराः । हिꣳसितोः । सदः । प्रसृप्येतिप्र-सृप्य । दक्षिणार्द्धमिति

दक्षिण-अर्द्धम् । परेति । ईक्षेत । एति । अगन्त । पितरः । पितृमानितिपितृ-मान् । अहम् । युष्माभिः । भूयासम् । सुप्रजसइतिसु-प्रजसः । मया । यूयम् । भूयास्त । इति । तेभ्यः । एव । नमस्कृत्येतिनमः-कृत्य । सदः । प्रेति । सर्पति । आत्मनः । अनार्त्यै ॥ [१५] मखोवाअन्तरिक्षात्प्रसर्पन्तन्त्रयस्त्रिंशच्च ॥ ❀ ॥४॥

भक्ष । एति । इहि । मा । एति । विश । दीर्घायुत्वायेतिदीर्घायु-त्वाय । शन्तनुत्वायेतिशन्तनु-त्वाय । रायः । पोषाय । वर्चसे । सुप्रजास्त्वायेतिसुप्रजाः-त्वाय । एति । इहि । वसोइति । पुरोवसोइतिपुरः-वसो । प्रियः । मे । हृदः । असि । अश्विनोः । त्वा । बाहुभ्यामितिबाहु-भ्याम् । सघ्यासम् । नृचक्षसमितिनृ-चक्षसम् । त्वा । देव । सोम । सुचक्षाइतिसु-चक्षाः । अवेति । ख्येषम् । मन्द्रा । अभिभूतिरित्यभि-भूतिः । केतुः । यज्ञानाम् । वाक् । जुषाणा । सोमस्य । तृप्यतु । मन्द्रा । स्वर्वाचीतिसु-अर्वाची । अदितिः । अनाहतशीर्ष्णीत्यनाहत-शीर्ष्णी । वाक् । जुषाणा । सोमस्य । तृप्यतु । एति । इहि । विश्वचर्षणइतिविश्व-चर्षणे । [१६] शम्भूरितिशं-भूः । मयोभूरितिमयः-भूः । स्वस्ति । मा । हरिवर्णेतिहरि-वर्ण । प्रेति । चर । क्रत्वे । दक्षाय । रायः । पोषाय । सुवीरतायाइतिसु-वीरतायै । मा । मा । राजन् । वीति । बीभिषः । मा । मे । हार्दि । त्विषा । वधीः ॥ वृषणे । शुष्माय । आयुषे । वर्चसे ॥ वसुमद्गणस्येतिवसुमत्-गणस्य । सोम । देव । ते । मतिविदइतिमति-विदः । प्रातस्सवनस्येतिप्रातः-सवनस्य । गायत्रछन्दसइतिगायत्र-छन्दसः । इन्द्रपीतस्येतीन्द्र-पीतस्य । नराशंसपीतस्येतिनराशंस-पीतस्य । पितृपीतस्येति पितृ-पीतस्य । मधुमतइतिमधु-मतः । उपहूतस्येत्युप-हूतस्य । उपहूतइत्युप-हूतः । भक्षयामि । रुद्रवद्गणस्येतिरुद्रवत्-गणस्य । सोम । देव । ते । मतिविदइतिमति-विदः । माध्यन्दिनस्य । सवनस्य । त्रिष्टुप्छन्दसइतित्रिष्टुप्-छन्दसः । इन्द्रपीतस्येतीन्द्र-पीतस्य । नराशंसपीतस्येतिनराशंस-पीतस्य । [१७] पितृपीतस्येतिपितृ-पीतस्य । मधुमतइतिमधु-मतः । उपहूतस्येत्युप-हूतस्य । उपहूतइत्युप-हूतः । भक्षयामि । आदित्यवद्गणस्येत्यादित्यवत्-गणस्य । सोम । देव । ते । मतिविदइतिमति-विदः । तृतीयस्य । सवनस्य । जगतीछन्दसइतिजगती-छन्दसः । इन्द्रपीतस्येतीन्द्र-पीतस्य । नराशंसपीतस्येतिनराशंस-पीतस्य । पितृपीतस्येतिपितृ-पीतस्य । मधुमतइति

मधु॑-म॒तः । उप॑हूत॒स्येत्युप॑-हू॒तस्य॒ । उप॑हूत॒इत्युप॑-हू॒तः । भ॒क्ष॒या॒मि॒ ॥ एति॑ । प्या॒य॒स्व॒ । समिति॑ । ए॒तु॒ । ते॒ । वि॒श्वतः॑ । सो॒म॒ । वृष्णि॑यम् ॥ भव॑ । वाज॑स्य । स॒ङ्गथइति॑सं-ग॒थे ॥ हिन्व॑ । मे॒ । गात्रा॑ । ह॒रि॒व॒इति॑हरि-व॒ः । ग॒णान् । मे॒ । मा । वीति॑ । ती॒तृ॒षः ॥ शि॒वः । मे॒ । स॒प्त॒र्षीनिति॑सप्त-ऋ॒षीन् । उपेति॑ । ति॒ष्ठ॒स्व॒ । मा । मे॒ । अवा॑ङ् । नाभि॑म् । अतीति॑ । [१८] ग॒ाः ॥ अपा॑म । सोम॑म् । अ॒मृता॑ः । अ॒भू॒म॒ । अद॑र्श्म । ज्योति॑ः । अवि॑दाम । दे॒वान् ॥ किम् । अ॒स्मान् । कृ॒ण॒व॒त् । अरा॑तिः । किम् । उ॒ । धू॒र्तिः । अ॒मृ॒त॒ । मर्त्य॑स्य ॥ यत् । मे॒ । आ॒त्मन॑ः । मि॒न्दा । अभू॑त् । अ॒ग्निः । तत् । पुन॑ः । एति॑ । अ॒हा॒ः । जा॒तवे॑दा॒इति॑जा॒त-वे॒दाः । विच॑र्षणि॒रिति॑वि-च॒र्षणिः ॥ पुन॑ः । अ॒ग्निः । चक्षु॑ः । अ॒दा॒त् । पुन॑ः । इन्द्र॑ः । बृह॒स्पति॑ः ॥ पुन॑ः । मे॒ । अ॒श्वि॒ना॒ । यु॒वम् । चक्षु॑ः । एति॑ । ध॒त्त॒म् । अ॒क्ष्योः ॥ इ॒ष्टय॑जुष॒इती॒ष्ट-य॒जु॒षः । ते॒ । दे॒व॒ । सो॒म॒ । स्तु॒तस्तो॑म॒स्येति॑स्तु॒त-स्तो॒म॒स्य॒ । [१९] श॒स्तोक्थ॒स्येति॑श॒स्त-उ॒क्थ॒स्य॒ । हरि॑वत॒इति॒हरि॑-व॒तः । इन्द्र॑पीत॒स्येतीन्द्र॑-पी॒त॒स्य॒ । मधु॑मत॒इति॒मधु॑-म॒तः । उप॑हूत॒स्येत्युप॑-हू॒तस्य॒ । उप॑हूत॒इत्युप॑-हू॒तः । भ॒क्ष॒या॒मि॒ ॥ आ॒पूर्या॒इत्या॑-पूर्याः॑ । स्थ॒ । एति॑ । मा॒ । पू॒र्य॒त॒ । प्र॒जयेति॑प्र-जया॑ । च॒ । धने॑न । च॒ ॥ ए॒तत् । ते॒ । त॒त॒ । ये । च॒ । त्वाम् । अन्विति॑ । ए॒तत् । ते॒ । पि॒ता॒म॒ह॒ । प्र॒पि॒ता॒म॒हेति॑प्र-पि॒ता॒म॒ह॒ । ये । च॒ । त्वाम् । अन्विति॑ । अत्र॑ । पि॒त॒रः॒ । य॒था॒भा॒गमिति॑यथा-भा॒गम् । म॒न्द॒ध्व॒म् । नम॑ः । व॒ः । पि॒त॒रः॒ । रसा॑य । नम॑ः । व॒ः । पि॒त॒रः॒ । शुष्मा॑य । नम॑ः । व॒ः । पि॒त॒रः॒ । जी॒वाय॑ । नम॑ः । व॒ः । पि॒त॒रः॒ । [२०] स्व॒धा॒या॒इति॑स्व-धायै॑ । नम॑ः । व॒ः । पि॒त॒रः॒ । म॒न्यवे॑ । नम॑ः । व॒ः । पि॒त॒रः॒ । घो॒राय॑ । पित॑रः । नम॑ः । व॒ः । ये । ए॒तस्मि॑न्न् । लो॒के । स्थ । यु॒ष्मान् । ते॒ । अन्विति॑ । ये । अ॒स्मिन्न् । लो॒के । माम् । ते । अन्विति॑ । ये । ए॒तस्मि॑न्न् । लो॒के । स्थ । यू॒यम् । तेषा॑म् । वसि॑ष्ठाः । भू॒या॒स्त॒ । ये । अ॒स्मिन्न् । लो॒के । अ॒हम् । तेषा॑म् । वसि॑ष्ठः । भू॒या॒स॒म् । प्रजा॑पत॒इति॒प्रजा॑-प॒ते॒ । न । त्वत् । ए॒तानि॑ । अ॒न्यः । विश्वा॑ । जा॒तानि॑ । परीति॑ । ता । ब॒भू॒व॒ ॥ [२१] यत्का॑मा॒इति॒यत्-का॒माः॒ । ते॒ । जु॒हु॒मः । तत् । न॒ः । अ॒स्तु॒ । व॒यम् । स्या॒म॒ । पत॑यः । र॒यी॒णाम् ॥ दे॒वकृ॑त॒स्येति॑दे॒व-कृ॒त॒स्य॒ । एन॑सः । अ॒व॒यज॑न॒मित्य॑व-यज॑नम् । अ॒सि॒ । म॒नु॒ष्यकृ॑त॒स्येति॑म॒नु॒ष्य-कृ॒त॒स्य॒ । एन॑सः । अ॒व॒यज॑न॒मित्य॑व-यज॑नम् । अ॒सि॒ । पि॒तृकृ॑त॒स्येति॑पि॒तृ-कृ॒त॒स्य॒ । एन॑सः । अ॒

वयजंनमित्यंव-यजंनम् । असि । अप्स्वित्यंप्-सु । धौतस्यं । सोम । देव । ते । नृभि
रितिनृ-भिः । सुतस्यं । इष्टयंजुषइतीष्ट-यजुषः । स्तुतस्तोंमस्येतिस्तुत-स्तोमस्य ।
शस्तोक्थस्येतिशस्त-उक्थस्य । यः । भक्षः । अश्वसनिरित्यंश्व-सनिः । यः । गोस
निरितिगो-सनिः । तस्यं । ते । पितृभिरितिपितृ-भिः । भक्षकृंतस्येतिभक्षं-कृत
स्य । उपंहूतस्येत्युपं-हूतस्य । उपंहूतइत्युपं-हूतः । भक्षयामि ॥ [ २२ ] विश्वचर्ष
णेत्रिष्टुप्छंन्दसइन्द्रंपीतस्यनराशꣳसंपीतस्यातिंस्तुतस्तोंमस्यजीवायनमोवःपितरोव
भूवचतुंश्चत्वारिꣳशच ॥ ❀ ❀ ❀ ❀ ॥५॥

महीनाम् । पयः । असि । विश्वेषाम् । देवानाम् । तनूः । ऋध्यासम् । अद्य ।
पृषंतीनाम् । ग्रहम् । पृषंतीनाम् । ग्रहः । असि । विष्णोः । हृदंयम् । असि । एकं
म् । इष । विष्णुः । त्वा । अनुं । वि । चक्रमे । भूतिः । दध्ना । घृतेनं । वर्द्ध
ताम् । तस्यं । मा । इष्टस्यं । वीतस्यं । द्रविंणम् । एतिं । गम्यात् । ज्योतिः । असि ।
वैश्वानरम् । पृश्नियै । दुग्धम् । यावंतीइतिं । द्यावापृथिवीइतिद्यावा-पृथिवी । महि
त्वेतिमहि-त्वा । यावंत् । च । सप्त । सिन्धंवः । वितस्थुरितिवि-तस्थुः ॥ तावंन्तम् ।
इन्द्र । ते । [ २३ ] ग्रहम् । सह । ऊर्जा । गृह्णामि । अस्तृंतम् ॥ यत् । कृष्णशकु
नइतिकृष्ण-शकुनः । पृषदाज्यमितिपृषत्-आज्यम् । अवमृशेदित्यंव-मृशेत् । शूद्राः ।
अस्य । प्रमायुंकाइतिप्र-मायुंकाः । स्युः । यत् । श्वा । अवमृशेदित्यंव-मृशेत् । च
तुष्पादइतिचतुः-पादः । अस्य । पशवः । प्रमायुंकाइतिप्र-मायुंकाः । स्युः । यत् ।
स्कन्देत् । यजमानः । प्रमायुंकइतिप्र-मायुंकः । स्यात् । पशवः । वै । पृषदाज्यमि
तिपृषत्-आज्यम् । पशवः । वै । एतस्यं । स्कन्दन्ति । यस्यं । पृषदाज्यमितिपृषत्-
आज्यम् । स्कन्दंति । यत् । पृषदाज्यमितिपृषत्-आज्यम् । पुनः । गृह्णाति । पशून् ।
एव । अस्मै । पुनः । गृह्णाति । प्राणइतिप्र-अनः । वै । पृषदाज्यमितिपृषत्-आज्यम् ।
प्राणइतिप्र-अनः । वै । [ २४ ] एतस्यं । स्कन्दति । यस्यं । पृषदाज्यमितिपृषत्-आ
ज्यम् । स्कन्दंति । यत् । पृषदाज्यमितिपृषत्-आज्यम् । पुनः । गृह्णाति । प्राणमिति
प्र-अनम् । एव । अस्मै । पुनः । गृह्णाति । हिरंण्यम् । अवधायेत्यंव-धायं । गृह्णाति ।
अमृतम् । वै । हिरंण्यम् । प्राणइतिप्र-अनः । पृषदाज्यमितिपृषत् - आज्यम् । अमृ
तम् । एव । अस्य । प्राणइतिप्र-अने । दधाति । शतमानमितिशत-मानम् । भवति ।

शतायुरितिशत-आयुः । पुरुषः । शतेन्द्रियइतिशत-इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति । अश्वम् । अवेति । ग्रापयति । प्राजापत्यइतिप्राजा-पत्यः । वै । अश्वः । प्राजापत्यइतिप्राजा-पत्यः । प्राणइतिप्र-अनः । स्वात् । एव । अस्मै । योनेः । प्राणमितिप्र-अनम् । निरिति । मिमीते । वीति । वै । एतस्य । यज्ञः । छिद्यते । यस्य । पृषदाज्यमितिपृषत्-आज्यम् । स्कन्दति । वैष्णव्या । ऋचा । पुनः । गृह्णाति । यज्ञः । वै । विष्णुः । यज्ञेन । एव । यज्ञम् । समिति । तनोति ॥ [ २५ ] ते पृषदाज्यम्प्राणो वैयोनेःप्राणन्द्वाविंᳩ शतिश्च ॥ ❀ ❀ ॥ ६॥

देव । सवितः । एतत् । ते । प्रेति । आह । तत् । प्रेति । च । सुव । प्रेति । च । यज । बृहस्पतिः । ब्रह्मा । आयुष्मत्याः । ऋचः । मा । गात । तनूपादितितनू-पात् । साम्नः । सत्याः । वः । आशिषइत्या शिषः । सन्तु । सत्याः । आकूतय इत्या-कूतयः । ऋतम् । च । सत्यम् । च । वदत । स्तुत । देवस्य । सवितुः । प्रसव इतिप्र-सवे । स्तुतस्य । स्तुतम् । असि । ऊर्जम् । मह्यम् । स्तुतम् । दुहाम् । एति । मा । स्तुतस्य । स्तुतम् । गम्यात् । शस्त्रस्य । शस्त्रम् । [२६] असि । ऊर्जम् । मह्यम् । शस्त्रम् । दुहाम् । एति । मा । शस्त्रस्य । शस्त्रम् । गम्यात् । इन्द्रियावन्तइतीन्द्रिय-वन्तः । वनामहे । धुक्षीमहि । प्रजामितिप्र-जाम् । इषम् ॥ सा । मे । सत्या । आशीरित्या-शीः । देवेषु । भूयात् । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । मा । एति । गम्यात् ॥ यज्ञः । बभूव । सः । एति । बभूव । सः । प्रेति । जज्ञे । सः । वावृधे ॥ सः । देवानाम् । अधिपतिरित्यधि-पतिः । बभूव । सः । अस्मान् । अधिपतीनित्यधि-पतीन् । करोतु । वयम् । स्याम । पतयः । रयीणाम् ॥ यज्ञः । वा । वै । [ २७ ] यज्ञपतिमिति यज्ञ-पतिम् । दुहे । यज्ञपतिरितियज्ञ-पतिः । वा । यज्ञम् । दुहे । सः । यः । स्तुतशस्त्रयोरितिस्तुत-शस्त्रयोः । दोहम् । अविद्वान् । यजते । तम् । यज्ञः । दुहे । सः । इष्ट्वा । पापीयान् । भवति । यः । एनयोः । दोहम् । विद्वान् । यजते । सः । यज्ञम् । दुहे । सः । इष्ट्वा । वसीयान् । भवति । स्तुतस्य । स्तुतम् । असि । ऊर्जम् । मह्यम् । स्तुतम् । दुहाम् । एति । मा । स्तुतस्य । स्तुतम् । गम्यात् । शस्त्रस्य । शस्त्रम् । असि । ऊर्जम् । मह्यम् । शस्त्रम् । दुहाम् । एति । मा । शस्त्रस्य । शस्त्रम् । गम्यात् । इति । आह । एषः । वै । स्तुतशस्त्रयोरितिस्तुत-शस्त्रयोः । दोहः । तम् । यः । एवम् ।

विद्वान् । यज॑ते । दुहे । एव । यज्ञम् । इष्ट्वा । वसी॑यान् । भवति ॥ [२८] शस्त्रं॑ वै शस्त्रन्दुहान्द्वावि॒ꣳशतिश्च ॥ ❀ ❀ ❀ ❀ ॥ ७ ॥

श्येनाय॑ । पत्व॑ने । स्वाहा॑ । वट् । स्वयम॑भिगूर्ता॒येति॒स्वयं-अ॒भिगू॒र्ता॒य । नम॑ः । वि॒ष्टम्भाये॑ति॒वि-स्त॒म्भाय॑ । धर्म॑णे । स्वाहा॑ । वट् । स्वयम॑भिगूर्ता॒येति॒स्वयं-अ॒भिगू॒र्ता॒य । नम॑ः । प॒रि॒धय॒इति॒परि-धये॑ । ज॒नप्रथ॑ना॒येति॒जन-प्रथ॑नाय । स्वाहा॑ । वट् । स्वयम॑भिगू र्ता॒येति॒स्व यं-अ॒भिगू॒र्ता॒य । नम॑ः । ऊ॒र्जे । होत्रा॑णाम् । स्वाहा॑ । वट् । स्वयम॑भिगू र्ता॒येति॒स्वयं-अ॒भिगू॒र्ता॒य । नम॑ः । पय॑से । होत्रा॑णाम् । स्वाहा॑ । वट् । स्वयम॑भिगू र्ता॒येति॒स्वयं-अ॒भिगू॒र्ता॒य । नम॑ः । प्र॒जाप॑तय॒इति॒प्रजा-प॒तये । मन॑वे । स्वाहा॑ । वट् । स्वयम॑भिगू र्ता॒येति॒स्वयं-अ॒भिगू॒र्ता॒य । नम॑ः । ऋ॒तम् । ऋ॒तपा इत्यृ॑त-पाः । सु॒वर्वा॒डिति॒सुवः-वाट् । स्वाहा॑ । वट् । स्वयम॑भिगू र्ता॒येति॒स्वयं-अ॒भिगू॒र्ता॒य । नम॑ः । तृम्प॑न्ता॑म् । होत्रा॑ः । मधो॑ः । घृतस्य॑ । य॒ज्ञप॑ति॒मिति॒य॒ज्ञ-प॒तिम् । ऋष॑यः । एन॑सा । [२९] आ॒हुः ॥ प्र॒जाइति॒प्र-जाः । निर्भ॑क्ता॒इति॒निः-भ॒क्ताः । अ॒नु॒तप्य॑मा॒ना॒इत्य॑नु-त॒प्य॑मानाः । म॒धव्यौ॑ । स्तो॒कौ । अपे॑ति॑ । तौ । रा॒ध ॥ समि॑ति । न॒ः । ताभ्या॑म् । सृ॒जतु । वि॒श्वक॒र्मेति॒वि॒श्व-क॒र्मा । घो॒रा॑ः । ऋष॑यः । नम॑ः । अ॒स्तु । ए॒भ्यः ॥ चक्षु॑षः । ए॒षाम् । मन॑सः । च । स॒न्धावि॒ति॒सं-धौ । बृह॒स्पत॑ये । महि॑ । सत् । द्युमदि॒ति॒द्यु-मत् । नम॑ः ॥ नम॑ः । वि॒श्वक॑र्म॑ण॒इति॒वि॒श्व-क॒र्मणे । सः । उ । पा॒तु । अ॒स्मान् । अ॒नन्यान् । सो॒मपा॒नि॒ति॒सोम-पान् । मन्य॑मानः ॥ प्रा॒णस्येति॒प्र-अ॒नस्य॑ । वि॒द्वान् । स॒मर॒इति॒सं-अ॒रे । न । धीर॑ः । एन॑ः । च॒कृ॒वान् । महि॑ । ब॒द्धः । ए॒षाम् ॥ तम् । वि॒श्वक॒र्म॒न्निति॒वि॒श्व-क॒र्म॒न् । [३०] प्रेति॑ । मु॒ञ्च । स्व॒स्तये॑ । ये । भ॒क्षय॑न्तः । न । वसू॑नि । आ॒नृ॒हुः । यान् । अ॒ग्नय॑ः । अ॒न्वत॑प्य॒न्तेत्य॑नु-अत॑प्यन्त । धिष्णि॑याः । इ॒यम् । तेषा॑म् । अ॒व॒या । दु॒रिष्ट्या॒इति॒दुः-इ॒ष्ट्यै । स्वि॑ष्टि॒मिति॒सु-इ॒ष्टिम् । न॒ः । ताम् । कृ॒णोतु । वि॒श्वक॒र्मेति॒वि॒श्व-क॒र्मा ॥ नम॑ः । पि॒तृभ्य॒इति॒पि॒तृ-भ्यः । अ॒भीति॑ । ये । न॒ः । अख्य॑न् । य॒ज्ञकृ॒त॒इति॒यज्ञ-कृत॑ः । य॒ज्ञका॒मा॒इति॒य॒ज्ञ-का॒माः । सु॒दे॒वा॒इति॒सु-दे॒वाः । अ॒कामाः । व॒ः । दक्षि॑णाम् । न । नी॒नि॒म । मा । न॒ः । तस्मा॑त् । एन॑सः । पा॒पयि॒ष्ट ॥ याव॑न्तः । वै । स॒दस्या॑ः । ते । सर्वे॑ । द॒क्षि॒ण्या॑ः । तेभ्य॑ः । यः । दक्षि॑णाम् । न । [३१] नये॑त् । एति॑ । ए॒भ्यः ।

वृश्च्येत । यत् । वैश्वकर्मणानीतिवैश्व-कर्मणानि । जुहोति । सदस्यान् । एव । तत् । प्रीणाति । अस्मेइति । देवासः । वपुषे । चिकित्सत । यम् । आशिरा । दम्पतीइति । वामम् । अश्नुतः ॥ पुमान् । पुत्रः । जायते । विन्दते । वसु । अथ । विश्वे । अरपाः । एधते । गृहः ॥ आशीर्दायेत्याशीः-दाया । दम्पतीइति । वामम् । अश्नुताम् । अरिष्टः । रायः । सचताम् । समोकसेतिसं-ओकसा ॥ यः । एति । असिंचत् । सन्दुग्धमितिसं-दुग्धम् । कुम्भ्या । सह । इष्टेन । यामन् । अमतिम् । जहातु । सः ॥ सर्पिर्ग्रीवीतिसर्पिः-ग्रीवी । [ ३२ ] पीवरी । अस्य । जाया । पीवानः । पुत्राः । अकृशासः । अस्य ॥ सहजानिरितिसह-जानिः । यः । सुमखस्यमानइतिसु-मखस्यमानः । इन्द्राय । आशिरम् । सह । कुम्भ्या । अदात् ॥ आशीरित्या-शीः । मे । ऊर्जम् । उत । सुप्रजास्त्वमितिसुप्रजाः-त्वम् । इषम् । दधातु । द्रविणम् । सवर्चसमितिस-वर्चसम् ॥ सञ्जयन्नितिसं-जयन् । क्षेत्राणि । सहसा । अहम् । इन्द्र । कृण्वानः । अन्यान् । अधरान् । सपत्नान् ॥ भूतम् । असि । भूते । मा । धाः । मुखम् । असि । मुखम् । भूयासम् । द्यावापृथिवीभ्यामितिद्यावा-पृथिवीभ्याम् । त्वा । परीति । गृह्णामि । विश्वे । त्वा । देवाः । वैश्वानराः । [ ३३ ] प्रेति । च्यावयन्तु । दिवि । देवान् । दृꣳह । अन्तरिक्षे । वयाꣳसि । पृथिव्याम् । पार्थिवान् । ध्रुवम् । ध्रुवेण । हविषा । अवेति । सोमम् । नयामसि ॥ यथा । नः । सर्वम् । इत् । जगत् । अयक्ष्मम् । सुमनाइतिसु-मनाः । असत् ॥ यथा । नः । इन्द्रः । इत् । विशः । केवलीः । सर्वाः । समनसइतिस-मनसः । करत् ॥ यथा । नः । सर्वाः । इत् । दिशः । अस्माकम् । केवलीः । असन् ॥ [ ३४ ] एनंसाविश्वकर्मन् योदक्षिणान्नंसर्पिर्ग्रीवी वैश्वानराश्चत्वारिꣳशच्च ॥ ❀ ❀ ❀ ❀ ❀ ॥ ८ ॥

यत् । वै । होता । अध्वर्युम् । अभ्याह्वयतइत्यभि-आह्वयते । वज्रम् । एनम् । अभि । प्रेति । वर्तयति । उक्थशाइत्युक्थ-शाः । इति । आह । प्रातस्सवनमितिप्रातः-सवनम् । प्रतिगीर्येतिप्रति-गीर्य । त्रीणि । एतानि । अक्षराणि । त्रिपदेतित्रि-पदा । गायत्री । गायत्रम् । प्रातस्सवनमितिप्रातः-सवनम् । गायत्रिया । एव । प्रातस्सवनइतिप्रातः-सवने । वज्रम् । अन्तः । धत्ते । उक्थम् । वाचि । इति । आह । माध्यन्दिनम् । सवनम् । प्रतिगीर्येतिप्रति-गीर्य । चत्वारि । एतानि । अक्षराणि ।

चतुंष्पदेतिचतुंः-पदा । त्रिष्टुप् । त्रैष्टुंभम् । माध्यंन्दिनम् । सवंनम् । त्रिष्टुभा । एव । माध्यंन्दिने । सवंने । वज्रंम् । अन्तः । धत्ते । [३५] उक्थम् । वाचि । इन्द्राय । इतिं । आह । तृतीयसवनमितिंतृतीय-सवनम् । प्रतिगीर्येतिंप्रति-गीर्यं । सप्त । एतानिं । अक्षरांणि । सप्तपदेतिंसप्त-पदा । शक्वंरी । शाक्वरः । वज्रंः । वज्रेण । एव । तृतीयसवनइतितृतीय-सवने । वज्रंम् । अन्तः । धत्ते । ब्रह्मवादिनइतिंब्रह्म - वादिनंः । वदन्ति । सः । तु । वै । अध्वर्युः । स्यात् । यः । यथासवनमितिंयथा-सवनम् । प्रतिगरइतिंप्रति-गरे । छन्दांꣳसि । सम्पादयेदितिंसं-पादयेत् । तेजंः । प्रातस्सवनइतिंप्रातः-सवने । आत्मन्न् । दधीत । इन्द्रियम् । माध्यंन्दिने । सवंने । पशून् । तृतीयसवनइतिंतृतीय-सवने । इतिं । उक्थंशाइत्युक्थं-शाः । इतिं । आह । प्रातस्सवनमितिंप्रातः-सवनम् । प्रतिगीर्येतिंप्रति - गीर्यं । त्रीणिं । एतानिं । अक्षरांणि । [३६] त्रिपदेतिंत्रि-पदा । गायत्री । गायत्रम् । प्रातस्सवनमितिंप्रातः - सवनम् । प्रातस्सवनइतिंप्रातः-सवने । एव । प्रतिगरइतिंप्रति- गरे । छन्दांꣳसि । समितिं । पादयति । अथोइतिं । तेजंः । वै । गायत्री । तेजंः । प्रातस्सवनमितिंप्रातः-सवनम् । तेजंः । एव । प्रातस्सवनइतिंप्रातः-सवने । आत्मन्न् । धत्ते । उक्थम् । वाचि । इतिं । आह । माध्यंन्दिनम् । सवंनम् । प्रतिगीर्येतिंप्रति - गीर्यं । चत्वारिं । एतानिं । अक्षरांणि । चतुंष्पदेतिचतुंः-पदा । त्रिष्टुप् । त्रैष्टुंभम् । माध्यंन्दिनम् । सवंनम् । माध्यंन्दिने । एव । सवंने । प्रतिगरइतिंप्रति - गरे । छन्दांꣳसि । समितिं । पादयति । अथोइतिं । इन्द्रियम् । वै । त्रिष्टुक् । इन्द्रियम् । माध्यंन्दिनम् । सवंनम् । [३७] इन्द्रियम् । एव । माध्यंन्दिने । सवंने । आत्मन्न् । धत्ते । उक्थम् । वाचि । इन्द्राय । इतिं । आह । तृतीयसवनमितिंतृतीय-सवनम् । प्रतिगीर्येतिंप्रति-गीर्यं । सप्त । एतानिं । अक्षरांणि । सप्तपदेतिंसप्त-पदा । शक्वंरी । शाक्वराः । पशवंः । जागंतम् । तृतीयसवनमितिंतृतीय-सवनम् । तृतीयसवनइतितृतीय-सवने । एव । प्रतिगरइतिंप्रति-गरे । छन्दांꣳसि । समितिं । पादयति । अथोइतिं । पशवंः । वै । जगंती । पशवंः । तृतीयसवनमितिंतृतीय-सवनम् । पशून् । एव । तृतीयसवनइतिंतृतीय-सवने । आत्मन्न् । धत्ते । यत् । वै । होता । अध्वर्युम् । अभ्याह्वयंतइत्यंभि-आह्वयंते । आव्यंम् । अस्मिन्न् । दधाति । तत् । यत् । न । [३८]

अपहन्नीतेत्यप-हन्नीत । पुरा । अस्य । सꣳवथ्सरादितिसं-वथ्सरात् । गृहे । एति । वेवीरन्न् । शोꣳसा । मोदः । इव । इति । प्रत्याह्वयतइतिप्रति-आह्वयते । तेन । एव । तत् । अपेति । हन्ते । यथा । वै । आयतामित्या-यताम् । प्रतीक्षतइतिप्रति-ईक्षते । एवम् । अध्वर्युः । प्रतिगरमितिप्रति-गरम् । प्रतीति । ईक्षते । यत् । अभिप्रतिगृणीयादित्यभि-प्रतिगृणीयात् । यथा । आयतयेत्या-यतया । समृच्छतइतिसं-ऋच्छते । तादृक् । एव । तत् । यत् । अर्द्धर्चादित्यर्द्ध-ऋचात् । लुप्येत । यथा । धावद्भ्यइतिधावत्-भ्यः । हीयते । तादृक् । एव । तत् । प्रबाहुगितिप्र-बाहुक् । वै । ऋत्विजाम् । उद्गीथाइत्युत्-गीथाः । उद्गीथइत्युत्-गीथः । एव । उद्गातृणामित्युत्-गातृणाम् । [३९] ऋचः । प्रणवइतिप्र-नवः । उक्थशꣳसिनामित्युक्थ-शꣳसिनाम् । प्रतिगरइतिप्रति-गरः । अध्वर्यूणाम् । यः । एवम् । विद्वान् । प्रतिगृणातीतिप्रति-गृणाति । अन्नादइत्यन्न-अदः । एव । भवति । एति । अस्य । प्रजायामितिप्र-जायाम् । वाजी । जायते । इयम् । वै । होता । असौ । अध्वर्युः । यत् । आसीनः । शꣳसति । अस्याः । एव । तत् । होता । न । एति । आस्ते । इव । हि । इयम् । अथो इति । इमाम् । एव । तेन । यजमानः । दुहे । यत् । तिष्ठन्न् । प्रतिगृणातीतिप्रति-गृणाति । अमुष्याः । एव । तत् । अध्वर्युः । न । एति । [४०] तिष्ठति । इव । हि । असौ । अथोइति । अमूम् । एव । तेन । यजमानः । दुहे । यत् । आसीनः । शꣳसति । तस्मात् । इतःप्रदानमितीतः-प्रदानम् । देवाः । उपेति । जीवन्ति । यत् । तिष्ठन्न् । प्रतिगृणातीतिप्रति-गृणाति । तस्मात् । अमुतःप्रदानमित्यमुतः-प्रदानम् । मनुष्याः । उपेति । जीवन्ति । यत् । प्राङ् । आसीनः । शꣳसति । प्रत्यङ् । तिष्ठन्न् । प्रतिगृणातीतिप्रति-गृणाति । तस्मात् । प्राचीनम् । रेतः । धीयते । प्रतीचीः । प्रजाइतिप्र-जाः । जायन्ते । यत् । वै । होता । अध्वर्युम् । अभ्याह्वयतइत्यभि-आह्वयते । वज्रम् । एनम् । अभि । प्रेति । वर्तयति । पराङ् । एति । वर्तते । वज्रम् । एव । तत् । नीति । करोति ॥ [४१] सवनेवज्रमन्तर्द्धैत्तत्रीण्येतान्यक्षराणीन्द्रियम्माध्यंन्दिनꣳसवनन्नोद्गातृणामध्वर्यु नैतिवर्तयत्यष्टौच ॥ ❋ ॥९॥

उपयामगृहीतइत्युपयाम-गृहीतः । असि । वाक्षसदितिवाक्ष-सत् । असि । वाक्पाभ्यामितिवाक्-पाभ्याम् । त्वा । क्रतुपाभ्यामितिक्रतु-पाभ्याम् । अस्य । यज्ञ

स्य । ध्रुवस्य । अध्यंख्षाभ्यामित्यधि-अख्षाभ्याम् । गृह्णामि । उपयामगृहीतइत्युप
याम-गृहीतः । असि । ऋतसदित्यृत-सत् । असि । चख्षुष्पाभ्यामितिचख्षुः-पाभ्याम् ।
त्वा । क्रतुपाभ्यामितिक्रतु-पाभ्याम् । अस्य । यज्ञस्य । ध्रुवस्य । अध्यंख्षाभ्यामि
त्यधि-अख्षाभ्याम् । गृह्णामि । उपयामगृहीतइत्युपयाम-गृहीतः । असि । श्रुतस
दितिश्रुत-सत् । असि । श्रोत्रपाभ्यामितिश्रोत्र-पाभ्याम् । त्वा । क्रतुपाभ्यामिति
क्रतु-पाभ्याम् । अस्य । यज्ञस्य । ध्रुवस्य । अध्यंख्षाभ्यामित्यधि-अख्षाभ्याम् । गृ
ह्णामि । देवेभ्यः । त्वा । विश्वदेवेभ्यइतिविश्व-देवेभ्यः । त्वा । विश्वेभ्यः । त्वा । दे
वेभ्यः । विष्णो । उरुक्रमेत्युरु-क्रम । एषः । ते । सोमः । तम् । रख्षस्व । [४२] तम् ।
ते । दुश्चख्षाइतिदुः-चख्षाः । मा । अवेति । ख्यत् । मयि । वसुः । पुरोवसुरितिपुरः-
वसुः । वाक्पाइतिवाक्-पाः । वाचम् । मे । पाहि । मयि । वसुः । विदद्वसुरिति
विदत्-वसुः । चख्षुष्पाइतिचख्षुः-पाः । चख्षुः । मे । पाहि । मयि । वसुः । स
य्यँद्वसुरितिसय्यँत्-वसुः । श्रोत्रपाइतिश्रोत्र-पाः । श्रोत्रम् । मे । पाहि । भूः । असि ।
श्रेष्ठः । रश्मीनाम् । प्राणपाइतिप्राण-पाः । प्राणमितिप्र-अनम् । मे । पाहि । धूः ।
असि । श्रेष्ठः । रश्मीनाम् । अपानपाइत्यपान-पाः । अपानमित्यप-अनम् । मे ।
पाहि । यः । नः । इन्द्रवायू इतीन्द्र-वायू । मित्रावरुणावितिमित्रा-वरुणौ । अश्वि
नौ । अभिदासतीत्यभि-दासति । भ्रातृव्यः । उत्पिपीतइत्युत्-पिपीते । शुभः । पती
इति । इदम् । अहम् । तम् । अधरम् । पादयामि । यथा । इन्द्र । अहम् । उत्त
मइत्युत्-तमः । चेतयानि ॥ [४३] रख्षस्वभ्रातृव्यस्त्रयोदशच ॥ ❀ ॥१०॥

प्रेति । सः । अग्ने । तव । ऊतिभिरित्यूति-भिः । सुवीराभिरितिसु-वीराभिः ।
तरति । वाजकर्मभिरितिवाजकर्म-भिः ॥ यस्य । त्वम् । सख्यम् । आविथ ॥ प्रेति ।
होत्रे । पूर्व्यम् । वचः । अग्नये । भरत । बृहत् ॥ विपामितिवि-पाम् । ज्योतीꣳषि ।
बिभ्रते । न । वेधसे ॥ अग्ने । त्री । ते । वाजिना । त्री । सधस्थेतिसध-स्था । तिस्रः ।
ते । जिह्वाः । ऋतजातेत्यृत-जात । पूर्वीः ॥ तिस्रः । उ । ते । तनुवः । देववाता
इतिदेव-वाताः । ताभिः । नः । पाहि । गिरः । अप्रयुच्छन्नित्यप्र-युच्छन् ॥ समिति ।
वाम् । कर्मणा । समिति । इषा । [४४] हिनोमि । इन्द्राविष्णू इतीन्द्रा-विष्णू ।
अपसः । पारे । अस्य ॥ जुषेथाम् । यज्ञम् । द्रविणम् । च । धत्तम् । अरिष्टैः । नः ।

पथिभिरितिपथि-भिः । पारयन्ता ॥ उभा । जिग्यथुः । न । परेति । जयेथेइति । न । परेति । जिग्ये । कतरः । चन । एनोः ॥ इन्द्रः । च । विष्णोइति । यत् । अपस्पृधेथाम् । त्रेधा । सहस्रम् । वीति । तत् । ऐरयेथाम् ॥ त्रीणि । आयूंषि । तव । जातवेदइतिजात-वेदः । तिस्रः । आजानीरित्या-जानीः । उषसः । ते । अग्ने ॥ ताभिः । देवानाम् । अवः । यक्षि । विद्वान् । अथ । [ ४५ ] भव । यजमानाय । शम् । योः ॥ अग्निः । त्रीणि । त्रिधातूनीतित्रि-धातूनि । एति । क्षेति । विदथा । कविः ॥ सः । त्रीन् । एकादशान् । इह ॥ यक्षत् । च । पिप्रयत् । च । नः । विप्रः । दूतः । परिष्कृतः ॥ नभन्ताम् । अन्यके । समे ॥ इन्द्राविष्णूइतीन्द्रा-विष्णू । दृंहिताः । शम्बरस्य । नव । पुरः । नवतिम् । च । श्नथिष्टम् ॥ शतम् । वर्चिनः । सहस्रम् । च । साकम् । हथः । अप्रति । असुरस्य । वीरान् ॥ उत । माता । महिषम् । अन्विति । अवेनत् । अमीइति । त्वा । जहति । पुत्र । देवाः ॥ अथ । अब्रवीत् । वृत्रम् । इन्द्रः । हनिष्यन् । सखे । विष्णोइति । वितरमितिवि-तरम् । वीति । क्रमस्व ॥ [ ४६ ] इषाऽर्थत्वात्रयोदशच ॥ ❋ ❋ ❋ ॥११॥

यो वैपवमानानान्त्रीणिपरिभू स्स्फ्यस्स्वस्तिर्भक्षेहिमहीनाम्पयोऽसिदेवसवितरेतत्तेश्येनायदैहोतोपयामगृहीतोऽसिवाक्षसत्प्रसोअग्नएकादश ॥ ११ ॥ यो वै स्फ्यस्स्वस्तिस्स्वधायैनमःप्रमुञ्चतिष्ठतीवषट् चत्वारिंशत ॥ ४६ ॥ यो वैपवमानानाव्विंक्रमस्व ॥ हरिः ओ (३) म् ॥

इति तृतीयकाण्डे द्वितीयः प्रश्नः ॥

## अथ तृतीयकाण्डे तृतीयः प्रश्नः ॥

हरिः ओ ( ४ ) म् ॥

अग्ने । तेजस्विन्न् । तेजस्वी । त्वम् । देवेषु । भूयाः । तेजस्वन्तम् । माम् । आयुष्मन्तम् । वर्चस्वन्तम् । मनुष्येषु । कुरु । दीक्षायै । च । त्वा । तपसः । च । तेजसे । जुहोमि । तेजोविदितितेजः-वित् । असि । तेजः । मा । मा । हासीत् । मा । अहम् । तेजः । हासिषम् । मा । माम् । तेजः । हासीत् । इन्द्र । ओजस्विन्न् ।

ओजस्वी । त्वम् । देवेषु । भूयाः । ओजस्वन्तम् । माम् । आयुष्मन्तम् । वर्चस्व
न्तम् । मनुष्येषु । कुरु । ब्रह्मणः । च । त्वा । क्षत्रस्य । च । [१] ओजसे । जु
होमि । ओजोविदित्योजः-वित् । असि । ओजः । मा । मा । हासीत् । मा । अ
हम् । ओजः । हासिषम् । मा । माम् । ओजः । हासीत् । सूर्य । भ्राजस्विन् ।
भ्राजस्वी । त्वम् । देवेषु । भूयाः । भ्राजस्वन्तम् । माम् । आयुष्मन्तम् । वर्चस्व
न्तम् । मनुष्येषु । कुरु । वायोः । च । त्वा । अपाम् । च । भ्राजसे । जुहोमि ।
सुवर्विदितिसुवः-वित् । असि । सुवः । मा । मा । हासीत् । मा । अहम् । सुवः ।
हासिषम् । मा । माम् । सुवः । हासीत् । मयि । मेधाम् । मयि । प्रजामितिप्र-जाम् ।
मयि । अग्निः । तेजः । दधातु । मयि । मेधाम् । मयि । प्रजामितिप्र-जाम् । मयि ।
इन्द्रः । इन्द्रियम् । दधातु । मयि । मेधाम् । मयि । प्रजामितिप्र-जाम् । मयि । सूर्यः ।
भ्राजः । दधातु ॥ [२] क्षत्रस्यंचमयित्रयोविꣳशतिश्च ॥ ❀ ॥१॥

वायुः । हिङ्कर्तेतिहिं-कर्ता । अग्निः । प्रस्तोतेतिप्र-स्तोता । प्रजापतिरितिप्रजा-
पतिः । साम । बृहस्पतिः । उद्गातेत्युत्-गाता । विश्वे । देवाः । उपगातारइत्युप-
गातारः । मरुतः । प्रतिहर्तारइतिप्रति-हर्तारः । इन्द्रः । निधनमितिनि-धनम् । ते ।
देवाः । प्राणभृतइतिप्राण-भृतः । प्राणमितिप्र-अनम् । मयि । दधतु । एतत् । वै ।
सर्वम् । अध्वर्युः । उपाकुर्वन्नित्युप-आकुर्वन् । उद्गातृभ्यइत्युद्गातृ-भ्यः । उपाकरोती
त्युप-आकरोति । ते । देवाः । प्राणभृतइतिप्राण-भृतः । प्राणमितिप्र-अनम् । मयि ।
दधतु । इति । आह । एतत् । एव । सर्वम् । आत्मन् । धत्ते । इडा । देवहूरितिदेव-
हूः । मनुः । यज्ञनीरितियज्ञ-नीः । बृहस्पतिः । उक्थामदानीत्युक्थ-मदानि । शꣳ
सिषत् । विश्वे । देवाः । [३] सूक्तवाचइतिसूक्त-वाचः । पृथिवि । मातः । मा ।
मा । हिꣳसीः । मधु । मनिष्ये । मधु । जनिष्ये । मधु । वक्ष्यामि । मधु । वदि
ष्यामि । मधुमतीमितिमधु-मतीम् । देवेभ्यः । वाचम् । उद्यासम् । शुश्रूषेण्याम् ।
मनुष्येभ्यः । तम् । मा । देवाः । अवन्तु । शोभायै । पितरः । अन्विति । मदन्तु ॥
[४] शꣳसिषद्विश्वेदेवाअष्टाविꣳशतिश्च ॥ ❀ ❀ ॥२॥

वसवः । त्वा । प्रेति । वृहन्तु । गायत्रेण । छन्दसा । अग्नेः । प्रियम् । पाथः । उपेति ।
इहि । रुद्राः । त्वा । प्रेति । वृहन्तु । त्रैष्टुभेन । छन्दसा । इन्द्रस्य । प्रियम् । पाथः । उपेति ।

इहि । आदित्याः । त्वा । प्रेति । वृहन्तु । जागतेन । छन्दसा । विश्वेषाम् । देवानाम् । प्रियम् । पार्थः । उपेति । इहि । मान्दासु । ते । शुक्र । शुक्रम् । एति । धूनोमि । भन्दनासु । कोतनासु । नूतनासु । रेशीषु । मेषीषु । वाशीषु । विश्वभृथ्स्विति विश्वभृत्-सु । माध्वीषु । ककुहासु । शक्वरीषु । [५] शुक्रासु । ते । शुक्र । शुक्रम् । एति । धूनोमि । शुक्रम् । ते । शुक्रेण । गृह्णामि । अह्नः । रूपेण । सूर्यस्य । रश्मिभिरिति रश्मि-भिः ॥ एति । अस्मिन्न् । उग्राः । अचुच्यवुः । दिवः । धाराः । असश्चत ॥ ककुहम् । रूपम् । वृषभस्य । रोचते । बृहत् । सोमः । सोमस्य । पुरोगाइतिपुरः-गाः । शुक्रः । शुक्रस्य । पुरोगाइतिपुरः-गाः ॥ यत् । ते । सोम । अदाभ्यम् । नाम । जागृवि । तस्मै । ते । सोम । सोमाय । स्वाहा । उशिक् । त्वम् । देव । सोम । गायत्रेण । छन्दसा । अग्नेः । [६] प्रियम् । पार्थः । अपीति । इहि । वशी । त्वम् । देव । सोम । त्रैष्टुभेन । छन्दसा । इन्द्रस्य । प्रियम् । पार्थः । अपीति । इहि । अस्मथ्सखेत्यस्मत्-सखा । त्वम् । देव । सोम । जागतेन । छन्दसा । विश्वेषाम् । देवानाम् । प्रियम् । पार्थः । अपीति । इहि । एति । नः । प्राणइतिप्र-अनः । एतु । परावतइतिपरा-वतः । एति । अन्तरिक्षात् । दिवः । परि ॥ आयुः । पृथिव्याः । अधीति । अमृतम् । असि । प्राणायेतिप्र-अनाय । त्वा ॥ इन्द्राग्नीइतीन्द्र-अग्नी । मे । वर्चः । कृणुताम् । वर्चः । सोमः । बृहस्पतिः ॥ वर्चः । मे । विश्वे । देवाः । वर्चः । मे । धत्तम् । अश्विना ॥ दधन्वे । वा । यत् । ईम् । अन्विति । वोचत् । ब्रह्माणि । वेः । उ । तत् ॥ परीति । विश्वानि । काव्या । नेमिः । चक्रम् । इव । अभवत् ॥ [७] शक्वरीष्वग्नेर्बृहस्पतिःपञ्चविंशतिश्च ॥ ❀ ❀ ॥२॥

एतत् । वै । अपाम् । नामधेयमितिनाम-धेयम् । गुह्यम् । यत् । आधावा इत्या-धावाः । मान्दासु । ते । शुक्र । शुक्रम् । एति । धूनोमि । इति । आह । अपाम् । एव । नामधेयेनेतिनाम-धेयेन । गुह्येन । दिवः । वृष्टिम् । अवेति । रुन्धे । शुक्रम् । ते । शुक्रेण । गृह्णामि । इति । आह । एतत् । वै । अह्नः । रूपम् । यत् । रात्रिः । सूर्यस्य । रश्मयः । वृष्ट्याः । ईशते । अह्नः । एव । रूपेण । सूर्यस्य । रश्मिभिरितिरश्मि-भिः । दिवः । वृष्टिम् । च्यावयति । एति । अस्मिन्न् । उग्राः । [८] अचुच्यवुः । इति । आह । यथायजुरितियथा-यजुः । एव । एतत् । ककुहम् । रूपम् ।

वृषभस्य । रोचते । बृहत् । इति । आह । एतत् । वै । अस्य । ककुहम् । रूपम् । यत् । वृष्टिः । रूपेण । एव । वृष्टिम् । अवेति । रुन्धे । यत् । ते । सोम । अदाभ्यम् । नाम । जागृवि । इति । आह । एषः । ह । वै । हविषा । हविः । यजति । यः । अदाभ्यम् । गृहीत्वा । सोमाय । जुहोति । परेति । वै । एतस्य । आयुः । प्राणइतिप्र-अनः । एति । [९] यः । अꣳशुम् । गृह्णाति । । एति । नः । प्राणइतिप्र-अनः। एतु । परावतइतिपरा-वतः । इति । आह । आयुः । एव । प्राणमितिप्र-अनम् । आत्मन् । धत्ते । अमृतम् । असि । प्राणायेतिप्र-अनाय । त्वा । इति । हिरण्यम् । अभि । वीति । अनिति । अमृतम् । वै । हिरण्यम् । आयुः । प्राणइतिप्र-अनः । अमृतेन । एव । आयुः । आत्मन् । धत्ते । शतमानमितिशत-मानम् । भवति । शतायुरिति शत-आयुः । पुरुषः । शतेन्द्रियइतिशत-इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति । अपः । उपेति । स्पृशति । भेषजम् । वै । आपः । भेषजम् । एव । कुरुते ॥ [१०] उग्राएत्यापस्त्रीणिच ॥ ❋ ❋ ❋ ॥ ४ ॥

वायुः । असि । प्राणइतिप्र-अनः । नाम । सवितुः । आधिपत्यइत्याधि-पत्ये । अपानमित्यप-अनम् । मे । दाः । चक्षुः । असि । श्रोत्रम् । नाम । धातुः । आधिपत्यइत्याधि-पत्ये । आयुः । मे । दाः । रूपम् । असि । वर्णः । नाम । बृहस्पतेः । आधिपत्यइत्याधि-पत्ये । प्रजामितिप्र-जाम् । मे । दाः । ऋतम् । असि । सत्यम् । नाम । इन्द्रस्य । आधिपत्यइत्याधि-पत्ये । क्षत्रम् । मे । दाः । भूतम् । असि । भव्यम् । नाम । पितृणाम् । आधिपत्यइत्याधि-पत्ये । अपाम् । ओषधीनाम् । गर्भम् । धाः । ऋतस्य । त्वा । व्योमनइतिवि-ओमने । ऋतस्य । [११] त्वा । विभूमनइतिवि-भूमने । ऋतस्य । त्वा । विधर्मणइतिवि-धर्मणे । ऋतस्य । त्वा । सत्याय । ऋतस्य । त्वा । ज्योतिषे । प्रजापतिरितिप्रजा-पतिः । विराजमितिवि-राजम् । अपश्यत् । तया । भूतम् । च । भव्यम् । च । असृजत । ताम् । ऋषिभ्यइत्यृषि-भ्यः । तिरः । अदधात् । ताम् । जमदग्निः । तपसा । अपश्यत् । तया । वै । सः । पृश्नीन् । कामान् । असृजत । तत् । पृश्नीनाम् । पृश्नित्वमितिपृश्नि-त्वम् । यत् । पृश्नयः । गृह्यन्ते । पृश्नीन् । एव । तैः । कामान् । यजमानः । अवेति । रुन्धे । वायुः । असि । प्राणइतिप्र-अनः । [१२] नाम । इति । आह । प्राणापानावित‍ि

प्राण-अपानौ । एव । अवेति । रुन्धे । चक्षुः । असि । श्रोत्रम् । नाम । इति । आह । आयुः । एव । अवेति । रुन्धे । रूपम् । असि । वर्णः । नाम । इति । आह । प्रजामितिप्र-जाम् । एव । अवेति । रुन्धे । ऋतम् । असि । सत्यम् । नाम । इति । आह । क्षत्रम् । एव । अवेति । रुन्धे । भूतम् । असि । भव्यम् । नाम । इति । आह । पशवः । वै । अपाम् । ओषधीनाम् । गर्भः । पशून् । एव । [१३] अवेति । रुन्धे । एतावत् । वै । पुरुषम् । परितः । तत् । एव । अवेति । रुन्धे । ऋतस्य । त्वा । व्योमनइतिवि-ओमने । इति । आह । इयम् । वै । ऋतस्य । व्योमेतिवि-ओम । इमाम् । एव । अभीति । जयति । ऋतस्य । त्वा । विभूमनइतिवि-भूमने । इति । आह । अन्तरिक्षम् । वै । ऋतस्य । विभूमेतिवि-भूम । अन्तरिक्षम् । एव । अभीति । जयति । ऋतस्य । त्वा । विधर्मणइतिवि-धर्मणे । इति । आह । द्यौः । वै । ऋतस्य । विधर्मेतिवि-धर्म । दिवम् । एव । अभीति । जयति । ऋतस्य । [१४] त्वा । सत्याय । इति । आह । दिशः । वै । ऋतस्य । सत्यम् । दिशः । एव । अभीति । जयति । ऋतस्य । त्वा । ज्योतिषे । इति । आह । सुवर्गइतिसुवः-गः । वै । लोकः । ऋतस्य । ज्योतिः । सुवर्गमितिसुवः-गम् । एव । लोकम् । अभीति । जयति । एतावन्तः । वै । देवलोकाइतिदेव-लोकाः । तान् । एव । अभीति । जयति । दश । समिति । पद्यन्ते । दशाक्षरेतिदश-अक्षरा । विराडितिवि-राट् । अन्नम् । विराडितिवि-राट् । विराजीतिवि-राजि । एव । अन्नाद्यइत्यन्न-अद्ये । प्रतीति । तिष्ठति ॥ [१५] व्योमनऋतस्य प्राणः पशूनेव विधर्म दिवमेवाभिजयत्यृतस्य षट्चत्वारिंशच्च ॥ ❀ ❀ ❀ ❀ ❀ ॥५॥

देवाः । वै । यत् । यज्ञेन । न । अवारुन्धतेत्यव-अरुन्धत । तत् । परैः । अवेति । अरुन्धत । तत् । पराणाम् । परत्वमितिपर-त्वम् । यत् । परे । गृह्यन्ते । यत् । एव । यज्ञेन । न । अवरुन्धइत्यव-रुन्धे । तस्य । अवरुध्याइत्यव-रुध्यै । यम् । प्रथमम् । गृह्णाति । इमम् । एव । तेन । लोकम् । अभीति । जयति । यम् । द्वितीयम् । अन्तरिक्षम् । तेन । यम् । तृतीयम् । अमुम् । एव । तेन । लोकम् । अभीति । जयति । यत् । एते । गृह्यन्ते । एषाम् । लोकानाम् । अभिजित्याइत्यभि-जित्यै । [१६] उत्तरेष्वित्युत्-तरेषु । अहस्स्वित्यहः-सु । अमुतः । अर्वाञ्चः । गृह्यन्ते । अ

भिजित्येत्यभि-जित्य । एव । इमान् । लोकान् । पुनः । इमम् । लोकम् । प्रत्यवरो हन्तीतिप्रति-अवरोहन्ति । यत् । पूर्वेषु । अहस्स्वित्यहः-सु । इतः । पराञ्चः । गृह्य न्ते । तस्मात् । इतः । पराञ्चः । इमे । लोकाः । यत् । उत्तरेष्वित्युत्-तरेषु । अहस्स्वि त्यहः-सु । अमुतः । अर्वाञ्चः । गृह्यन्ते । तस्मात् । अमुतः । अर्वाञ्चः । इमे । लो काः । तस्मात् । अयातयाम्नइत्ययात-याम्नः । लोकान् । मनुष्याः । उपेति । जी वन्ति । ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । कस्मात् । सत्यात् । अद्भ्यइत्यत्-भ्यः । ओषधयः । समिति । भवन्ति । ओषधयः । [१७] मनुष्याणाम् । अन्नम् । प्रजापतिमितिप्रजा-पतिम् । प्रजाइतिप्र-जाः । अनु । प्रेति । जायन्ते । इति । परान् । अन्विति । इति । ब्रूयात् । यत् । गृह्णाति । अद्भ्यइत्यत्-भ्यः । त्वा । ओषधीभ्य इत्योषधि-भ्यः । गृह्णामि । इति । तस्मात् । अद्भ्यइत्यत्-भ्यः । ओषधयः । समिति । भवन्ति । यत् । गृह्णाति । ओषधीभ्यइत्योषधि-भ्यः । त्वा । प्रजाभ्यइतिप्र-जाभ्यः । गृह्णामि । इति । तस्मात् । ओषधयः । मनुष्याणाम् । अन्नम् । यत् । गृह्णाति । प्र जाभ्यइतिप्र-जाभ्यः । त्वा । प्रजापतयइतिप्रजा-पतये । गृह्णामि । इति । तस्मात् । प्रजापतिमितिप्रजा-पतिम् । प्रजाइतिप्र-जाः । अनु । प्रेति । जायन्ते ॥ [१८] अ भिजित्यैभवन्त्योषधयोऽष्टाचत्वारिँ शच्च ॥ ❀ ❀ ❀ ॥६॥

प्रजापतिरितिप्रजा-पतिः । देवासुरानितिदेव-असुरान् । असृजत । तत् । अन्विति । यज्ञः । असृज्यत । यज्ञम् । छन्दाँसि । ते । विष्वञ्चः । वीति । अक्रा मन् । सः । असुरान् । अन्विति । यज्ञः । अपेति । अक्रामत् । यज्ञम् । छन्दाँसि । ते । देवाः । अमन्यन्त । अमीइति । वै । इदम् । अभूवन् । यत् । वयम् । स्मः । इति । ते । प्रजापतिमितिप्रजा-पतिम् । उपेति । अधावन् । सः । अब्रवीत् । प्रजा पतिरितिप्रजा-पतिः । छन्दसाम् । वीर्यम् । आदायेत्या-दाय । तत् । वः । प्रेति । दास्या मि । इति । सः । छन्दसाम् । वीर्यम् । [१९] आदायेत्या-दाय । तत् । एभ्यः । प्रेति । अयच्छत् । तत् । अन्विति । छन्दाँसि । अपेति । अक्रामन् । छन्दाँसि । यज्ञः । ततः । देवाः । अभवन् । परेति । असुराः । यः । एवम् । छन्दसाम् । वीर्यम् । वेद । एति । श्रावय । अस्तु । श्रौषट् । यज । ये । यजामहे । वषट्कारइतिवषट्-कारः । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । ब्रह्मवादिनइतिब्रह्म-वादिनः ।

वक्षन्ति । कस्मै । कम् । अध्वर्युः । एति । श्रावयति । इति । छन्दसाम् । वीर्याय । इति । ब्रूयात् । एतत् । वै । [२०] छन्दसाम् । वीर्यम् । एति । श्रावय । अस्तु । श्रौषट् । यज । ये । यजामहे । वषट्कारइतिवषट्-कारः । यः । एवम् । वेद । सर्वैरितिसर्वैः । एव । छन्दोभिरितिछन्दः-भिः । अर्चति । यत् । किम् । च । अर्चति । यत् । इन्द्रः । वृत्रम् । अहन्न् । अमेध्यम् । तत् । यत् । यतीन् । अपावपदित्यप-अवपत् । अमेध्यम् । तत् । अथ । कस्मात् । ऐन्द्रः । यज्ञः । एति । सꣳस्थातोरितिसं-स्थातोः । इति । आहुः । इन्द्रस्य । वै । एषा । यज्ञिया । तनूः । यत् । यज्ञः । ताम् । एव । तत् । यजन्ति । यः । एवम् । वेद । उपेति । एनम् । यज्ञः । नमति ॥ [२१] छन्दसाꣳवीर्यꣳवाएवतदष्टौच ॥ ❀ ❀ ॥७॥

आयुर्दाइत्यायुः-दाः । अग्ने । हविषः । जुषाणः । घृतप्रतीकइतिघृत-प्रतीकः । घृतयोनिरितिघृत-योनिः । एधि ॥ घृतम् । पीत्वा । मधु । चारु । गव्यम् । पिता । इव । पुत्रम् । अभीति । रक्षतात् । इमम् ॥ एति । वृश्च्यते । वै । एतत् । यजमानः । अग्निभ्यामित्यग्नि-भ्याम् । यत् । एनयोः । शृतङ्कृत्येतिशृतं-कृत्य । अथ । अन्यत्र । अवभृथमित्यव-भृथम् । अवैतीत्यव-एति । आयुर्दाइत्यायुः-दाः । अग्ने । हविषः । जुषाणः । इति । अवभृथमित्यव-भृथम् । अवैष्यन्नित्यव-एष्यन्न् । जुहुयात् । आहुत्येत्या-हुत्या । एव । एनौ । शमयति । न । आर्तिम् । एति । ऋच्छति । यजमानः । यत् । कुसीदम् । [२२] अप्रतीत्तमित्यप्रति-इत्तम् । मयि । येन । यमस्य । बलिना । चरामि ॥ इह । एव । सन्न् । निरवदयइतिनिः-अवदये । तत् । एतत् । तत् । अग्ने । अनृणः । भवामि ॥ विश्वलोपेतिविश्व-लोप । विश्वदावस्येतिविश्व-दावस्य । त्वा । आसन्न् । जुहोमि । अग्धादित्यग्ध-अत् । एकः । अहुतादित्यहुत-अत् । एकः । समसनादितिसमसन-अत् । एकः ॥ ते । नः । कृण्वन्तु । भेषजम् । सदः । सहः । वरेण्यम् ॥ अयम् । नः । नभसा । पुरः । सꣳस्फानइतिसं-स्फानः । अभीति । रक्षतु ॥ गृहाणाम् । असमर्त्याइत्यसं-ऋत्यै । बहवः । नः । गृहाः । असन्न् ॥ सः । त्वम् । नः । [२३] नभसः । पते । ऊर्जम् । नः । धेहि । भद्रया ॥ पुनः । नः । नष्टम् । एति । कृधि । पुनः । नः । रयिम् । एति । कृधि ॥ देव । सꣳस्फानेतिसं-स्फान । सहस्रपोषस्येतिसहस्र-पोषस्य । ईशिषे । सः । नः । रास्व । अज्यानिम् । रायः । पोषम् ।

ध्रुवा । सीद ॥ काण्डांत्काण्डादितिकाण्डात्-काण्डात् । प्ररोहन्तीतिप्र-रोहन्ती । परुषःपरुषइतिपरुषः-परुषः । परि ॥ एवा । नः । दूर्वे । प्रेति । तनु । सहस्रेण । शतेन । च ॥ या । शतेन । प्रतनोषीतिप्र-तनोषि । सहस्रेण । विरोहसीतिवि-रोहसि ॥ तस्याः । ते । देवि । इष्टके । विधेम । हविषा । वयम् ॥ अषाढा । असि । सहमाना । सहस्व । अरातीः । सहस्व । अरातीयतः । सहस्व । पृतनाः । सहस्व । पृतन्यतः ॥ सहस्रवीर्येतिसहस्र-वीर्या । [३७] असि । सा । मा । जिन्व ॥ मधु । वाताः । ऋतायतइत्यृत-यते । मधु । क्षरन्ति । सिन्धवः ॥ माध्वीः । नः । सन्तु । ओषधीः ॥ मधु । नक्तम् । उत । उषसि । मधुमदितिमधु-मत् । पार्थिवम् । रजः ॥ मधु । द्यौः । अस्तु । नः । पिता ॥ मधुमानितिमधु-मान् । नः । वनस्पतिः । मधुमानितिमधु-मान् । अस्तु । सूर्यः ॥ माध्वीः । गावः । भवन्तु । नः ॥ मही । द्यौः । पृथिवी । च । नः । इमम् । यज्ञम् । मिमिक्षताम् ॥ पिपृताम् । नः । भरीमभिरितिभरीम-भिः ॥ तत् । विष्णोः । परमम् । [३८] पदम् । सदा । पश्यन्ति । सूरयः ॥ दिवि । इव । चक्षुः । आततमित्या-ततम् ॥ ध्रुवा । असि । पृथिवि । सहस्व । पृतन्यतः ॥ स्यूता । देवेभिः । अमृतेन । एति । अगाः ॥ याः । ते । अग्ने । सूर्ये । रुचः । उद्यतइत्युत्-यतः । दिवम् । आतन्वन्तीत्या-तन्वन्ति । रश्मिभिरितिरश्मि-भिः ॥ ताभिः । सर्वाभिः । रुचे । जनाय । नः । कृधि ॥ याः । वः । देवाः । सूर्ये । रुचः । गोषु । अश्वेषु । याः । रुचः ॥ इन्द्राग्नीइतीन्द्र-अग्नी । ताभिः । सर्वाभिः । रुचम् । नः । धत्त । बृहस्पते ॥ विराडितिवि-राट् । [३९] ज्योतिः । अधारयत् । सम्राडितिसं-राट् । ज्योतिः । अधारयत् । स्वराडितिस्व-राट् । ज्योतिः । अधारयत् ॥ अग्ने । युक्ष्व । हि । ये । तव । अश्वासः । देव । साधवः ॥ अरम् । वहन्ति । आशवः ॥ युक्ष्व । हि । देवहूतमानितिदेव-हूतमान् । अश्वान् । अग्ने । रथीः । इव ॥ नीति । होता । पूर्व्यः । सदः ॥ द्रप्सः । चस्कन्द । पृथिवीम् । अन्विति । द्याम् । इमम् । च । योनिम् । अन्विति । यः । च । पूर्वः ॥ तृतीयम् । योनिम् । अन्विति । सञ्चरन्तमितिसं-चरन्तम् । द्रप्सम् । जुहोमि । अन्विति । सप्त । [४०] होत्राः ॥ अभूत् । इदम् । विश्वस्य । भुवनस्य । वाजिनम् । अग्नेः । वैश्वानरस्य । च ॥ अग्निः । ज्योतिषा । ज्योतिष्मान् । रुक्मः । वर्चसा । वर्चस्वान् ॥ ऋचे । त्वा । रुचे । त्वा । समिति । इत् । स्रवन्ति । सरितः । न ।

धेनाः ॥ अन्तः । हृदा । मनसा । पूयमानाः ॥ घृतस्य । धाराः । अभीति । चाक शीमि ॥ हिरण्ययः । वेतसः । मध्ये । आसाम् ॥ तस्मिन्न् । सुपर्णइतिसु-पर्णः । मधु कृदितिमधु-कृत् । कुलायी । भजन्न् । आस्ते । मधु । देवताभ्यः ॥ तस्य । आसते । हरयः । सप्त । तीरे । स्वधामितिस्व-धाम् । दुहानाः । अमृतस्य । धाराम् ॥[४१] प्रतिष्ठायैसहस्रवीर्यापरमव्विँराट् ध्सप्तती रेंचत्वारिंच ॥ ❀ ❀ ॥९॥

आदित्यम् । गर्भम् । पयसा । समञ्जन्नितिसं-अञ्जन्न् । सहस्रस्य । प्रतिमामिति प्रति-माम् । विश्वरूपमितिविश्व-रूपम् ॥ परीति । वृङ्ग्धि । हरसा । मा । अभीति । मृक्षः । शतायुषमितिशत-आयुषम् । कृणुहि । चीयमानः ॥ इमम् । मा । हिꣳसीः । द्विपादमितिद्वि-पादम् । पशू नाम् । सहस्राक्षेतिसहस्र-अक्ष । मेधे । एति । चीयमानः ॥ मयुम् । आरण्यम् । अन्विति । ते । दिशामि । तेन । चिन्वानः । तनुवः । नीति । सीद ॥ वातस्य । भ्राजिम् । वरुणस्य । नाभिम् । अश्वम् । जज्ञानम् । सरिरस्य । मध्ये ॥ शिशुम् । नदीनाम् । हरिम् । अद्रिबुध्नमित्यद्रि-बुध्नम् । अग्ने । मा । हिꣳसीः । [४२] परमे । व्योमन्नितिवि-ओमन्न् ॥ इमम् । मा । हिꣳसीः । एकशफमित्येक-शफम् । पशूनाम् । कनिक्रदम् । वाजिनम् । वाजिनेषु ॥ गौरम् । आरण्यम् । अन्विति । ते । दिशामि । तेन । चिन्वानः । तनुवः । नीति । सीद ॥ अजस्रम् । इन्दुम् । अरुषम् । भुरण्युम् । अग्निम् । ईडे । पूर्वचित्ताविति पूर्व-चित्तौ । नमोभिरितिनमः-भिः । सः । पर्वभिरितिपर्व-भिः । ऋतुशइत्यृतु-शः । कल्पमानः । गाम् । मा । हिꣳसीः । अदितिम् । विराजमितिवि-राजम् ॥ इमम् । समुद्रम् । शतधारमितिशत-धारम् ॥ उत्सम् । व्यच्यमानमितिवि-अच्यमानम् । भुवनस्य । मध्ये ॥ घृतम् । दुहानाम् । अदितिम् । जनाय । अग्ने । मा । [४३] हिꣳसीः । परमे । व्योमन्नितिवि-ओमन्न् ॥ गवयम् । आरण्यम् । अन्विति । ते । दिशामि । तेन । चिन्वानः । तनुवः । नीति । सीद ॥ वरूत्रिम् । त्वष्टुः । वरुणस्य । नाभिम् । अविम् । जज्ञानाम् । रजसः । परस्मात् ॥ महीम् । साहस्रीम् । असुरस्य । मायाम् । अग्ने । मा । हिꣳसीः । परमे । व्योमन्नितिवि-ओमन्न् ॥ इमाम् । ऊर्णायुम् । वरुणस्य । मायाम् । त्वचम् । पशूनाम् । द्विपदामितिद्वि-पदाम् । चतुष्पदामितिचतुः-पदाम् ॥ त्वष्टुः । प्रजानामितिप्र-जानाम् । प्रथमम् । जनित्रम् । अग्ने । मा । हिꣳसीः ।

76

परमे । व्योमन्निति वि-ओमन्न् ॥ उष्ट्रम् । आरण्यम् । अन्विति । [४४] ते । दिशामि । तेन । चिन्वानः । तनुवः । नीति । सीद ॥ यः । अग्निः । अग्नेः । तपसः । अधीति । जातः । शोचात् । पृथिव्याः । उत । वा । दिवः । परि ॥ येन । प्रजाइतिप्र-जाः । विश्वकर्मेतिविश्व-कर्मा । व्यानडितिवि-आनट् । तम् । अग्ने । हेडः । परीति । ते । वृणक्तु ॥ अजा । हि । अग्नेः । अजनिष्ट । गर्भात् । सा । वै । अपश्यत् । जनितारम् । अग्रे ॥ तया । रोहम् । आयन्न् । उपेति । मेध्यासः । तया । देवाः । देवताम् । अग्रे । आयन्न् ॥ शरभम् । आरण्यम् । अन्विति । ते । दिशामि । तेन । चिन्वानः । तनुवः । नीति । सीद ॥ [४५] अग्नेमाहि ँ सीरग्नेमोष्ट्रमारण्यमनुशरभन्नवंच ॥१०॥

आदित्यमिमन्द्विपादम्मयुँव्वातस्याश्वमिममेकशफङ्गौरमजंस्र ङ्कवयँव्वरूत्रिमविमिमामू र्णायुमुष्ट्रय्योअग्निश्शरभम् ॥ ❀ ❀ ❀ ❀

इन्द्राग्नीइतीन्द्र-अग्नी । रोचना । दिवः । परीति । वाजेषु । भूषथः ॥ तत् । वाम् । चेति । प्रेति । वीर्यम् ॥ श्नथत् । वृत्रम् । उत । सनोति । वाजम् । इन्द्रा । यः । अग्नीइति । सहुरीइतिस-हुरी । सपर्यात् ॥ इरज्यन्ता । वसव्यस्य । भूरेः । सहस्तमेतिसहः-तमा । सहसा । वाजयन्तेतिवाज-यन्ता ॥ प्रेति । चर्षणिभ्यइतिचर्षणि-भ्यः । पृतना । हवेषु । प्रेति । पृथिव्याः । रिरिचाथेइति । दिवः । च ॥ प्रेति । सिन्धुभ्यइतिसिन्धु-भ्यः । प्रेति । गिरिभ्यइतिगिरि-भ्यः । महित्वेतिमहि-त्वा । प्रेति । इन्द्राग्नीइतीन्द्र-अग्नी । विश्वा । भुवना । अतीति । अन्या ॥ मरुतः । यस्य । हि । [४६] क्षये । पाथ । दिवः । विमहसइतिवि-महसः ॥ सः । सुगोपातमइतिसुगोप-तमः । जनः ॥ यज्ञैः । वा । यज्ञवाहसइतियज्ञ-वाहसः । विप्रस्य । वा । मतीनाम् ॥ मरुतः । शृणुत । हवम् ॥ श्रियसे । कम् । भानुभिरितिभानु-भिः । समिति । मिमिक्षिरे । ते । रश्मिभिरितिरश्मि-भिः । ते । ऋक्वभिरित्यृक्व-भिः । सुखादयइतिसु-खादयः ॥ ते । वाशीमन्तइतिवाशि-मन्तः । इष्मिणः । अभीरवः । विद्रे । प्रियस्य । मारुतस्य । धाम्नः ॥ अवेति । ते । हेडः । उदिति । उत्तममित्युत्-तमम् ॥ कया । नः । चित्रः । एति । भुवत् । ऊती । सदावृधइतिसदा-वृधः । सखा ॥ कया । शचिष्ठया । वृता ॥ [४७] कः । अद्य । युङ्क्ते । धुरि । गाः । ऋतस्य । शिमीवतः । भामिनः । दुरहृणायूनितिदुः-हृणायून् ॥ आसन्निषूनित्यासन्न्-इषून् । हृत्स्वसइतिहृत्सु-असः ।

मयोभूरिति मयः-भूः । यः । एषाम् । भूत्याम् । ऋणधंत् । सः । जीवातु ॥ अग्नें । नयं । एति । देवानाम् । शम् । नः । भवन्तु । वाजेवाजइतिवाजें-वाजे ॥ अप्स्विति त्वंए-सु । अग्ने । सधिः । तव । सः । ओषधीः । अन्विति । रुध्यसे ॥ गर्भे । सन्न् । जायसे । पुनः ॥ वृषा । सोम । द्युमानितिद्यु-मान् । असि । वृषा । देव । वृषव्रतइति वृष-व्रतः ॥ वृषा । धर्माणि । दधिषे ॥ इमम् । मे । वरुण । तत् । त्वा । यामि । त्वम् । नः । अग्ने । सः । त्वम् । नः । अग्ने ॥[४८] हिवृतामएकादशच ॥ ❀ ॥११॥

विष्णोःक्रमोऽसिदिवस्पर्यन्नपतेऽपेतसमितय्याजातामानोहिंसीदभ्यंस्था द्ध्रुवास्यादित्यङ्गर्भमिन्द्राग्नीरोचनैकादश ॥ ११ ॥ विष्णोरस्मिन् हव्येतित्वाऽहन्धीति भिरू होत्रा अष्टाचत्वारिंशत् ॥ ४८ ॥ विष्णोःक्रमोऽसित्वन्नोअग्नेसत्वन्नोअग्ने ॥

हरिः ओ (३) म् ॥

इति चतुर्थकाण्डे द्वितीयः प्रश्नः ॥

## अथ चतुर्थकाण्डे तृतीयः प्रश्नः ॥

हरिः ओ (४) म् ॥

अपाम् । त्वा । एमन्न् । सादयामि । अपाम् । त्वा । ओद्मन्न् । सादयामि । अपाम् । त्वा । भस्मन्न् । सादयामि । अपाम् । त्वा । ज्योतिषि । सादयामि । अपाम् । त्वा । अयने । सादयामि । अर्णवे । सदने । सीद । समुद्रे । सदने । सीद । सलिले । सदने । सीद । अपाम् । क्षये । सीद । अपाम् । सधिषि । सीद । अपाम् । त्वा । सदने । सादयामि । अपाम् । त्वा । सधस्थइतिसध-स्थे । सादयामि । अपाम् । त्वा । पुरीषे । सादयामि । अपाम् । त्वा । योनौ । सादयामि । अपाम् । त्वा । पाथसि । सादयामि । गायत्री । छन्दः । त्रिष्टुप् । छन्दः । जगती । छन्दः । अनुष्टुबित्यनु-स्तुप् । छन्दः । पङ्क्तिः । छन्दः ॥ [१] योनौपञ्चदशच ॥ ❀ ॥१॥

अयम् । पुरः । भुवः । तस्य । प्राणइतिप्र-अनः । भौवायनः । वसन्तः । प्राणायनः । गायत्री । वासन्ती । गायत्रियै । गायत्रम् । गायत्रात् । उपांशुरित्युप-अंशुः । उपांशोरित्युप-अंशोः । त्रिवृदितित्रि-वृत् । त्रिवृतइतित्रि-वृतः । रथ

न्तरमितिरथं-तरम् । रथन्तरादितिरथं-तरात् । वसिष्ठः । ऋषिः । प्रजापतिगृहीतयेति प्रजापति-गृहीतया । त्वया । प्राणमितिप्र-अनम् । गृह्णामि । प्रजाभ्यइतिप्र-जाभ्यः । अयम् । दक्षिणा । विश्वकर्मेतिविश्व-कर्मा । तस्य । मनः । वैश्वकर्मणमितिवैश्व-कर्मणम् । ग्रीष्मः । मानसः । त्रिष्टुक् । ग्रैष्मी । त्रिष्टुभः । ऐडम् । ऐडात् । अन्तर्यामइत्यन्तः-यामः । अन्तर्यामादित्यन्तः-यामात् । पञ्चदशइतिपञ्च-दशः । पञ्चदशादितिपञ्च-दशात् । बृहत् । बृहतः । भरद्वाजः । ऋषिः । प्रजापतिगृहीतयेतिप्रजापति- गृहीतया । त्वया । मनः । [२] गृह्णामि । प्रजाभ्यइतिप्र-जाभ्यः । अयम् । पश्चात् । विश्वव्यचाइतिविश्व-व्यचाः । तस्य । चक्षुः । वैश्वव्यचसमितिवैश्व-व्यचसम् । वर्षाणि । चाक्षुषाणि । जगती । वार्षी । जगत्याः । ऋक्षमम् । ऋक्षमात् । शुक्रः । शुक्रात् । सप्तदशइतिसप्त-दशः । सप्तदशादितिसप्त-दशात् । वैरूपम् । वैरूपात् । विश्वामित्रइतिविश्व-मित्रः । ऋषिः । प्रजापतिगृहीतयेतिप्रजापति-गृहीतया । त्वया । चक्षुः । गृह्णामि । प्रजाभ्यइतिप्र-जाभ्यः । इदम् । उत्तरादित्युत्-तरात् । सुवः । तस्य । श्रोत्रम् । सौवम् । शरत् । श्रौत्री । अनुष्टुबित्यनु-स्तुप् । शारदी । अनुष्टुभइत्यनु-स्तुभः । स्वारम् । स्वारात् । मन्थी । मन्थिनः । एकविꣳशइत्येक-विꣳशः । एकविꣳशादित्येक-विꣳशात् । वैराजम् । वैराजात् । जमदग्निः । ऋषिः । प्रजापतिगृहीतयेतिप्रजापति-गृहीतया । [३] त्वया । श्रोत्रम् । गृह्णामि । प्रजाभ्यइतिप्र-जाभ्यः । इयम् । उपरि । मतिः । तस्यै । वाक् । माती । हेमन्तः । वाच्यायनः । पङ्क्तिः । हैमन्ती । पङ्क्त्यै । निधनवदितिनिधन-वत् । निधनवतइतिनिधन-वतः । आग्रयणः । आग्रयणात् । त्रिणवत्रयस्त्रिꣳशावितित्रिणव-त्रयस्त्रिꣳशौ । त्रिणवत्रयस्त्रिꣳशाभ्यामितित्रिणव-त्रयस्त्रिꣳशाभ्याम् । शाक्वररैवते इतिशाक्वर-रैवते । शाक्वररैवताभ्यामितिशाक्वर-रैवताभ्याम् । विश्वकर्मेतिविश्व-कर्मा । ऋषिः । प्रजापतिगृहीतयेतिप्रजापति-गृहीतया । त्वया । वाचम् । गृह्णामि । प्रजाभ्यइतिप्र-जाभ्यः ॥ [४] त्वयामनोजमदग्निरृषिःप्रजापतिगृहीतयात्रिꣳशच्च ॥ २ ॥

प्राची । दिशाम् । वसन्तः । ऋतूनाम् । अग्निः । देवता । ब्रह्म । द्रविणम् । त्रिवृदितित्रि-वृत् । स्तोमः । सः । उ । पञ्चदशवर्तनिरितिपञ्चदश-वर्तनिः । त्र्यवि

रितिंत्रि-अविः। वयः। कृतम्। अयानाम्। पुरोवातइतिपुरः-वातः। वातः। सानगः। ऋषिः। दक्षिणा। दिशाम्। ग्रीष्मः। ऋतूनाम्। इन्द्रः। देवता। क्षत्रम्। द्रविणम्। पञ्चदशइतिपञ्च-दशः। स्तोमः। सः। उ। सप्तदशवर्तनिरितिसप्तदश-वर्तनिः। दित्यवाडितिदित्य-वाट्। वयः। त्रेता। अयानाम्। दक्षिणाद्वातइतिदक्षिणात्-वातः। वातः। सनातनइतिसना-तनः। ऋषिः। प्रतीची। दिशाम्। वर्षाः। ऋतूनाम्। विश्वे। देवाः। देवता। विट्। [५] द्रविणम्। सप्तदशइतिसप्त-दशः। स्तोमः। सः। उ। एकविंशवर्तनिरित्येकविंश-वर्तनिः। त्रिवत्सइतित्रि-वत्सः। वयः। द्वापरः। अयानाम्। पश्चाद्वातइतिपश्चात्-वातः। वातः। अहभूनः। ऋषिः। उदीची। दिशाम्। शरत्। ऋतूनाम्। मित्रावरुणावितिमित्रा-वरुणौ। देवता। पुष्टम्। द्रविणम्। एकविंशइत्येक-विंशः। स्तोमः। सः। उ। त्रिणववर्तनिरितित्रिणव-वर्तनिः। तुर्यवाडितितुर्य-वाट्। वयः। आस्कन्दइत्या-स्कन्दः। अयानाम्। उत्तराद्वातइत्युत्तरात्-वातः। वातः। प्रत्नः। ऋषिः। ऊर्ध्वा। दिशाम्। हेमन्तशिशिरावितिहेमन्त-शिशिरौ। ऋतूनाम्। बृहस्पतिः। देवता। वर्चः। द्रविणम्। त्रिणवइतित्रि-नवः। स्तोमः। सः। उ। त्रयस्त्रिंशवर्तनिरितित्रयस्त्रिंश-वर्तनिः। पष्ठवादितिपष्ठ-वात्। वयः। अभिभूरित्यभि-भूः। अयानाम्। विष्वग्वातइतिविष्वक्-वातः। वातः। सुपर्णइतिसु-पर्णः। ऋषिः। पितरः। पितामहाः। परे। अवरे। ते। नः। पान्तु। ते। नः। अवन्तु। अस्मिन्न्। ब्रह्मन्न्। अस्मिन्न्। क्षत्रे। अस्याम्। आशिषीत्या-शिषि। अस्याम्। पुरोधायामितिपुरः-धायाम्। अस्मिन्न्। कर्मन्न्। अस्याम्। देवहूत्यामितिदेव-हूत्याम्॥ [६] विट् पष्ठवाद्योऽष्टाविंशतिश्च॥ ❀ ❀ ❀ ❀ ❀ ॥३॥

ध्रुवक्षितिरितिध्रुव-क्षितिः। ध्रुवयोनिरितिध्रुव-योनिः। ध्रुवा। असि। ध्रुवाम्। योनिम्। एति। सीद। साध्या॥ उख्यस्य। केतुम्। प्रथमम्। पुरस्तात्। अश्विना। अध्वर्यूइति। सादयताम्। इह। त्वा॥ स्वे। दक्षे। दक्षपितेतिदक्ष-पिता। इह। सीद। देवत्रेतिदेव-त्रा। पृथिवी। बृहती। रराणा॥ स्वासस्थेतिसु-आसस्था। तनुवा। समिति। विशस्व। पिता। इव। एधि। सूनवे। एति। सुशेवेतिसु-शेवा। अश्विना। अध्वर्यूइति। सादयताम्। इह। त्वा॥ कुलायिनी।

77

वसुमतीतिवसु-मती । वयोधाइतिवयः-धाः । रयिम् । नः । वर्द्ध । बहुलम् । सुवी
रमितिसु-वीरम् ॥ [७] अपेति । अमतिम् । दुर्मतिमितिदुः-मतिम् । बाधमाना ।
रायः । पोषे । यज्ञपतिमितियज्ञ-पतिम् । आभजन्तीत्या-भजन्ती । सुवः । धेहि ।
यजमानाय । पोषम् । अश्विना । अध्वर्यू इति । सादयताम् । इह । त्वा ॥ अग्नेः ।
पुरीषम् । असि । देवयानीतिदेव-यानी । ताम् । त्वा । विश्वे । अभीति । गृणन्तु ।
देवाः ॥ स्तोमपृष्ठेतिस्तोम-पृष्ठा । घृतवतीतिघृत-वती । इह । सीद । प्रजावदितिप्र
जा-वत् । अस्मेइति । द्रविणा । एति । यजस्व । अश्विना । अध्वर्यू इति । सादयताम् ।
इह । त्वा ॥ दिवः । मूर्धा । असि । पृथिव्याः । नाभिः । विष्टम्भनीतिवि-स्तम्भनी ।
दिशाम् । अधिपत्नीत्यधि-पत्नी । भुवनानाम् ॥ [८] ऊर्मिः । द्रप्सः । अपाम् ।
असि । विश्वकर्मेतिविश्व-कर्मा । ते । ऋषिः । अश्विना । अध्वर्यूइति । सादयताम् ।
इह । त्वा ॥ सजूरितिस-जूः । ऋतुभिरित्यृतु-भिः । सजूरितिस-जूः । विधाभिरिति
वि-धाभिः । सजूरितिस-जूः । वसुभिरितिवसु-भिः । सजूरितिस-जूः । रुद्रैः । स
जूरितिस-जूः । आदित्यैः । सजूरितिस-जूः । विश्वैः । देवैः । सजूरितिस-जूः ।
देवैः । सजूरितिस-जूः । देवैः । वयोनाधैरितिवयः-नाधैः । अग्नये । त्वा । वैश्वा
नराय । अश्विना । अध्वर्यू इति । सादयताम् । इह । त्वा ॥ प्राणमितिप्र-अनम् ।
मे । पाहि । अपानमित्यप-अनम् । मे । पाहि । व्यानमितिवि-अनम् । मे । पाहि ।
चक्षुः । मे । उर्व्या । वीति । भाहि । श्रोत्रम् । मे । श्लोकय । अपः । पिन्व । ओ
षधीः । जिन्व । द्विपादितिद्वि-पात् । पाहि । चतुष्पादितिचतुः-पात् । अव । दिवः ।
वृष्टिम् । एति । ईरय ॥ [९] सुवीरम्भुवनानामुर्व्यास्सप्तदशच ॥ ❀ ॥४॥

त्र्यविरितित्रि-अविः । वयः । त्रिष्टुप् । छन्दः । दित्यवाडितिदित्य-वाट् ।
वयः । विराडितिवि-राट् । छन्दः । पञ्चाविरितिपञ्च-अविः । वयः । गायत्री । छन्दः ।
त्रिवथ्सइतित्रि-वथ्सः । वयः । उष्णिहा । छन्दः । तुर्यवाडितितुर्य-वाट् । वयः । अ
नुष्टुबित्यनु-स्तुप् । छन्दः । पष्ठवादितिपष्ठ-वात् । वयः । बृहती । छन्दः । उक्षा ।
वयः । सतोबृहतीतिसतः-बृहती । छन्दः । ऋषभः । वयः । ककुत् । छन्दः । धेनुः ।
वयः । जगती । छन्दः । अनड्वान् । वयः । पङ्क्तिः । छन्दः । बस्तः । वयः । वि
वलमितिवि-वलम् । छन्दः । वृष्णिः । वयः । विशालमितिवि-शालम् । छन्दः ।

पुरुषः । वयः । तन्द्रम् । छन्दः । व्याघ्रः । वयः । अनाधृष्टमित्यना-धृष्टम् । छन्दः । सिꣳहः । वयः । छदिः । छन्दः । विष्टम्भइतिवि-स्तम्भः । वयः । अधिपतिरित्यधि-पतिः । छन्दः । क्षत्रम् । वयः । मयन्दम् । छन्दः । विश्वकर्मेतिविश्व-कर्मा । वयः । परमेष्ठी । छन्दः । मूर्धा । वयः । प्रजापतिरितिप्रजा-पतिः । छन्दः ॥ [१०] पुरुषोवयष्षड्विꣳशतिश्च ॥ ❀ ❀ ❀ ❀ ॥५॥

इन्द्राग्नीइतीन्द्र-अग्नी । अव्यथमानाम् । इष्टकाम् । दृꣳहतम् । युवम् ॥ पृष्ठेन । द्यावापृथिवीइतिद्यावा - पृथिवी । अन्तरिक्षम् । च । वीति । बाधताम् ॥ विश्वकर्मेतिविश्व-कर्मा । त्वा । सादयतु । अन्तरिक्षस्य । पृष्ठे । व्यचस्वतीम् । प्रथस्वतीम् । भास्वतीम् । सूरिमतीमितिसूरि-मतीम् । एति । या । द्याम् । भासि । एति । पृथिवीम् । एति । उरु । अन्तरिक्षम् । अन्तरिक्षम् । यच्छ । अन्तरिक्षम् । दृꣳह । अन्तरिक्षम् । मा । हिꣳसीः । विश्वस्मै । प्राणायेतिप्र-अनाय । अपानायेत्यप-अनाय । व्यानायेतिवि-अनाय । उदानायेत्युत्-अनाय । प्रतिष्ठायाइतिप्रति-स्थायै । चरित्राय । वायुः । त्वा । अभीति । पातु । मह्या । स्वस्त्या । छर्दिषा । [११] शन्तमेनेतिशं-तमेन । तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद ॥ राज्ञी । असि । प्राची । दिक् । विराडितिवि-राट् । असि । दक्षिणा । दिक् । सम्राडितिसं-राट् । असि । प्रतीची । दिक् । स्वराडितिस्व-राट् । असि । उदीची । दिक् । अधिपत्नीत्यधि-पत्नी । असि । बृहती । दिक् । आयुः । मे । पाहि । प्राणमितिप्र - अनम् । मे । पाहि । अपानमित्यप-अनम् । मे । पाहि । व्यानमितिवि-अनम् । मे । पाहि । चक्षुः । मे । पाहि । श्रोत्रम् । मे । पाहि । मनः । मे । जिन्व । वाचम् । मे । पिन्व । आत्मानम् । मे । पाहि । ज्योतिः । मे । यच्छ ॥ [१२] छर्दिषापिन्वषट्च ॥ ❀ ॥६॥

मा । छन्दः । प्रमेतिप्र-मा । छन्दः । प्रतिमेतिप्रति-मा । छन्दः । अस्रीविः । छन्दः । पङ्क्तिः । छन्दः । उष्णिहा । छन्दः । बृहती । छन्दः । अनुष्टुबित्यनु-स्तुप् । छन्दः । विराडितिवि-राट् । छन्दः । गायत्री । छन्दः । त्रिष्टुप् । छन्दः । जगती । छन्दः । पृथिवी । छन्दः । अन्तरिक्षम् । छन्दः । द्यौः । छन्दः । समाः । छन्दः । नक्षत्राणि । छन्दः । मनः । छन्दः । वाक् । छन्दः । कृषिः । छन्दः । हिरण्यम् । छन्दः । गौः । छन्दः । अजा । छन्दः । अश्वः । छन्दः ॥ अग्निः । देवता । [१३] वातः ।

देवता । मूर्यः । देवता । चन्द्रमाः । देवता । वसवः । देवता । रुद्राः । देवता । आदित्याः । देवता । विश्वे । देवाः । देवता । मरुतः । देवता । बृहस्पतिः । देवता । इन्द्रः । देवता । वरुणः । देवता । मूर्धा । असि । राट् । ध्रुवा । असि । धरुणा । यन्त्री । असि । यमित्री । इषे । त्वा । ऊर्जे । त्वा । कृष्यै । त्वा । क्षेमाय । त्वा । यन्त्री । राट् । ध्रुवा । असि । धरणी । धर्त्री । असि । धरित्री । आयुषे । त्वा । वर्चसे । त्वा । ओजसे । त्वा । बलाय । त्वा ॥ [१४] देवताऽऽयुषेत्वाषट्च ॥७॥

आशुः । त्रिवृदितित्रि-वृत् । भान्तः । पञ्चदशइतिपञ्च-दशः । व्योमेतिवि-ओम । सप्तदशइतिसप्त-दशः । प्रतूर्तिरितिप्र-तूर्तिः । अष्टादशइत्यष्टा-दशः । तपः । नवदशइतिनव-दशः । अभिवर्तइत्यभि-वर्तः । सविंशइतिस-विंशः । धरुणः । एकविंशइत्येक-विंशः । वर्चः । द्वाविंशः । सम्भरणइतिसं-भरणः । त्रयोविंशइतित्रयः-विंशः । योनिः । चतुर्विंशइतिचतुः-विंशः । गर्भाः । पञ्चविंशइतिपञ्च-विंशः । ओजः । त्रिणवइतित्रि-नवः । क्रतुः । एकत्रिंशइत्येक-त्रिंशः । प्रतिष्ठेतिप्रति-स्था । त्रयस्त्रिंशइतित्रयः-त्रिंशः । ब्रध्नस्य । विष्टपम् । चतुस्त्रिंशइतिचतुः-त्रिंशः । नाकः । षट्त्रिंशइतिषट्-त्रिंशः । विवर्तइतिवि-वर्तः । अष्टाचत्वारिंशइत्यष्टा-चत्वारिंशः । धर्त्रः । चतुष्टोमइतिचतुः-स्तोमः ॥ [१५] आशुस्सप्तविंशतिः ॥ ❀ ❀ ❀ ❀ ॥८॥

अग्नेः । भागः । असि । दीक्षायाः । आधिपत्यमित्याधि-पत्यम् । ब्रह्म । स्पृतम् । त्रिवृदितित्रि-वृत् । स्तोमः । इन्द्रस्य । भागः । असि । विष्णोः । आधिपत्यमित्याधि-पत्यम् । क्षत्रम् । स्पृतम् । पञ्चदशइतिपञ्च-दशः । स्तोमः । नृचक्षसामितिनृ-चक्षसाम् । भागः । असि । धातुः । आधिपत्यमित्याधि-पत्यम् । जनित्रम् । स्पृतम् । सप्तदशइतिसप्त-दशः । स्तोमः । मित्रस्य । भागः । असि । वरुणस्य । आधिपत्यमित्याधि-पत्यम् । दिवः । वृष्टिः । वाताः । स्पृताः । एकविंशइत्येक-विंशः । स्तोमः । अदित्यै । भागः । असि । पूष्णः । आधिपत्यमित्याधि-पत्यम् । ओजः । स्पृतम् । त्रिणवइतित्रि-नवः । स्तोमः । वसूनाम् । भागः । असि । [१६] रुद्राणाम् । आधिपत्यमित्याधि-पत्यम् । चतुष्पादितिचतुः-पात् । स्पृतम् । चतुर्विंशइतिचतुः-विंशः । स्तोमः । आदित्यानाम् । भागः । असि । मरुताम् । आधि

पत्यमित्याधि-पत्यम् । गर्भाः । स्पृताः । पञ्चविꣳशइतिपञ्च-विꣳशः । स्तोमः । देवस्य । सवितुः । भागः । असि । बृहस्पतेः । आधिपत्यमित्याधि-पत्यम् । समीचीः । दिशः । स्पृताः । चतुष्टोमइतिचतुः-स्तोमः । स्तोमः । यावानाम् । भागः । असि । अयावानाम् । आधिपत्यमित्याधि-पत्यम् । प्रजाइतिप्र-जाः । स्पृताः । चतुश्चत्वारिꣳशइतिचतुः-चत्वारिꣳशः । स्तोमः । ऋभूणाम् । भागः । असि । विश्वेषाम् । देवानाम् । आधिपत्यमित्याधि-पत्यम् । भूतम् । निशान्तमितिनि-शान्तम् । स्पृतम् । त्रयस्त्रिꣳशइतित्रयः-त्रिꣳशः । स्तोमः ॥ [१७] वसूनाम्भागोऽसिषट्चत्वारिꣳशच्च ॥ ❀ ❀ ❀ ❀ ❀ ॥९॥

एकया । अस्तुवत । प्रजाइतिप्र-जाः । अधीयन्त । प्रजापतिरितिप्रजा-पतिः । अधिपतिरित्यधि-पतिः । आसीत् । तिसृभिरितितिसृ-भिः । अस्तुवत । ब्रह्म । असृज्यत । ब्रह्मणः । पतिः । अधिपतिरित्यधि-पतिः । आसीत् । पञ्चभिरितिपञ्च-भिः । अस्तुवत । भूतानि । असृज्यन्त । भूतानाम् । पतिः । अधिपतिरित्यधि-पतिः । आसीत् । सप्तभिरितिसप्त-भिः । अस्तुवत । सप्तऋषयइतिसप्त-ऋषयः । असृज्यन्त । धाता । अधिपतिरित्यधि-पतिः । आसीत् । नवभिरितिनव-भिः । अस्तुवत । पितरः । असृज्यन्त । अदितिः । अधिपत्नीत्यधि-पत्नी । आसीत् । एकादशभिरित्येकादश-भिः । अस्तुवत । ऋतवः । असृज्यन्त । आर्तवः । अधिपतिरित्यधि-पतिः । आसीत् । त्रयोदशभिरितित्रयोदश-भिः । अस्तुवत । मासाः । असृज्यन्त । सँवथ्सरइतिसं-वथ्सरः । अधिपतिरित्यधि-पतिः । [१८] आसीत् । पञ्चदशभिरितिपञ्चदश-भिः । अस्तुवत । क्षत्रम् । असृज्यत । इन्द्रः । अधिपतिरित्यधि-पतिः । आसीत् । सप्तदशभिरितिसप्तदश-भिः । अस्तुवत । पशवः । असृज्यन्त । बृहस्पतिः । अधिपतिरित्यधि-पतिः । आसीत् । नवदशभिरितिनवदश-भिः । अस्तुवत । शूद्रार्याविति शूद्र-अर्यौ । असृज्येताम् । अहोरात्रेइत्यहः-रात्रे । अधिपत्नीइत्यधि-पत्नी । आस्ताम् । एकविꣳशत्येत्येक-विꣳशत्या । अस्तुवत । एकशफाइत्येक-शफाः । पशवः । असृज्यन्त । वरुणः । अधिपतिरित्यधि-पतिः । आसीत् । त्रयोविꣳशत्येतित्रयः-विꣳशत्या । अस्तुवत । क्षुद्राः । पशवः । असृज्यन्त । पूषा । अधिपतिरित्यधि-पतिः । आसीत् । पञ्चविꣳशत्येतिपञ्च-विꣳशत्या । अस्तुवत । आरण्याः ।

पशवः । असृज्यन्त । वायुः । अधिपतिरित्यधि-पतिः । आसीत् । सप्तविꣳ शत्येतिसप्त-विꣳ शत्या । अस्तुवत । द्यावापृथिवीइतिद्यावा-पृथिवी । वीति । [१९] एताम् । वसवः । रुद्राः । आदित्याः । अनु । वीति । आयन्न् । तेषाम् । आधिपत्यमित्याधि-पत्यम् । आसीत् । नवविꣳ शत्येतिनव-विꣳ शत्या । अस्तुवत । वनस्पतयः । असृज्यन्त । सोमः । अधिपतिरित्यधि-पतिः । आसीत् । एकत्रिꣳ शतेत्येक-त्रिꣳ शता । अस्तुवत । प्रजाइतिप्र-जाः । असृज्यन्त । यावानाम् । च । अयावानाम् । च । आधिपत्यमित्याधि-पत्यम् । आसीत् । त्रयस्त्रिꣳ शतेतित्रयः-त्रिꣳ शता । अस्तुवत । भूतानि । अशाम्यन्न् । प्रजापतिरितिप्रजा-पतिः । परमेष्ठी । अधिपतिरित्यधि-पतिः । आसीत् ॥ [२०] सꣳवथ्सरोऽधिपतिर्विपञ्चत्रिꣳ शच्च ॥ १० ॥

इयम् । एव । सा । या । प्रथमा । व्यौच्छदितिवि-औच्छत् । अन्तः । अस्याम् । चरति । प्रविष्टेतिप्र-विष्टा ॥ वधूः । जजान । नवगदितिनव-गत् । जनित्री । त्रयः । एनाम् । महिमानः । सचन्ते ॥ छन्दस्वतीइति । उषसा । पेपिशानेइति । समानम् । योनिम् । अन्विति । सञ्चरन्तीइतिसं-चरन्ती ॥ सूर्यपत्नीइतिसूर्य-पत्नी । वीति । चरतः । प्रजानतीइतिप्र-जानती । केतुम् । कृण्वानेइति । अजरेइति । भूरिरेतसेतिभूरि-रेतसा ॥ ऋतस्य । पन्थाम् । अन्विति । तिस्रः । एति । अगुः । त्रयः । घर्मासः । अन्विति । ज्योतिषा । एति । अगुः ॥ प्रजामितिप्र-जाम् । एका । रक्षति । ऊर्जम् । एका । [२१] व्रतम् । एका । रक्षति । देवयूनामितिदेव-यूनाम् ॥ चतुष्टोमइतिचतुः-स्तोमः । अभवत् । या । तुरीया । यज्ञस्य । पक्षौ । ऋषयः । भवन्ती ॥ गायत्रीम् । त्रिष्टुभम् । जगतीम् । अनुष्टुभमित्यनु-स्तुभम् । बृहत् । अर्कम् । युञ्जानाः । सुवः । एति । अभरन्न् । इदम् ॥ पञ्चभिरितिपञ्च-भिः । धाता । वीति । दधौ । इदम् । यत् । तासाम् । स्वसृः । अजनयत् । पञ्चपञ्चेतिपञ्च-पञ्च ॥ तासाम् । उ । यन्ति । प्रयवेणेतिप्र-यवेन । पञ्च । नाना । रूपाणि । क्रतवः । वसानाः ॥ त्रिꣳ शत् । स्वसारः । उपेति । यन्ति । निष्कृतमितिनिः-कृतम् । समानम् । केतुम् । प्रतिमुञ्चमानाइतिप्रति-मुञ्चमानाः ॥ [२२] ऋतून् । तन्वते । कवयः । प्रजानतीरितिप्र-जानतीः । मध्येछन्दसइतिमध्ये-छन्दसः । परीति । यन्ति । भास्वतीः ॥ ज्योतिष्मती । प्रतीति । मुञ्चते । नभः । रात्री । देवी । सूर्यस्य । व्रतानि ॥ वीति ।

पश्यन्ति । पशवः । जायमानाः । नानारूपाइतिनाना-रूपाः । मातुः । अस्याः ।
उपस्थइत्युप-स्थे ॥ एकाष्टकेत्येक-अष्टका । तपसा । तप्यमाना । जजान । गर्भम् ।
महिमानम् । इन्द्रम् ॥ तेन । दस्यून् । वीति । असहन्त । देवाः । हन्ता । असुरा
णाम् । अभवत् । शचीभिरितिशचि-भिः ॥ अनानुजामित्यनानु-जाम् । अनुजा
मित्यनु-जाम् । माम् । अकर्त । सत्यम् । वदन्ती । अन्विति । इच्छे । एतत् ॥ भू
यासम् । [२३] अस्य । सुमतावितिसु-मतौ । यथा । यूयम् । अन्या । वः । अ
न्याम् । अतीति । मा । प्रेति । युक्त ॥ अभूत् । मम । सुमतावितिसु-मतौ । विश्व
वेदाइतिविश्व-वेदाः । आष्ट । प्रतिष्ठामितिप्रति-स्थाम् । अविदत् । हि । गाधम् ॥ भू
यासम् । अस्य । सुमतावितिसु-मतौ । यथा । यूयम् । अन्या । वः । अन्याम् । अतीति ।
मा । प्रेति । युक्त ॥ पञ्च । व्युष्टीरितिवि-उष्टीः । अन्विति । पञ्च । दोहाः । गाम् ।
पञ्चनाम्नीमितिपञ्च-नाम्नीम् । ऋतवः । अन्विति । पञ्च ॥ पञ्च । दिशः । पञ्चद
शेनेतिपञ्च-दशेन । क्लृप्ताः । समानमूर्ध्नीरितिसमान-मूर्ध्नीः । अभीति । लोकम् ।
एकम् ॥ [२४] ऋतस्य । गर्भः । प्रथमा । व्यूषुषीतिवि-ऊषुषी । अपाम् । एका ।
महिमानम् । बिभर्ति ॥ सूर्यस्य । एका । चरति । निष्कृतेष्वितिनिः-कृतेषु । घर्म
स्य । एका । सविता । एकाम् । नीति । यच्छति ॥ या । प्रथमा । व्यौच्छदितिवि-
औच्छत् । सा । धेनुः । अभवत् । यमे ॥ सा । नः । पयस्वती । धुक्ष्व । उत्तरामुत्त
रामित्युत्तरां-उत्तराम् । समाम् ॥ शुक्रऋषभेतिशुक्र-ऋषभा । नभसा । ज्योतिषा ।
एति । अगात् । विश्वरूपेतिविश्व-रूपा । शबलीः । अग्निकेतुरित्यग्नि-केतुः ॥ समा
नम् । अर्थम् । स्वपस्यमानेतिसु-अपस्यमाना । बिभ्रती । जराम् । अजरे । उषः ।
एति । अगाः ॥ ऋतूनाम् । पत्नी । प्रथमा । इयम् । एति । अगात् । अह्नाम् ।
नेत्री । जनित्री । प्रजानामितिप्र-जानाम् ॥ एका । सती । बहुधेतिबहु-धा ।
उषः । वीति । उच्छसि । अजीर्णा । त्वम् । जरयसि । सर्वम् । अन्यत् ॥ [२५]
ऊर्जमेकाप्रतिमुञ्चमानाभूयासमेकम्पत्न्येकान्नविंशतिश्च ॥ ❁ ॥ ११ ॥

अग्ने । जातान् । प्रेति । नुद । नः । सपत्नान् । प्रतीति । अजातान् । जात
वेदइतिजात-वेदः । नुदस्व ॥ अस्मेइति । दीदिहि । सुमनाइतिसु-मनाः । अहेडन् ।
तव । स्याम् । शर्मन् । त्रिवरूथइतित्रि-वरूथः । उद्भिदित्युत्-भित् ॥ सहसा ।

जातान् । प्रेति । नुद । नः । सपत्नान् । प्रतीति । अजातान् । जातवेदइतिजात-वेदः । नुदस्व ॥ अधीति । नः । ब्रूहि । सुमनस्यमानइतिसु-मनस्यमानः । वयम् । स्याम । प्रेति । नुद । नः । सपत्नान् ॥ चतुश्चत्वारिंशइतिचतुः-चत्वारिंशः । स्तोमः । वर्चः । द्रविणम् । षोडशः । स्तोमः । ओजः । द्रविणम् । पृथिव्याः । पुरीषम् । असि । [२६] अप्सः । नाम ॥ एवः । छन्दः । वरिवः । छन्दः । शम्भूरिति शं-भूः । छन्दः । परिभूरितिपरि-भूः । छन्दः । आच्छत् । छन्दः । मनः । छन्दः । व्यचः । छन्दः । सिन्धुः । छन्दः । समुद्रम् । छन्दः । सलिलम् । छन्दः । सय्यँदिति सं-यत् । छन्दः । वियदितिवि-यत् । छन्दः । बृहत् । छन्दः । रथन्तरमितिरथं-तरम् । छन्दः । निकायइतिनि-कायः । छन्दः । विवधइतिवि-वधः । छन्दः । गिरः । छन्दः । भ्रजः । छन्दः । सष्टुबितिस-स्तुप् । छन्दः । अनुष्टुबित्यनु-स्तुप् । छन्दः । ककुत् । छन्दः । त्रिककुदितित्रि-ककुत् । छन्दः । काव्यम् । छन्दः । अङ्कुपम् । छन्दः । [२७] पदपङ्क्तिरितिपद-पङ्क्तिः । छन्दः । अक्षरपङ्क्तिरित्यक्षर-पङ्क्तिः । छन्दः । विष्टारपङ्क्तिरितिविष्टार-पङ्क्तिः । छन्दः । क्षुरः । भृज्वान् । छन्दः । प्रच्छत् । छन्दः । पक्षः । छन्दः । एवः । छन्दः । वरिवः । छन्दः । वयः । छन्दः । वयस्कृदितिवयः-कृत् । छन्दः । विशालमितिवि-शालम् । छन्दः । विष्पर्द्धाइतिवि-स्पर्द्धाः । छन्दः । छदिः । छन्दः । दूरोहणमितिदुः-रोहणम् । छन्दः । तन्द्रम् । छन्दः । अङ्काङ्कम् । छन्दः ॥ [२८] अस्यङ्कुपच्छन्दस्त्रयस्त्रिंशच्च ॥ ❁ ॥१२॥

अग्निः । वृत्राणि । जङ्घनत् । द्रविणस्युः । विपन्ययेतिवि-पन्यया ॥ समिद्ध इतिसं-इद्धः । शुक्रः । आहुतइत्या-हुतः ॥ त्वम् । सोम । असि । सत्पतिरितिसत्-पतिः । त्वम् । राजा । उत । वृत्रहेतिवृत्र-हा ॥ त्वम् । भद्रः । असि । क्रतुः ॥ भद्रा । ते । अग्ने । स्वनीकेतिसु-अनीक । सन्दृगितिसं-दृक् । घोरस्य । सतः । विषुणस्य । चारुः ॥ न । यत् । ते । शोचिः । तमसा । वरन्त । न । ध्वस्मानः । तनुवि । रेपः । एति । धुः ॥ भद्रम् । ते । अग्ने । सहसिन्न् । अनीकम् । उपाके । एति । रोचते । सूर्यस्य ॥ [२९] रुशत् । दृशे । ददृशे । नक्तया । चित् । अरूक्षितम् । दृशे । एति । रूपे । अन्नम् ॥ सः । एना । अनीकेन । सुविदत्रइतिसु-

विदत्रः । अस्मेइति । यष्टा । देवान् । आयजिष्ठइत्या-यजिष्ठः । स्वस्ति ॥ अदब्धः । गोपाइतिगो-पाः । उत । नः । परस्पाइतिपरः-पाः । अग्ने । द्युमदितिद्यु-मत् । उत । रेवत् । दिदीहि ॥ स्वस्ति । नः । दिवः । अग्ने । पृथिव्याः । विश्वायुरितिविश्व-आयुः । धेहि । यजथाय । देव ॥ यत् । सीमहि । दिविजातेतिदिवि-जात । प्रशस्तमितिप्र-शस्तम् । तत् । अस्मासु । द्रविणम् । धेहि । चित्रम् ॥ यथा । होतः । मनुषः । [३०] देवतातेतिदेव-ताता । यज्ञेभिः । सूनोइति । सहसः । यजासि ॥ एव । नः । अद्य । समना । समानान् । उशन् । अग्ने । उशतः । यक्षि । देवान् ॥ अग्निम् । ईडे । पुरोहितमितिपुरः-हितम् । यज्ञस्य । देवम् । ऋत्विजम् ॥ होतारम् । रत्नधातममितिरत्न-धातमम् ॥ वृषा । सोम । द्युमानितिद्यु-मान् । असि । वृषा । देव । वृषव्रतइतिवृष-व्रतः ॥ वृषा । धर्माणि । दधिषे ॥ सान्तपनाइतिसां-तपनाः । इदम् । हविः । मरुतः । तत् । जुजुष्टन ॥ युष्माक । ऊती । रिशादसइतिरिश-अदसः ॥ यः । नः । मर्तः । वसवः । दुर्हृणायुरितिदुः-हृणायुः । तिरः । [illegible]नं । मरुतः । [३१] जिघांसात् ॥ द्रुहः । पाशम् । प्रतीति । सः । मुचीष्ट । तपिष्ठेन । तपसा । हन्तन । तम् ॥ सँवथ्सरीणाइतिसं-वथ्सरीणाः । मरुतः । स्वर्काइतिसु-अर्काः । उरुक्षयाइत्युरु-क्षयाः । सगणाइतिस-गणाः । मानुषेषु ॥ ते । अस्मत् । पाशान् । प्रेति । मुञ्चन्तु । अꣳहसः । सान्तपनाइतिसां-तपनाः । मदिराः । मादयिष्णवः ॥ पिप्रीहि । देवान् । उशतः । यविष्ठ । विद्वान् । ऋतून् । ऋतुपतइत्यृतु-पते । यज । इह ॥ ये । दैव्याः । ऋत्विजः । तेभिः । अग्ने । त्वम् । होतॄणाम् । असि । आयजिष्ठइत्या-यजिष्ठः ॥ अग्ने । यत् । अद्य । विशः । अध्वरस्य । होतः । पावक । [३२] शोचे । वेः । त्वम् । हि । यज्वा ॥ ऋता । यजासि । महिना । वीति । यत् । भूः । हव्या । वह । यविष्ठ । या । ते । अद्य ॥ अग्निना । रयिम् । अश्नवत् । पोषम् । एव । दिवेदिवइतिदिवे-दिवे ॥ यशसम् । वीरवत्तममितिवीरवत्-तमम् ॥ गयस्फानइतिगय-स्फानः । अमीवहेत्यमीव-हा । वसुविदितिवसु-वित् । पुष्टिवर्द्धनइतिपुष्टि-वर्द्धनः ॥ सुमित्रइतिसु-मित्रः । सोम । नः । भव ॥ गृहमेधासइतिगृह-मेधासः । एति । गत । मरुतः । मा । अपेति । भूतन ॥ प्रमुञ्चन्तइतिप्र-मुञ्चन्तः । नः । अꣳहसः ॥ पूर्वीभिः । हि । ददाशिम । शरद्भिरितिशरत्-भिः ।

मरुतः । वयम् ॥ महोभिरितिमहः-भिः । [३३] चर्षणीनाम् ॥ प्रेति । बुध्नियां । ईरते । वः । महांसि । प्रेति । नामानि । प्रयज्यवइतिप्र-यज्यवः । तिरध्वम् ॥ सहस्रियम् । दम्यम् । भागम् । एतम् । गृहमेधीयमितिगृह-मेधीयम् । मरुतः । जुषध्वम् ॥ उपेति । यम् । एति । युवतिः । सुदक्षमितिसु-दक्षम् । दोषा । वस्तोः । हविष्मती । घृताची ॥ उपेति । स्वा । एनम् । अरमतिः । वसूयुरितिवसु-युः ॥ इमोइति । अग्ने । वीततमानीतिवीत-तमानि । हव्या । अजस्रः । वक्षि । देवतातिमितिदेव-तातिम् । अच्छ ॥ प्रतीति । नः । ईम् । सुरभीणि । वियन्तु ॥ क्रीडम् । वः । शर्द्धः । मारुतम् । अनर्वाणम् । रथेशुभमितिरथे-शुभम् ॥ [३४] कण्वाः । अभि । प्रेति । गायत ॥ अत्यासः । न । ये । मरुतः । स्वञ्चः । यक्षदृशइतियक्ष-दृशः । न । शुभयन्त । मर्याः ॥ ते । हर्म्येष्ठाइतिहर्म्ये-स्थाः । शिशवः । न । शुभ्राः । वत्सासः । न । प्रक्रीडिनइतिप्र-क्रीडिनः । पयोधाइतिपयः-धाः ॥ प्रेति । एषाम् । अज्मेषु । विथुरा । इव । रेजते । भूमिः । यामेषु । यत् । ह । युञ्जते । शुभे ॥ ते । क्रीडयः । धुनयः । भ्राजदृष्टयइतिभ्राजत्-ऋष्टयः । स्वयम् । महित्वमितिमहि-त्वम् । पनयन्त । धूतयः ॥ उपह्वरेष्वित्युप-ह्वरेषु । यत् । अचिध्वम् । ययिम् । वयः । इव । मरुतः । केन । [३५] चित् । पथा ॥ श्चोतन्ति । कोशाः । उपेति । वः । रथेषु । एति । घृतम् । उक्षत । मधुवर्णमितिमधु-वर्णम् । अर्चते ॥ अग्निमग्निमित्यग्निम्-अग्निम् । हवीमभिरितिहवीम-भिः । सदा । हवन्त । विश्पतिम् ॥ हव्यवाहमितिहव्य-वाहम् । पुरुप्रियमितिपुरु-प्रियम् ॥ तम् । हि । शश्वन्तः । ईडते । स्रुचा । देवम् । घृतश्चुतेतिघृत-श्चुता ॥ अग्निम् । हव्याय । वोढवे ॥ इन्द्राग्नीइतीन्द्र-अग्नी । रोचना । दिवः । श्नथत् । वृत्रम् । इन्द्रम् । वः । विश्वतः । परीति । इन्द्रम् । नरः । विश्वकर्मन्नितिविश्व-कर्मन्न् । हविषा । वावृधानः । विश्वकर्मन्नितिविश्व-कर्मन्न् । हविषा । वर्द्धनेन ॥ [३६] सूर्यस्यमनुषोमरुतःपावकमहोभीरथेशुभङ्केनषट्चत्वारिंशच्च ॥ ❋ ❋ ❋ ❋ ❋ ॥ १३ ॥

अपान्त्वेमन्नयम्पुरोभुवःप्राचीध्रुवक्षितिस्त्र्यविरिन्द्राग्नीमाछन्दआशुस्त्रिवृदग्नेर्भागोऽस्येकयेयमेवसायाऽग्नेजातानमिर्वृत्राणित्वयोदश ॥ ❋ ॥१३॥

अपान्त्वेन्द्राग्नीइयमेवदेवताताषद् त्रिꣳशत् ॥३६॥ अपान्त्वेमन् हविषावर्द्धनेन ॥

हरिः ओ (३) म् ॥

इति चतुर्थकाण्डे तृतीयः प्रश्नः ॥

अथ चतुर्थकाण्डे चतुर्थः प्रश्नः ॥

हरिः ओ (४) म् ॥

रश्मिः । असि । क्षयाय । त्वा । क्षयम् । जिन्व । प्रेतिरितिप्र-इतिः । असि । धर्माय । त्वा । धर्मम् । जिन्व । अन्वितिरित्यनु-इतिः । असि । दिवे । त्वा । दिवम् । जिन्व । सन्धिरितिसं-धिः । असि । अन्तरिक्षाय । त्वा । अन्तरिक्षम् । जिन्व । प्रतिधिरितिप्रति-धिः । असि । पृथिव्यै । त्वा । पृथिवीम् । जिन्व । विष्टम्भइतिवि-स्तम्भः । असि । वृष्ट्यै । त्वा । वृष्टिम् । जिन्व । प्रवेतिप्र-वा । असि । अह्ने । त्वा । अहः । जिन्व । अनुवेत्यनु-वा । असि । रात्रियै । त्वा । रात्रिम् । जिन्व । उशिक् । असि । [१] वसुभ्यइतिवसु-भ्यः । त्वा । वसून् । जिन्व । प्रकेतइतिप्र-केतः । असि । रुद्रेभ्यः । त्वा । रुद्रान् । जिन्व । सुदीतिरितिसु-दीतिः । असि । आदित्येभ्यः । त्वा । आदित्यान् । जिन्व । ओजः । असि । पितृभ्यइतिपितृ-भ्यः । त्वा । पितॄन् । जिन्व । तन्तुः । असि । प्रजाभ्यइतिप्र-जाभ्यः । त्वा । प्रजाइतिप्र-जाः । जिन्व । पृतनाषाट् । असि । पशुभ्यइतिपशु-भ्यः । त्वा । पशून् । जिन्व । रेवत् । असि । ओषधीभ्यइत्योषधि-भ्यः । त्वा । ओषधीः । जिन्व । अभिजिदित्यभि-जित् । असि । युक्तग्रावेतियुक्त-ग्रावा । इन्द्राय । त्वा । इन्द्रम् । जिन्व । अधिपतिरित्यधि-पतिः । असि । प्राणायेतिप्र-अनाय । [२] त्वा । प्राणमितिप्र-अनम् । जिन्व । यन्ता । असि । अपानायेत्यप-अनाय । त्वा । अपानमित्यप-अनम् । जिन्व । सꣳसर्पइतिसं-सर्पः । असि । चक्षुषे । त्वा । चक्षुः । जिन्व । वयोधाइतिवयः-धाः । असि । श्रोत्राय । त्वा । श्रोत्रम् । जिन्व । त्रिवृदितित्रि-वृत् । असि । प्रवृदितिप्र-वृत् । असि । सवृँदितिसं-वृत् । असि । विवृदितिवि-वृत् । असि । सꣳरोहइतिसं-रोहः । असि । नीरोहइतिनिः रोहः । असि । प्ररोहइतिप्र-रोहः । असि । अनुरोहइत्यनु-रोहः । असि । वसुकः । असि । वेषश्रिरितिवेष-श्रिः । असि । वस्यष्टिः । असि ॥ [३] उशिगसिप्राणायत्रिचत्वारिꣳशच्च ॥ ❋ ❋ ॥ १ ॥

राज्ञी । असि । प्राची । दिक् । वसवः । ते । देवाः । अधिपतयइत्यधि-पतयः । अग्निः । हेतीनाम् । प्रतिधर्तेतिप्रति-धर्ता । त्रिवृदितित्रि-वृत् । त्वा । स्तोमः । पृथिव्याम् । श्रयतु । आज्यम् । उक्थम् । अव्यथयत् । स्तभ्नातु । रथन्तरमितिरथं-तरम् । साम । प्रतिष्ठित्याइतिप्रति-स्थित्यै । विराडितिवि-राट् । असि । दक्षिणा । दिक् । रुद्राः । ते । देवाः । अधिपतयइत्यधि-पतयः । इन्द्रः । हेतीनाम् । प्रतिधर्तेतिप्रति-धर्ता । पञ्चदशइतिपञ्च-दशः । त्वा । स्तोमः । पृथिव्याम् । श्रयतु । प्रउगम् । उक्थम् । अव्यथयत् । स्तभ्नातु । बृहत् । साम । प्रतिष्ठित्याइतिप्रति-स्थित्यै । सम्राडितिसं-राट् । असि । प्रतीची । दिक् । [ ४ ] आदित्याः । ते । देवाः । अधिपतयइत्यधि-पतयः । सोमः । हेतीनाम् । प्रतिधर्तेतिप्रति-धर्ता । सप्तदशइतिसप्त-दशः । त्वा । स्तोमः । पृथिव्याम् । श्रयतु । मरुत्वतीयम् । उक्थम् । अव्यथयत् । स्तभ्नातु । वैरूपम् । साम । प्रतिष्ठित्याइतिप्रति-स्थित्यै । स्वराडितिस्व-राट् । असि । उदीची । दिक् । विश्वे । ते । देवाः । अधिपतयइत्यधि-पतयः । वरुणः । हेतीनाम् । प्रतिधर्तेतिप्रति-धर्ता । एकविꣳशइत्येक-विꣳशः । त्वा । स्तोमः । पृथिव्याम् । श्रयतु । निष्केवल्यम् । उक्थम् । अव्यथयत् । स्तभ्नातु । वैराजम् । साम । प्रतिष्ठित्याइति प्रति-स्थित्यै । अधिपत्नीत्यधि-पत्नी । असि । बृहती । दिक् । मरुतः । ते । देवाः । अधिपतयइत्यधि-पतयः । [५] बृहस्पतिः । हेतीनाम् । प्रतिधर्तेतिप्रति-धर्ता । त्रिणवत्रयस्त्रिꣳशावितित्रिणव-त्रयस्त्रिꣳशौ । त्वा । स्तोमौ । पृथिव्याम् । श्रयताम् । वैश्वदेवाग्निमारुतेइतिवैश्वदेव-आग्निमारुते । उक्थेइति । अव्यथयन्तीइति । स्तभ्नीताम् । शाक्वररैवतेइतिशाक्वर-रैवते । सामनीइति । प्रतिष्ठित्याइतिप्रति-स्थित्यै । अन्तरिक्षाय । ऋषयः । त्वा । प्रथमजाइतिप्रथम-जाः । देवेषु । दिवः । मात्रया । वरिणा । प्रथन्तु । विधर्तेतिवि-धर्ता । च । अयम् । अधिपतिरित्यधि-पतिः । च । ते । त्वा । सर्वे । संविदानाइतिसं-विदानाः । नाकस्य । पृष्ठे । सुवर्गइतिसुवः-गे । लोके । यजमानम् । च । सादयन्तु ॥ [६] प्रतीचीदिङ्मरुतस्तेदेवाअधिपतयश्चत्वारिꣳशच्च ॥ ॥२॥

अयम् । पुरः । हरिकेशइतिहरि-केशः । सूर्यरश्मिरितिसूर्य-रश्मिः । तस्य । रथगृत्सइतिरथ-गृत्सः । च । रथौजाइतिरथ-ओजाः । च । सेनानिग्रामण्याविति

सेनानि-ग्रामण्यौ । पुञ्जिकस्थलेतिपुञ्जिक-स्थला । च । कृतस्थलेतिकृत-स्थला । च । अप्सरसौ । यातुधानाइतियातु-धानाः । हेतिः । रक्षांꣳसि । प्रहेतिरितिप्र-हेतिः । अयम् । दक्षिणा । विश्वकर्मेतिविश्व-कर्मा । तस्य । रथस्वनइतिरथ-स्वनः । च । रथेचित्रइतिरथे-चित्रः । च । सेनानिग्रामण्याविति सेनानि-ग्रामण्यौ । मेनका । च । सहजन्येतिसह-जन्या । च । अप्सरसौ । दङ्क्ष्णवः । पशवः । हेतिः । पौरुषेयः । वधः । प्रहेतिरितिप्र-हेतिः । अयम् । पश्चात् । विश्वव्यचाइतिविश्व-व्यचाः । तस्य । रथप्रोतइतिरथ-प्रोतः । च । असमरथइत्यसम-रथः । च । सेनानिग्रामण्याविति सेनानि-ग्रामण्यौ । प्रम्लोचन्तीतिप्र-म्लोचन्ती । च । [७] अनुम्लोचन्तीत्यनु-म्लोचन्ती । च । अप्सरसौ । सर्पाः । हेतिः । व्याघ्राः । प्रहेतिरितिप्र-हेतिः । अयम् । उत्तरादित्युत्-तरात् । संयद्वसुरितिसंयत्-वसुः । तस्य । सेनजिदितिसेन-जित् । च । सुषेणइतिसु-सेनः । च । सेनानिग्रामण्याविति सेनानि-ग्रामण्यौ । विश्वाची । च । घृताची । च । अप्सरसौ । आपः । हेतिः । वातः । प्रहेतिरितिप्र-हेतिः । अयम् । उपरि । अर्वाग्वसुरित्यर्वाक्-वसुः । तस्य । तार्क्ष्यः । च । अरिष्टनेमिरित्यरिष्ट-नेमिः । च । सेनानिग्रामण्याविति सेनानि - ग्रामण्यौ । उर्वशी । च । पूर्वचित्तिरितिपूर्व-चित्तिः । च । अप्सरसौ । विद्युदितिवि-द्युत् । हेतिः । अवस्फूर्जन्नित्यव-स्फूर्जन्न् । प्रहेतिरितिप्र-हेतिः । तेभ्यः । नमः । ते । नः । मृडयन्तु । ते । यम् । [८] द्विष्मः । यः । च । नः । द्वेष्टि । तम् । वः । जम्भे । दधामि । आयोः । त्वा । सदने । सादयामि । अवतः । छायायाम् । नमः । समुद्राय । नमः । समुद्रस्य । चक्षसे । परमेष्ठी । त्वा । सादयतु । दिवः । पृष्ठे । व्यचस्वतीम् । प्रथस्वतीम् । विभूमतीमितिवि-भूमतीम् । प्रभूमतीमितिप्र-भूमतीम् । परिभूमतीमितिपरि-भूमतीम् । दिवम् । यच्छ । दिवम् । दृꣳह । दिवम् । मा । हिꣳसीः । विश्वस्मै । प्राणायेतिप्र-अनाय । अपानायेत्यप-अनाय । व्यानायेतिवि-अनाय । उदानायेत्युत्-अनाय । प्रतिष्ठायाइतिप्रति-स्थायै । चरित्राय । सूर्यः । त्वा । अभीति । पातु । मह्या । स्वस्त्या । छर्दिषा । शन्तमेनेति शं-तमेन । तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद ॥ प्रोथत् । अश्वः । न । यवसे । अविष्यन्न् । यदा । महः । संवरणादितिसं-वरणात् । व्यस्थादितिवि-अस्थात् ॥ आत् । अस्य । वातः । अन्विति । वाति । शोचिः । अध । स्म । ते । व्रजनम् ।

कृष्णम् । अस्ति ॥ [९] प्रम्लोचन्तीचयश्स्वस्याऽष्टाविंशतिश्च ॥ ❀ ॥३॥

अग्निः । मूर्द्धा । दिवः । ककुत् । पतिः । पृथिव्याः । अयम् ॥ अपाम् । रेतांसि । जिन्वति ॥ त्वाम् । अग्ने । पुष्करात् । अधीति । अथर्वा । निरिति । अमन्थत ॥ मूर्ध्नः । विश्वस्य । वाघतः ॥ अयम् । अग्निः । सहस्रिणः । वाजस्य । शतिनः । पतिः ॥ मूर्द्धा । कविः । रयीणाम् ॥ भुवः । यज्ञस्य । रजसः । च । नेता । यत्र । नियुद्भिरितिनियुत्-भिः । सचसे । शिवाभिः ॥ दिवि । मूर्द्धानम् । दधिषे । सुवर्षामितिसुवः-साम् । जिह्वाम् । अग्ने । चकृषे । हव्यवाहमितिहव्य-वाहम् ॥ अबोधि । अग्निः । समिधेतिसं-इधा । जनानाम् । [१०] प्रतीति । धेनुम् । इव । आयतीमित्या-यतीम् । उषासम् ॥ यह्वाः । इव । प्रेति । वयाम् । उज्जिहानाइत्युत्-जिहानाः । प्रेति । भानवः । सिस्रते । नाकम् । अच्छ ॥ अवोचाम । कवये । मेध्याय । वचः । वन्दारु । वृषभाय । वृष्णे ॥ गविष्ठिरः । नमसा । स्तोमम् । अग्नौ । दिवि । इव । रुक्मम् । उर्व्यञ्चम् । अश्रेत् ॥ जनस्य । गोपाइतिगो-पाः । अजनिष्ट । जागृविः । अग्निः । सुदक्षइतिसु-दक्षः । सुविताय । नव्यसे ॥ घृतप्रतीकइतिघृत-प्रतीकः । बृहता । दिविस्पृशेतिदिवि-स्पृशा । द्युमदितिद्यु-मत् । वीति । भाति । भरतेभ्यः । शुचिः ॥ त्वाम् । अग्ने । अङ्गिरसः । [११] गुहा । हितम् । अन्विति । अविन्दन् । शिश्रियाणम् । वनेवनइतिवने-वने ॥ सः । जायसे । मथ्यमानः । सहः । महत् । त्वाम् । आहुः । सहसः । पुत्रम् । अङ्गिरः ॥ यज्ञस्य । केतुम् । प्रथमम् । पुरोहितमितिपुरः-हितम् । अग्निम् । नरः । त्रिषधस्थइतित्रि-सधस्थे । समिति । इन्धते ॥ इन्द्रेण । देवैः । सरथमितिस-रथम् । सः । बर्हिषि । सीदत् । नीति । होता । यजथाय । सुक्रतुरितिसु-क्रतुः ॥ त्वाम् । चित्रश्रवस्तमेतिचित्रश्रवः-तम । हवन्ते । विक्षु । जन्तवः ॥ शोचिष्केशमितिशोचिः-केशम् । पुरुप्रियेतिपुरु-प्रिय । अग्ने । हव्याय । वोढवे ॥ सखायः । समिति । वः । सम्यञ्चम् । इषम् । [१२] स्तोमम् । च । अग्नये ॥ वर्षिष्ठाय । क्षितीनाम् । ऊर्जः । नप्त्रे । सहस्वते ॥ सम् । समितिसं-सम् । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्यः । आ ॥ इडः । पदे । समिति । इध्यसे । सः । नः । वसूनि । एति । भर ॥ एना । वः । अग्निम् । नमसा । ऊर्जः । नपातम् । एति । हुवे ॥ प्रियम् । चेतिष्ठम् । अरतिम् । स्वध्वरमिति

सु-अध्वरम् । विश्वस्य । दूतम् । अमृतम् ॥ सः । योजते । अरुषः । विश्वभोजसेति विश्व-भोजसा । सः । दुद्रवत् । स्वाहुतइतिसु-आहुतः ॥ सुब्रह्मेतिसु-ब्रह्मा । यज्ञः । सुशमीतिसु-शमी । [१३] वसूनाम् । देवम् । राधः । जनानाम् ॥ उदिति । अस्य । शोचिः । अस्थात् । आजुह्वानस्येत्या-जुह्वानस्य । मीढुषः ॥ उदिति । धूमासः । अरुषासः । दिविस्पृशइतिदिवि-स्पृशः । समिति । अग्निम् । इन्धते । नरः ॥ अग्ने । वाजस्य । गोमतइतिगो-मतः । ईशानः । सहसः । यह्वोइति ॥ अस्मेइति । धेहि । जातवेदइतिजात-वेदः । महि । श्रवः ॥ सः । इधानः । वसुः । कविः । अग्निः । ईडेन्यः । गिरा ॥ रेवत् । अस्मभ्यमित्यस्म-भ्यम् । पुर्वणीकेतिपुरु-अनीक । दीदिहि ॥ क्षपः । राजन्न् । उत । त्मना । अग्ने । वस्तोः । उत । उषसः ॥ सः । तिग्मजम्भेतितिग्म-जम्भ । [१४] रक्षसः । दह । प्रति ॥ एति । ते । अग्ने । इधीमहि । द्युमन्तमितिद्यु-मन्तम् । देव । अजरम् ॥ यत् । ह । स्या । ते । पनीयसी । समिदितिसं-इत् । दीदयति । द्यवि । इषम् । स्तोतृभ्यइतिस्तोतृ-भ्यः । एति । भर ॥ एति । ते । अग्ने । ऋचा । हविः । शुक्रस्य । ज्योतिषः । पते ॥ सुश्चन्द्रेतिसु-चन्द्र । दस्म । विश्पते । हव्यवाडितिहव्य-वाट् । तुभ्यम् । हूयते । इषम् । स्तोतृभ्यइतिस्तोतृ-भ्यः । एति । भर ॥ उभेइति । सुश्चन्द्रेतिसु-चन्द्र । सर्पिषः । दर्वीइति । श्रीणीषे । आसनि ॥ उतोइति । नः । उदिति । पुपूर्याः । [१५] उक्थेषु । शवसः । पते । इषम् । स्तोतृभ्यइतिस्तोतृ-भ्यः । एति । भर ॥ अग्ने । तम् । अद्य । अश्वम् । न । स्तोमैः । क्रतुम् । न । भद्रम् । हृदिस्पृशमितिहृदि-स्पृशम् ॥ ऋध्याम । ते । ओहैः ॥ अध । हि । अग्ने । क्रतोः । भद्रस्य । दक्षस्य । साधोः ॥ रथीः । ऋतस्य । बृहतः । बभूथ ॥ आभिः । ते । अद्य । गीर्भिः । गृणन्तः । अग्ने । दाशेम ॥ प्रेति । ते । दिवः । न । स्तनयन्ति । शुष्माः ॥ एभिः । नः । अर्कैः । भव । नः । अर्वाङ् । [१६] सुवः । न । ज्योतिः ॥ अग्ने । विश्वेभिः । सुमनाइतिसु-मनाः । अनीकैः ॥ अग्निम् । होतारम् । मन्ये । दास्वन्तम् । वसोः । सूनुम् । सहसः । जातवेदसमितिजात-वेदसम् ॥ विप्रम् । न । जातवेदसमितिजात-वेदसम् ॥ यः । ऊर्ध्वया । स्वध्वरइतिसु-अध्वरः । देवः । देवाच्या । कृपा ॥ घृतस्य । विभ्राष्टिमितिवि-भ्राष्टिम् । अन्विति । शुक्रशोचिषइतिशुक्र-शोचिषः । आजुह्वानस्येत्या-जुह्वानस्य । सर्पिषः ॥ अग्ने । त्वम् ।

नः । अन्तमः ॥ उत । त्राता । शिवः । भव । वरूथ्यः ॥ तम् । त्वा । शोचिष्ठ । दीदिवः ॥ सुम्नाय । नूनम् । ईमहे । सखिभ्यइतिसखि-भ्यः ॥ वसुः । अग्निः । वसुश्रवाइतिवसु-श्रवाः ॥ अच्छ । नक्षि । द्युमत्तमइतिद्युमत् - तमः । रयिम् । दाः ॥ [१७] जनानामङ्गिरसइषꣳ सुशमींतिग्मजम्भपुपूर्याअर्वाङ्वसुश्रवाःपञ्च च ॥ ४ ॥

इन्द्राग्निभ्यामितीन्द्राग्नि-भ्याम् । त्वा । सयुजेतिस-युजा । युजा । युनज्मि । आघाराभ्यामित्या-घाराभ्याम् । तेजसा । वर्चसा । उक्थेभिः । स्तोमेभिः । छन्दोभिरितिछन्दः-भिः । रय्यै । पोषाय । सजातानामितिस-जातानाम् । मध्यमस्थेयायेति मध्यम-स्थेयाय । मया । त्वा । सयुजेतिस-युजा । युजा । युनज्मि । अम्बा । दुला । नितत्निरितिनि-तत्निः । अभ्रयन्ती । मेघयन्ती । वर्षयन्ती । चुपुणीका । नाम । असि । प्रजापतिनेतिप्रजा-पतिना । त्वा । विश्वाभिः । धीभिः । उपेति । दधामि । पृथिवी । उद् पुरमित्युद-पुरम् । अन्नेन । विष्टा । मनुष्याः । ते । गोप्तारः । अग्निः । वियत्तइतिवि-यत्तः । अस्याम् । ताम् । अहम् । प्रेति । पद्ये । सा । [१८] मे । शर्म । च । वर्म । च । अस्तु । अधिद्यौरित्यधि-द्यौः । अन्तरिक्षम् । ब्रह्मणा । विष्टा । मरुतः । ते । गोप्तारः । वायुः । वियत्तइतिवि-यत्तः । अस्याम् । ताम् । अहम् । प्रेति । पद्ये । सा । मे । शर्म । च । वर्म । च । अस्तु । द्यौः । अपराजितेत्यपरा-जिता । अमृतेन । विष्टा । आदित्याः । ते । गोप्तारः । सूर्यः । वियत्तइतिवि-यत्तः । अस्याम् । ताम् । अहम् । प्रेति । पद्ये । सा । मे । शर्म । च । वर्म । च । अस्तु ॥ [१९] साऽष्टाचत्वारिꣳशच्च ॥ ❀ ❀ ❀ ❀ ❀ ❀ ॥५॥

बृहस्पतिः । त्वा । सादयतु । पृथिव्याः । पृष्ठे । ज्योतिष्मतीम् । विश्वस्मै । प्राणायेतिप्र-अनाय । अपानायेत्यप-अनाय । विश्वम् । ज्योतिः । यच्छ । अग्निः । ते । अधिपतिरित्यधि-पतिः । विश्वकर्मेतिविश्व-कर्मा । त्वा । सादयतु । अन्तरिक्षस्य । पृष्ठे । ज्योतिष्मतीम् । विश्वस्मै । प्राणायेतिप्र-अनाय । अपानायेत्यप-अनाय । विश्वम् । ज्योतिः । यच्छ । वायुः । ते । अधिपतिरित्यधि-पतिः । प्रजापतिरितिप्रजा-पतिः । त्वा । सादयतु । दिवः । पृष्ठे । ज्योतिष्मतीम् । विश्वस्मै । प्राणायेतिप्र-अनाय । अपानायेत्यप-अनाय । विश्वम् । ज्योतिः । यच्छ । परमेष्ठी । ते । अधिपतिरित्यधि-पतिः । पुरोवातसनिरितिपुरोवात-सनिः । असि । अभ्रसनिरित्य

भ्र-सनिः । असि । विद्युथ्सनिरितिविद्युत्-सनिः । [२०] असि । स्तनयित्नुसनिरितिस्तनयित्नु-सनिः । असि । वृष्टिसनिरितिवृष्टि-सनिः । असि । अग्नेः । यानी । असि । देवानाम् । अग्नेयानीत्यग्ने-यानी । असि । वायोः । यानी । असि । देवानाम् । वायोयानीतिवायो-यानी । असि । अन्तरिक्षस्य । यानी । असि । देवानाम् । अन्तरिक्षयानीत्यन्तरिक्ष-यानी । असि । अन्तरिक्षम् । असि । अन्तरिक्षाय । त्वा । सलिलाय । त्वा । सर्णीकाय । त्वा । सतीकायेतिस-तीकाय । त्वा । केताय । त्वा । प्रचेतसइतिप्र-चेतसे । त्वा । विवस्वते । त्वा । दिवः । त्वा । ज्योतिषे । आदित्येभ्यः । त्वा । ऋचे । त्वा । रुचे । त्वा । द्युते । त्वा । भासे । त्वा । ज्योतिषे । त्वा । यशोदामितियशः-दाम् । त्वा । यशसि । तेजोदामितितेजः-दाम् । त्वा । तेजसि । पयोदामितिपयः-दाम् । त्वा । पयसि । वर्चोदामितिवर्चः-दाम् । त्वा । वर्चसि । द्रविणोदामितिद्रविणः-दाम् । त्वा । द्रविणे । सादयामि । तेन । ऋषिणा । तेन । ब्रह्मणा । तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद ॥ [२१] विद्युथ्सनिर्द्युतेत्वैकान्नत्रिꣳशच्च ॥ ❀ ❀ ❀ ❀ ॥६॥

भूयस्कृदितिभूयः-कृत् । असि । वरिवस्कृदितिवरिवः-कृत् । असि । प्राची । असि । ऊर्ध्वा । असि । अन्तरिक्षसदित्यन्तरिक्ष-सत् । असि । अन्तरिक्षे । सीद । अफ्सुषदित्यफ्सु-सत् । असि । श्येनसदितिश्येन-सत् । असि । गृध्रसदितिगृध्र-सत् । असि । सुपर्णसदितिसुपर्ण-सत् । असि । नाकसदितिनाक-सत् । असि । पृथिव्याः । त्वा । द्रविणे । सादयामि । अन्तरिक्षस्य । त्वा । द्रविणे । सादयामि । दिवः । त्वा । द्रविणे । सादयामि । दिशाम् । त्वा । द्रविणे । सादयामि । द्रविणोदामितिद्रविणः-दाम् । त्वा । द्रविणे । सादयामि । प्राणमितिप्र-अनम् । मे । पाहि । अपानमित्यप-अनम् । मे । पाहि । व्यानमितिवि-अनम् । मे । [२२] पाहि । आयुः । मे । पाहि । विश्वायुरितिविश्व-आयुः । मे । पाहि । सर्वायुरितिसर्व-आयुः । मे । पाहि । अग्ने । यत् । ते । परम् । हृत् । नाम । तौ । एति । इहि । समिति । रभावहै । पाञ्चजन्येष्वितिपाञ्च-जन्येषु । अपीति । एधि । अग्ने । यावाः । अयावाः । एवाः । ऊमाः । सब्दः । सगरः । सुमेकइतिसु-मेकः ॥ [२३] व्यानम्मेद्वात्रिꣳशच्च ॥७॥

अग्निना । विश्वाषाट् । सूर्येण । स्वराडितिस्व-राट् । क्रत्वा । शचीपतिः ।

ऋषभेण । त्वष्टा । यज्ञेन । मघवानितिमघ-वान् । दक्षिणया । सुवर्गइतिसुवः-गः । मन्युना । वृत्रहेतिवृत्र-हा । सौहार्द्येन । तनूधाइतितनू-धाः । अन्नेन । गयः । पृथिव्या । असनोत् । ऋग्भिरित्यृक्-भिः । अन्नादइत्यन्न-अदः । वषट्कारेणेतिवषट्-कारेण । ऋद्धः । साम्ना । तनूपाइतितनू-पाः । विराजेतिवि-राजा । ज्योतिष्मान् । ब्रह्मणा । सोमपाइतिसोम-पाः । गोभिः । यज्ञम् । दाधार । क्षत्रेण । मनुष्यान् । अश्वेन । च । रथेन । च । वज्री । ऋतुभिरित्यृतु-भिः । प्रभुरितिप्र-भुः । सँवत्सरेणेतिसं-वत्सरेण । परिभूरितिपरि-भूः । तपसा । अनाधृष्टइत्यना-धृष्टः । सूर्यः । सन् । तनूभिः ॥ [२४] अग्निनैकान्नपञ्चाशत् ॥ ❀ ❀ ॥८॥

प्रजापतिरितिप्रजा पतिः । मनसा । अन्धः । अच्छेतइत्यच्छ-इतः । धाता । दीक्षायाम् । सविता । भृत्याम् । पूषा । सोमक्रयण्यामितिसोम-क्रयण्याम् । वरुणः । उपनद्धइत्युप-नद्धः । असुरः । क्रीयमाणः । मित्रः । क्रीतः । शिपिविष्टइतिशिपि-विष्टः । आसादितइत्या-सादितः । नरन्धिषः । प्रोह्यमाणइतिप्र-उह्यमानः । अधिपतिरित्यधि-पतिः । आगतइत्या-गतः । प्रजापतिरितिप्रजा-पतिः । प्रणीयमानइतिप्र-नीयमानः । अग्निः । आग्नीध्रइत्याग्नि-इध्रे । बृहस्पतिः । आग्नीध्रादित्याग्नि-इध्रात् । प्रणीयमानइतिप्र-नीयमानः । इन्द्रः । हविर्धानइतिहविः-धाने । अदितिः । आसादितइत्या सादितः । विष्णुः । उपावह्रियमाणइत्युप-अवह्रियमाणः । अथर्वा । उपोत्तइत्युप-उत्तः । यमः । अभिषुतइत्यभि-सुतः । अपूतपाइत्यपूत-पाः । आधूयमानइत्या-धूयमानः । वायुः । पूयमानः । मित्रः । क्षीरश्रीरितिक्षीर-श्रीः । मन्थी । सक्तुश्रीरितिसक्तु-श्रीः । वैश्वदेवइतिवैश्व-देवः । उन्नीतइत्युत्-नीतः । रुद्रः । आहुतइत्या-हुतः । वायुः । आवृत्तइत्या-वृत्तः । नृचक्षाइतिनृ-चक्षाः । प्रतिख्यातइतिप्रति-ख्यातः । भक्षः । आगतइत्या-गतः । पितृणाम् । नाराशꣳसः । असुः । आत्तः । सिन्धुः । अवभृथमित्यव-भृथम् । अवप्रयन्नित्यव-प्रयन् । समुद्रः । अवगतइत्यव-गतः । सलिलः । प्रप्लुतइतिप्र-प्लुतः । सुवः । उदृचमित्युत्-ऋचम् । गतः ॥ [२५] रुद्रएकविꣳशतिश्च ॥ ❀ ❀ ॥९॥

कृत्तिकाः । नक्षत्रम् । अग्निः । देवता । अग्नेः । रुचः । स्थ । प्रजापतेरितिप्रजा-पतेः । धातुः । सोमस्य । ऋचे । त्वा । रुचे । त्वा । द्युते । त्वा । भासे । त्वा ।

ज्योतिषे । त्वा । रोहिणी । नक्षत्रम् । प्रजापतिरितिप्रजा-पतिः । देवता । मृगशीरू षमितिमृग-शीरू षम् । नक्षत्रम् । सोमः । देवता । आर्द्रा । नक्षत्रम् । रुद्रः । देवता । पुनर्वसूइतिपुनः-वसू । नक्षत्रम् । अदितिः । देवता । तिष्यः । नक्षत्रम् । बृहस्पतिः । देवता । आश्रेषाइत्या-श्रेषाः । नक्षत्रम् । सर्पाः । देवता । मघाः । नक्षत्रम् । पितरः । देवता । फल्गुनीइति । नक्षत्रम् । [२६] अर्यमा । देवता । फल्गुनीइति । नक्षत्रम् । भगः । देवता । हस्तः । नक्षत्रम् । सविता । देवता । चित्रा । नक्षत्रम् । इन्द्रः । देवता । स्वाती । नक्षत्रम् । वायुः । देवता । विशाखेइतिवि-शाखे । नक्षत्रम् । इन्द्राग्नीइतीन्द्र-अग्नी । देवता । अनूराधाइत्यनु-राधाः । नक्षत्रम् । मित्रः । देवता । रोहिणी । नक्षत्रम् । इन्द्रः । देवता । विचृतावितिवि-चृतौ । नक्षत्रम् । पितरः । देवता । अषाढाः । नक्षत्रम् । आपः । देवता । अषाढाः । नक्षत्रम् । विश्वे । देवाः । देवता । श्रोणा । नक्षत्रम् । विष्णुः । देवता । श्रविष्ठाः । नक्षत्रम् । वसवः । [२७] देवता । शतभिषगितिशत-भिषक् । नक्षत्रम् । इन्द्रः । देवता । प्रोष्ठपदाइतिप्रोष्ठ-पदाः । नक्षत्रम् । अजः । एकपादित्येक-पात् । देवता । प्रोष्ठपदाइतिप्रोष्ठ-पदाः । नक्षत्रम् । अहिः । बुध्नियः । देवता । रेवती । नक्षत्रम् । पूषा । देवता । अश्वयुजावित्यश्व-युजौ । नक्षत्रम् । अश्विनौ । देवता । अपभरणीरित्यप-भरणीः । नक्षत्रम् । यमः । देवता । पूर्णा । पश्चात् । यत् । ते । देवाः । अदधुः ॥ [२८] फल्गुनीनक्षत्रँव्वसवस्त्रयस्त्रिꣳशच ॥ ❀ ॥ १० ॥

मधुः । च । माधवः । च । वासन्तिकौ । ऋतूइति । शुक्रः । च । शुचिः । च । ग्रैष्मौ । ऋतूइति । नभः । च । नभस्यः । च । वार्षिकौ । ऋतूइति । इषः । च । ऊर्जः । च । शारदौ । ऋतूइति । सहः । च । सहस्यः । च । हैमन्तिकौ । ऋतूइति । तपः । च । तपस्यः । च । शैशिरौ । ऋतूइति । अग्नेः । अन्तश्श्लेषइत्यन्तः-श्लेषः । असि । कल्पेताम् । द्यावापृथिवीइतिद्यावा-पृथिवी । कल्पन्ताम् । आपः । ओषधीः । कल्पन्ताम् । अग्नयः । पृथक् । मम । ज्यैष्ठ्याय । सव्रताइतिस-व्रताः । [२९] ये । अग्नयः । समनसइतिस-मनसः । अन्तरा । द्यावापृथिवीइतिद्यावा-पृथिवी । शैशिरौ । ऋतूइति । अभीति । कल्पमानाः । इन्द्रम् । इव । देवाः । अभि । समिति । विशन्तु । सय्यँदितिसं-यत् । च । प्रचेताइतिप्र-चेताः । च । अग्नेः । सोमस्य । सूर्यस्य ।

उग्रा । च । भीमा । च । पितॄणाम् । यमस्य । इन्द्रस्य । ध्रुवा । च । पृथिवी । च । देवस्य । सवितुः । मरुताम् । वरुणस्य । धर्त्री । च । धरित्री । च । मित्रावरुणयोरितिमित्रा-वरुणयोः । मित्रस्य । धातुः । प्राची । च । प्रतीची । च । वसूनाम् । रुद्राणाम् । [३०] आदित्यानाम् । ते । ते । अधिपतयइत्यधि-पतयः । तेभ्यः । नमः । ते । नः । मृडयन्तु । ते । यम् । द्विष्मः । यः । च । नः । द्वेष्टि । तम् । वः । जम्भे । दधामि । सहस्रस्य । प्रमेतिप्र-मा । असि । सहस्रस्य । प्रतिमेतिप्रति-मा । असि । सहस्रस्य । विमेतिवि-मा । असि । सहस्रस्य । उन्मेत्युत्-मा । असि । साहस्रः । असि । सहस्राय । त्वा । इमाः । मे । अग्ने । इष्टकाः । धेनवः । सन्तु । एका । च । शतम् । च । सहस्रम् । च । अयुतम् । च । [३१] नियुतमितिनि-युतम् । च । प्रयुतमितिप्र-युतम् । च । अर्बुदम् । च । न्यर्बुदमितिनि-अर्बुदम् । च । समुद्रः । च । मध्यम् । च । अन्तः । च । परार्द्धइतिपर - अर्द्धः । च । इमाः । मे । अग्ने । इष्टकाः । धेनवः । सन्तु । षष्टिः । सहस्रम् । अयुतम् । अक्षीयमाणाः । ऋतस्थाइत्यृत-स्थाः । स्थ । ऋतावृधइत्यृत-वृधः । घृतश्चुतइतिघृत-श्चुतः । मधुश्चुतइतिमधु-श्चुतः । ऊर्जस्वतीः । स्वधाविनीरितिस्वधा-विनीः । ताः । मे । अग्ने । इष्टकाः । धेनवः । सन्तु । विराजइतिवि-राजः । नाम । कामदुघाइतिकाम-दुघाः । अमुत्र । अमुष्मिन्न् । लोके ॥ [३२] सर्वतारुद्राणाम् युतंत्रपञ्चचत्वारिंशच्च ॥ ❀ ❀ ❀ ❀ ॥११॥

समिदितिसं-इत् । दिशाम् । आशया । नः । सुवर्विदितिसुवः-वित् । मधोः । अतः । माधवः । पातु । अस्मान् ॥ अग्निः । देवः । दुष्टरीतुः । अदाभ्यः । इदम् । क्षत्रम् । रक्षतु । पातु । अस्मान् ॥ रथन्तरमितिरथं-तरम् । सामभिरितिसाम-भिः । पातु । अस्मान् । गायत्री । छन्दसाम् । विश्वरूपेतिविश्व-रूपा ॥ त्रिवृदितित्रि-वृत् । नः । विष्ठयेतिवि-स्थया । स्तोमः । अह्नाम् । समुद्रः । वातः । इदम् । ओजः । पिपर्तु ॥ उग्रा । दिशाम् । अभिभूतिरित्यभि-भूतिः । वयोधाइतिवयः-धाः । शुचिः । शुक्रे । अहनि । ओजसीना ॥ इन्द्रः । अधिपतिरित्यधि-पतिः । पिपृतात् । अतः । नः । महि । [३३] क्षत्रम् । विश्वतः । धारय । इदम् ॥ बृहत् । साम । क्षत्रभृदितिक्षत्र-भृत् । वृद्धवृष्णियमितिवृद्ध-वृष्णियम् । त्रिष्टुभा । ओजः । शुभितम् । उग्रवीरमित्युग्र-वीरम् ॥ इन्द्रः । स्तोमेन । पञ्चदशेनेतिपञ्च-दशेन । मध्यम् । इदम् । वा

तेन । सगरेण । रक्ष ॥ प्राचीं । दिशाम् । सहयशाइतिसह-यशाः । यशस्वती । विश्वे । देवाः । प्रावृषा । अह्नाम् । सुवर्वतीतिसुवः-वती ॥ इदम् । क्षत्रम् । दुष्टरम् । अस्तु । ओजः । अनाधृष्टमित्यना-धृष्टम् । सहस्रियम् । सहस्वत् ॥ वैरूपे । सामन् । इह । तत् । शकेम । जगत्या । एनम् । विक्षु । एति । वेशयामः ॥ विश्वे । देवाः । सप्तदशेनेतिसप्त-दशेन । [३४] वर्चः । इदम् । क्षत्रम् । सलिलवातमितिसलिल-वातम् । उग्रम् ॥ धर्त्री । दिशाम् । क्षत्रम् । इदम् । दाधार । उपस्थेत्युप-स्था । आशानाम् । मित्रवदितिमित्र-वत् । अस्तु । ओजः ॥ मित्रावरुणेतिमित्रा-वरुणा । शरदा । अह्नाम् । चिकित्व इति । अस्मै । राष्ट्राय । महि । शर्म । यच्छतम् ॥ वैराजे । सामन् । अधीति । मे । मनीषा । अनुष्टुभेत्यनु-स्तुभा । सम्भृतमितिसं-भृतम् । वीर्यम् । सहः ॥ इदम् । क्षत्रम् । मित्रवदितिमित्र-वत् । आर्द्रदानित्यार्द्र-दानु । मित्रावरुणेतिमित्रा-वरुणा । रक्षतम् । आधिपत्यैरित्याधि-पत्यैः ॥ सम्राडितिसं-राट् । दिशाम् । सहसाम्नीतिसह-साम्नी । सहस्वती । ऋतुः । हेमन्तः । विष्ठयेतिवि-स्थया । नः । पिपर्तु ॥ अवस्युवाताइत्यवस्यु-वाताः । [३५] बृहतीः । नु । शक्करीः । इमम् । यज्ञम् । अवन्तु । नः । घृताचीः ॥ सुवर्वतीतिसुवः-वती । सुदुघेतिसु-दुघा । नः । पयस्वती । दिशाम् । देवी । अवतु । नः । घृताची ॥ त्वम् । गोपा इतिगो-पाः । पुरएतेतिपुरः-एता । उत । पश्चात् । बृहस्पते । याम्याम् । युङ्ग्धि । वाचम् ॥ ऊर्ध्वा । दिशाम् । रन्तिः । आशा । ओषधीनाम् । संवथ्सरेणेतिसं-वथ्सरेण । सविता । नः । अह्नाम् ॥ रेवत् । साम । अतिच्छन्दाइत्यति-छन्दाः । उ । छन्दः । अजातशत्रुरित्यजात-शत्रुः । स्योना । नः । अस्तु ॥ स्तोमत्रयस्त्रिंशइति स्तोम-त्रयस्त्रिंशे । भुवनस्य । पत्नि । विवस्वद्वातइतिविवस्वत्-वाते । अभीति । नः । [३६] गृणाहि ॥ घृतवतीतिघृत-वती । सवितः । आधिपत्यैरित्याधि-पत्यैः । पयस्वती । रन्तिः । आशा । नः । अस्तु ॥ ध्रुवा । दिशाम् । विष्णुपत्नीतिविष्णु-पत्नी । अघोरा । अस्य । ईशाना । सहसः । या । मनोता ॥ बृहस्पतिः । मातरिश्वा । उत । वायुः । सन्धुवानाइतिसं-धुवानाः । वाताः । अभीति । नः । गृणन्तु ॥ विष्टम्भइतिवि-स्तम्भः । दिवः । धरुणः । पृथिव्याः । अस्य । ईशाना । जगतः ।

इति । शिशुम् । एकम् । समीचीइति ॥ द्यावा । रुक्षाम् । रुक्मः । अन्तः । वीति । भाति । देवाः । अग्निम् । धारयन्न् । द्रविणोदाइतिद्रविणः-दाः ॥ समुद्रः । असि । नभस्वान् । आर्द्रदानुरित्यार्द्र-दानुः । शम्भू रितिशं-भूः । मयोभू रितिमयः-भूः । अभीति । मा । वाहि । स्वाहा । मारुतः । असि । मरुताम् । गणः । शम्भू रितिशं-भूः । मयोभू रितिमयः-भूः । अभीति । मा । वाहि । स्वाहा । अवस्युः । असि । दुवस्वान् । शम्भू रितिशं-भूः । मयोभू रितिमयः-भूः । अभीति । मा । वाहि । स्वाहा ॥ [२३] धनेष्वपोदुवस्वाञ्छम्भूर्मयोभूरभिमाद्वेच ॥ ❀ ॥१२॥

अग्निम् । युनज्मि । शवसा । घृतेन । दिव्यम् । सुपर्णमितिसु-पर्णम् । वयसा । बृहन्तम् ॥ तेन । वयम् । पतेम । ब्रध्नस्य । विष्टपम् । सुवः । रुहाणाः । अधीति । नाके । उत्तमइत्युत्-तमे ॥ इमौ । ते । पक्षौ । अजरौ । पतत्रिणः । याभ्याम् । रक्षाꣳसि । अपहꣳसीत्यप-हꣳसि । अग्ने ॥ ताभ्याम् । पतेम । सुकृतामितिसु-कृताम् । उ । लोकम् । यत्र । ऋषयः । प्रथमजाइतिप्रथम-जाः । ये । पुराणाः ॥ चित् । असि । समुद्रयोनिरितिसमुद्र-योनिः । इन्दुः । दक्षः । श्येनः । ऋतावेत्यृत-वा ॥ हिरण्यपक्षइतिहिरण्य-पक्षः । शकुनः । भुरण्युः । महान् । सधस्थइतिसध-स्थे । ध्रुवः । [२४] । एति । निषत्तइतिनि-सत्तः ॥ नमः । ते । अस्तु । मा । मा । हिꣳसीः । विश्वस्य । मूर्द्धन्न् । अधीति । तिष्ठसि । श्रितः ॥ समुद्रे । ते । हृदयम् । अन्तः । आयुः । द्यावापृथिवीइतिद्यावा-पृथिवी । भुवनेषु । अर्पितेइति ॥ उद्नः । दत्त । उदधिमित्युद-धिम् । भिन्त । दिवः । पर्जन्यात् । अन्तरिक्षात् । पृथिव्याः । ततः । नः । वृष्ट्या । अवत ॥ दिवः । मूर्द्धा । असि । पृथिव्याः । नाभिः । ऊर्क् । अपाम् । ओषधीनाम् ॥ विश्वायुरितिविश्व-आयुः । शर्म । सप्रथाइतिस-प्रथाः । नमः । पथे ॥ येन । ऋषयः । तपसा । सत्रम् । [२५] आसत । इन्धानाः । अग्निम् । सुवः । आभरन्तइत्या-भरन्तः ॥ तस्मिन्न् । अहम् । नीति । दधे । नाके । अग्निम् । एतम् । यम् । आहुः । मनवः । स्तीर्णबर्हिषमितिस्तीर्ण-बर्हिषम् ॥ तम् । पत्नीभिः । अन्विति । गच्छेम । देवाः । पुत्रैः । भ्रातृभिरितिभ्रातृ-भिः । उत । वा । हिरण्यैः ॥ नाकम् । गृह्णानाः । सुकृतस्येतिसु-कृतस्य । लोके । तृतीये । पृष्ठे । अधीति । रोचने । दिवः ॥ एति । वाचः । मध्यम् । अरुहत् । भुरण्युः । अयम् । अग्निः । सत्पतिरितिसत्-पतिः ।

चेकितानः ॥ पृष्ठे । पृथिव्याः । निहितइतिनि-हितः । दविद्युतत् । अधस्पदमित्यधः-पदम् । कृणुते । [२६] ये । पृतन्यवः ॥ अयम् । अग्निः । वीरतमइतिवीर-तमः । वयोधाइतिवयः-धाः । सहस्रियः । दीप्यताम् । अप्रयुच्छन्नित्यप्र-युच्छन् ॥ विभ्राजमानइतिवि-भ्राजमानः । सरिरस्य । मध्ये । उप । प्रेति । यात । दिव्यानि । धाम ॥ सम् । प्रेति । च्यवध्वम् । अन्विति । सम् । प्रेति । यात । अग्ने । पथः । देवयानानितिदेव-यानान् । कृणुध्वम् ॥ अस्मिन् । सधस्थइतिसध-स्थे । अधीति । उत्तरस्मिन्नित्युत्-तरस्मिन् । विश्वे । देवाः । यजमानः । च । सीदत ॥ येन । सहस्रम् । वहसि । येन । अग्ने । सर्ववेदसमितिसर्व वेदसम् ॥ तेन । इमम् । यज्ञम् । नः । वह । देवयानइतिदेव-यानः । यः । [२७] उत्तमइत्युत्-तमः ॥ उदिति । बुध्यस्व । अग्ने । प्रतीति । जागृहि । एनम् । इष्टापूर्तेइतीष्टा-पूर्ते । समिति । सृजेथाम् । अयम् । च ॥ पुनः । कृण्वन् । त्वा । पितरम् । युवानम् । अन्वाताꣳसीदित्यनु-आताꣳसीत् । त्वयि । तन्तुम् । एतम् ॥ अयम् । ते । योनिः । ऋत्वियः । यतः । जातः । अरोचथाः ॥ तम् । जानन् । अग्ने । एति । रोह । अथ । नः । वर्द्धय । रयिम् ॥ [२८] ध्रुवस्सत्रङ्कृणुतेयस्सप्तत्रिꣳशच्च ॥ ❀ ❀ ॥ १३ ॥

मम । अग्ने । वर्चः । विहवेष्वितिवि-हवेषु । अस्तु । वयम् । त्वा । इन्धानाः । तनुवम् । पुषेम ॥ मह्यम् । नमन्ताम् । प्रदिशइतिप्र-दिशः । चतस्रः । त्वया । अध्यक्षेणेत्यधि-अक्षेण । पृतनाः । जयेम ॥ मम । देवाः । विहवइतिवि-हवे । सन्तु । सर्वे । इन्द्रावन्तइतीन्द्र-वन्तः । मरुतः । विष्णुः । अग्निः ॥ मम । अन्तरिक्षम् । उरु । गोपम् । अस्तु । मह्यम् । वातः । पवताम् । कामे । अस्मिन् ॥ मयि । देवाः । द्रविणम् । एति । यजन्ताम् । मयि । आशीरित्या-शीः । अस्तु । मयि । देवहूतिरितिदेव-हूतिः ॥ दैव्या । होतारा । वनिषन्त । [२९] पूर्वे । अरिष्टाः । स्याम । तनुवा । सुवीराइतिसु-वीराः ॥ मह्यम् । यजन्तु । मम । यानि । हव्या । आकूतिरित्या-कूतिः । सत्या । मनसः । मे । अस्तु ॥ एनः । मा । नीति । गाम् । कतमत् । चन । अहम् । विश्वे । देवासः । अधीति । वोचत । मे ॥ देवीः । षडुर्वीरितिषट्-उर्वीः । उरु । नः । कृणोत । विश्वे । देवासः । इह । वीरयध्वम् ॥ मा । हास्महि । प्रजयेतिप्र-

जया । मा । तनूभिः । मा । रधाम । द्विषते । सोम । राजन्न् ॥ अग्निः । मन्युम् । प्रतिनुदन्निति प्रति-नुदन्न् । पुरस्तात् । [३०] अदब्धः । गोपाइतिगो-पाः । परीति । पाहि । नः । त्वम् ॥ प्रत्यञ्चः । यन्तु । निगुतइतिनि-गुतः । पुनः । ते । अमा । एषाम् । चित्तम् । प्रबुधेतिप्र-बुधा । वीति । नेशत् ॥ धाता । धातृणाम् । भुवनस्य । यः । पतिः । देवम् । सवितारम् । अभिमातिषाहमित्यभिमाति-साहम् ॥ इमम् । यज्ञम् । अश्विना । उभा । बृहस्पतिः । देवाः । पान्तु । यजमानम् । न्यर्थादितिनि-अर्थात् ॥ उरुव्यचाइत्युरु-व्यचाः । नः । महिषः । शर्म । यꣳसत् । अस्मिन्न् । हवे । पुरुहूतइतिपुरु-हूतः । पुरुक्षु ॥ सः । नः । प्रजायाइतिप्र-जायै । हर्यश्वेतिहरि-अश्व । मृडय । इन्द्र । मा । [३१] नः । रीरिषः । मा । परेति । दाः ॥ ये । नः । सपत्नाः । अपेति । ते । भवन्तु । इन्द्राग्निभ्यामितीन्द्राग्नि-भ्याम् । अवेति । बाधामहे । तान् ॥ वसवः । रुद्राः । आदित्याः । उपरिस्पृशमित्युपरि-स्पृशम् । मा । उग्रम् । चेत्तारम् । अधिराजमित्यधि-राजम् । अक्रन्न् ॥ अर्वाञ्चम् । इन्द्रम् । अमुतः । हवामहे । यः । गोजिदितिगो-जित् । धनजिदितिधन-जित् । अश्वजिदित्यश्व-जित् । यः ॥ इमम् । नः । यज्ञम् । विहवइतिवि-हवे । जुषस्व । अस्य । कुर्मः । हरिवइतिहरि-वः । मेदिनम् । त्वा ॥ [३२] वनिषन्तपुरस्तान्मात्रिचत्वारिꣳशच्च ॥ ❀ ❀ ॥१४॥

अग्नेः । मन्वे । प्रथमस्य । प्रचेतसइतिप्र-चेतसः । यम् । पाञ्चजन्यमितिपाञ्च-जन्यम् । बहवः । समिन्धतइतिसं-इन्धते ॥ विश्वस्याम् । विशि । प्रविविशिवाꣳसमितिप्र-विविशिवाꣳसम् । ईमहे । सः । नः । मुञ्चतु । अꣳहसः ॥ यस्य । इदम् । प्राणदितिप्र-अनत् । निमिषदितिनि-मिषत् । यत् । एजति । यस्य । जातम् । जनमानम् । च । केवलम् ॥ स्तौमि । अग्निम् । नाथितः । जोहवीमि । सः । नः । मुञ्चतु । अꣳहसः ॥ इन्द्रस्य । मन्ये । प्रथमस्य । प्रचेतसइतिप्र-चेतसः । वृत्रघ्नइतिवृत्र-घ्नः । स्तोमाः । उपेति । माम् । उपागुरित्युप-आगुः ॥ यः । दाशुषः । सुकृतइतिसु-कृतः । हवम् । उपेति । गन्ता । [३३] सः । नः । मुञ्चतु । अꣳहसः ॥ यः । सङ्ग्राममितिसं-ग्रामम् । नयति । समिति । वशी । युधे । यः । पुष्टानि । सꣳसृजतीतिसं-सृजति । त्रयाणि ॥ स्तौमि । इन्द्रम् । नाथितः । जोहवीमि । सः । नः । मुञ्चतु । अꣳहसः ॥ मन्वे । वाम् । मित्रावरुणेतिमित्रा-वरुणा । तस्य । वित्तम् ।

सत्यौजसेतिसत्य-ओजसा । दृꣳहणा । यम् । नुदेथेइति ॥ या । राजानम् । सरथमितिस-रथम् । याथः । उग्रा । ता । नः । मुञ्चतम् । आगसः ॥ यः । वाम् । रथः । ऋजुरश्मिरित्यृजु-रश्मिः । सत्यधर्मेतिसत्य-धर्मा । मिथु । चरन्तम् । उपयातीत्युप-याति । दूषयन्न् ॥ स्तौमि । [३४] मित्रावरुणेतिमित्रा-वरुणा । नाथितः । जोहवीमि । तौ । नः । मुञ्चतम् । आगसः ॥ वायोः । सवितुः । विदथानि । मन्महे । यौ । आत्मन्वदित्यात्मन्न्-वत् । बिभृतः । यौ । च । रक्षतः ॥ यौ । विश्वस्य । परिभू इतिपरि-भू । बभूवतुः । तौ । नः । मुञ्चतम् । आगसः ॥ उपेति । श्रेष्ठाः । नः । आशिषइत्या-शिषः । देवयोः । धर्मे । अस्थिरन्न् ॥ स्तौमि । वायुम् । सवितारम् । नाथितः । जोहवीमि । तौ । नः । मुञ्चतम् । आगसः ॥ रथीतमावितिरथि-तमौ । रथीनाम् । अह्वे । ऊतये । शुभम् । गमिष्ठौ । सुयमेभिरितिसु-यमेभिः । अश्वैः ॥ ययोः । [३५] वाम् । देवौ । देवेषु । अनिशितमित्यनि-शितम् । ओजः । तौ । नः । मुञ्चतम् । आगसः ॥ यत् । अयातम् । वहतुम् । सूर्यायाः । त्रिचक्रेणेतित्रि-चक्रेण । सꣳसदमितिसं-सदम् । इच्छमानौ ॥ स्तौमि । देवौ । अश्विनौ । नाथितः । जोहवीमि । तौ । नः । मुञ्चतम् । आगसः ॥ मरुताम् । मन्वे । अधीति । नः । ब्रुवन्तु । प्रेति । इमाम् । वाचम् । विश्वाम् । अवन्तु । विश्वे ॥ आशून् । हुवे । सुयमानितिसु-यमान् । ऊतये । ते । नः । मुञ्चन्तु । एनसः ॥ तिग्मम् । आयुधम् । वीडितम् । सहस्वत् । दिव्यम् । शर्धः । [३६] पृतनासु । जिष्णु ॥ स्तौमि । देवान् । मरुतः । नाथितः । जोहवीमि । ते । नः । मुञ्चन्तु । एनसः ॥ देवानाम् । मन्वे । अधीति । नः । ब्रुवन्तु । प्रेति । इमाम् । वाचम् । विश्वाम् । अवन्तु । विश्वे ॥ आशून् । हुवे । सुयमानितिसु-यमान् । ऊतये । ते । नः । मुञ्चन्तु । एनसः ॥ यत् । इदम् । मा । अभिशोचतीत्यभि-शोचति । पौरुषेयेण । दैव्येन ॥ स्तौमि । विश्वान् । देवान् । नाथितः । जोहवीमि । ते । नः । मुञ्चन्तु । एनसः ॥ अन्विति । नः । अद्य । अनुमतिरित्यनु-मतिः । अन्विति । [३७] इत् । अनुमतइत्यनु-मते । त्वम् । वैश्वानरः । नः । ऊत्या । पृष्टः । दिवि ॥ येइति । अप्रथेताम् । अमितेभिः । ओजोभिरित्योजः-भिः । येइति । प्रतिष्ठेइतिप्रति-स्थे । अभवताम् । वसूनाम् ॥ स्तौमि । द्यावापृथिवीइतिद्यावा-पृथिवी । नाथितः । जोहवीमि । तेइति । नः । मुञ्चतम् । अꣳहसः ॥

उर्वीइति । गेढसीइति । वरिवः । कृणोतम् । क्षेत्रस्य । पत्नीइति । अधीति । नः । ब्रूयातम् ॥ स्तौमि । द्यावापृथिवीइति द्यावा-पृथिवी । नाथितः । जोहवीमि । तेइति । नः । मुञ्चतम् । अꣳहसः ॥ यत् । ते । वयम् । पुरुषत्रेति पुरुष-त्रा । यविष्ठ । अविद्वाꣳसः । चकृम । कत् । चन । [३८] आगः ॥ कृधि । स्विति । अस्मान् । अदितेः । अनागाः । वीति । एनाꣳसि । शिश्रथः । विष्वक् । अग्ने ॥ यथा । ह । तत् । वसवः । गौर्यम् । चित् । पदि । सिताम् । अमुञ्चत । यजत्राः ॥ एव । त्वम् । अस्मत् । प्रेति । मुञ्च । वीति । अꣳहः । प्रेति । अतारि । अग्ने । प्रतरामिति प्र-तराम् । नः । आयुः ॥ [३९] गन्तादूषयन्थ्स्तौमियद्योशश्चर्द्वोऽनुमतिरनुचनचतुस्त्रिꣳशच्च ॥ १५ ॥

अग्नेमन्वेयस्येदमिन्द्रस्ययस्सङ्ग्राममिन्द्रꣳ सनोमुञ्चत्वꣳहसः । मन्वेवान्तानो मुञ्चतमागसः । योवाꣳ्वायोरुपरथीतमौयदयातमश्विनौतौनोमुञ्चतमागसः । मरुतान्तिग्मम्मरुतोदेवानाय्यदिदव्विश्वान्तेनोमुञ्चन्त्वेनसः । अनुनउर्वीद्यावापृथिवी तेनोमुञ्चतमꣳहसोयत्ते ॥ ❀ ❀ ❀ ॥

अग्नाविष्णूज्यैष्ठ्यꣳ शश्चोर्क्चाश्माचाग्निश्चाꣳशुश्चेध्मश्चाग्निश्चघर्मोगर्भाश्चैकाचवाजोनोअग्निय्युनज्मिममाग्नेअग्नेमन्वेपञ्चदश ॥ १५ ॥ अग्नाविष्णूअग्निश्चवाजोनोअदब्धोगोपानवत्रिꣳशत् ॥ ३९ ॥ अग्नाविष्णूप्रतरान्नआयुः ॥ ❀

हरिः ओ (३) म् ॥

इति चतुर्थकाण्डे सप्तमः प्रश्नः ॥

तैत्तिरीयसंहितापदपाठे चतुर्थकाण्डस्समाप्तः ॥

## — ❀ चतुर्थकाण्डस्य प्रश्नादिसङ्ख्यानिर्णयः ❀ —

| प्रश्नाः | अनुवाकाः | पञ्चाशतः | पदानि |
|---|---|---|---|
| १ | ११ | ४६ | २२९३ |
| २ | ११ | ४८ | २४९८ |
| ३ | १३ | ३६ | १८४४ |
| ४ | १२ | ३७ | १८८७ |
| ५ | ११ | २७ | १२३४ |
| ६ | ९ | ४६ | २३२१ |
| ७ | १५ | ३९ | २००८ |

## — ❀ संहतसङ्ख्या ❀ —

| | | | |
|---|---|---|---|
| ७ | ८२ | २७९ | १४०९५ |

श्रीः॥

# तैत्तिरीयसंहितापदपाठे

## पञ्चमकाण्डे प्रथमः प्रश्नः ॥

हरिः ओ (४) म् ॥

सावित्राणि । जुहोति । प्रसूत्याइतिप्र-सूत्यै । चतुर्गृहीतेनेतिचतुः-गृहीतेन । जुहोति । चतुष्पादइतिचतुः-पादः । पशवः । पशून् । एव । अवेति । रुन्धे । चतस्रः । दिशः । दिक्षु । एव । प्रतीति । तिष्ठति । छन्दाꣳसि । देवेभ्यः । अपेति । अक्रामन्न् । न । वः । अभागानि । हव्यम् । वक्ष्यामः । इति । तेभ्यः । एतत् । चतुर्गृहीतमितिचतुः-गृहीतम् । अधारयन्न् । पुरोनुवाक्यायाइतिपुरः-अनुवाक्यायै । याज्यायै । देवतायै । वषट्कारायेतिवषट्-कारायं । यत् । चतुर्गृहीतमितिचतुः-गृहीतम् । जुहोति । छन्दाꣳसि । एव । तत् । प्रीणाति । तानि । अस्य । प्रीतानि । देवेभ्यः । हव्यम् । वहन्ति । यम् । कामयेत । [१] पापीयान् । स्यात् । इति । एकैकमित्येकं-एकम् । तस्य । जुहुयात् । आहुतीभिरित्याहुति-भिः । एव । एनम् । अवेति । गृह्णाति । पापीयान् । भवति । यम् । कामयेत । वसीयान् । स्यात् । इति । सर्वाणि । तस्य । अनुद्रुत्येत्यनु-द्रुत्य । जुहुयात् । आद्रुत्येत्या-द्रुत्या । एव । एनम् । अभीति । क्रमयति । वसीयान् । भवति । अथोइति । यज्ञस्य । एव । एषा । अभिक्रान्तिरित्यभि-क्रान्तिः । एति । वै । एषः । यज्ञमुखादितियज्ञ-मुखात् । ऋध्याः । यः । अग्नेः । देवतायाः । एति । अष्टौ । एतानि । सावित्राणि । भवन्ति । अष्टाक्षरेत्यष्टा-अक्षरा । गायत्री । गायत्रः [२] अग्निः । तेन । एव । यज्ञमुखादितियज्ञ-मुखात् । ऋध्याः । अग्नेः । देवतायै । न । एति । अष्टौ । सावित्राणि । भवन्ति । आहुतिरित्या-हुतिः । नवमी । त्रिवृतमितित्रि-वृतम् । एव । यज्ञमुखइतियज्ञ-मुखे । वीति । यातयति । यदि । कामयेत । छन्दाꣳसि । यज्ञयशसेनेतियज्ञ-यशसेन । अर्पयेयम् । इति । ऋचम् । अन्तमाम् । कुर्यात् । छन्दाꣳसि । एव । यज्ञयशसेनेतियज्ञ-यशसेन । अर्पयति । यदि । कामयेत । यजमानम् । यज्ञयशसेनेतियज्ञ-यशसेन । अर्पयेयम् । इति । यजुः । अन्तमम् । कुर्यात् । यजमानम् । एव । यज्ञयशसेनेतियज्ञ-

यशसेन । अर्पयति । ऋचा । स्तोमम् । समिति । अर्द्धय । इति । [३] आह । समृ ध्याइतिसं-ऋध्यै । चतुर्भिरितिचतुः-भिः । अभ्रिम् । एति । दत्ते । चत्वारि । छन्दाꣳसि । छन्दोभिरितिछन्दः-भिः । एव । देवस्य । त्वा । सवितुः । प्रसवइतिप्र-सवे । इति । आह । प्रसूत्याइतिप्र-सूत्यै । अग्निः । देवेभ्यः । निलायत । सः । वेणुम् । प्रेति । अवि शत् । सः । एताम् । ऊतिम् । अनु । समिति । अचरत् । यत् । वेणोः । सुषिरम् । सुषि रा । अग्निः । भवति । सयोनित्वायेतिसयोनि-त्वाय । सः । यत्रंयत्रेतियत्रं-यत्र । अवं सत् । तत् । कृष्णम् । अभवत् । कल्माषी । भवति । रूपसमृध्याइतिरूप-समृध्यै । उभयतःरुष्णूरित्युभयतः-रुष्णूः । भवति । इतः । च । अमुतः । च । अर्कस्य । अ वरुध्याइत्यव-रुध्यै । व्याममात्रीतिव्याम-मात्री । भवति । एतावत् । वै । पुरुषे । वी र्यम् । वीर्यसम्मितेतिवीर्य-सम्मिता । अपरिमितेत्यपरि-मिता । भवति । अपरिमित स्येत्यपरि-मितस्य । अवरुध्याइत्यव-रुध्यै । यः । वनस्पतीनाम् । फलग्रहिरितिफल-ग्रहिः । सः । एषाम् । वीर्यवानितिवीर्य-वान् । फलग्रहिरितिफल-ग्रहिः । वेणुः । वै णवी । भवति । वीर्यस्य । अवरुध्याइत्यव-रुध्यै ॥ [४] कामयेतगायत्रोऽर्धयेतिच सप्तविꣳशतिश्च ॥ ❀ ❀ ❀ ॥१॥

व्यृद्धमितिवि-ऋद्धम् । वै । एतत् । यज्ञस्य । यत् । अयजुष्केणेत्ययजुः-केन । क्रियते । इमाम् । अगृभ्णन् । रशनाम् । ऋतस्य । इति । अश्वाभिधानीमित्यश्व-अभिधानीम् । एति । दत्ते । यजुष्कृत्याइतियजुः-कृत्यै । यज्ञस्य । समृध्याइतिसं-ऋध्यै । प्रतूर्तमितिप्र-तूर्तम् । वाजिन् । एति । द्रव । इति । अश्वम् । अभीति । दधाति । रूपम् । एव । अस्य । एतत् । महिमानम् । व्याचष्टइतिवि-आचष्टे । युञ्जा थाम् । रासभम् । युवम् । इति । गर्दभम् । असति । एव । गर्दभम् । प्रतीति । स्था पयति । तस्मात् । अश्वात् । गर्दभः । असत्तरइत्यसत्-तरः । योगेयोगइतियोगे-यो गे । तवस्तरमितितवः-तरम् । इति । आह । [५] योगेयोगइतियोगे-योगे । एव । एनम् । युङ्क्ते । वाजेवाजइतिवाजे-वाजे । हवामहे । इति । आह । अन्नम् । वै । वाजः । अन्नम् । एव । अवेति । रुन्धे । सखायः । इन्द्रम् । ऊतये । इति । आह । इन्द्रियम् । एव । अवेति । रुन्धे । अग्निः । देवेभ्यः । निलायत । तम् । प्रजापति रितिप्रजा-पतिः । अन्विति । अविन्दत् । प्राजापत्यइतिप्राजा-पत्यः । अश्वः । अ

श्वेन । समिति । भरति । अनुवित्त्याइत्यनु-वित्त्यै । पापवस्यसमितिपाप-वस्यसम् ।
वै । एतत् । क्रियते । यत् । श्रेयसा । च । पापीयसा । च । समानम् । कर्म । कुर्व
न्ति । पापीयान् । [६] हि । अश्वात् । गर्दभः । अश्वम् । पूर्वम् । नयन्ति । पापवस्य
सस्येतिपाप-वस्यसस्य । व्यावृत्त्याइतिवि-आवृत्त्यै । तस्मात् । श्रेयाꣳसम् । पापी
यान् । पश्चात् । अन्विति । एति । बहुः । वै । भवतः । भ्रातृव्यः । भवति । इव ।
खलु । वै । एषः । यः । अग्निम् । चिनुते । वज्री । अश्वः । प्रतूर्वन्नितिप्र-तूर्वन् ।
एति । इहि । अवक्रामन्नित्यव-क्रामन् । अशस्तीः । इति । आह । वज्रेण । एव ।
पाप्मानम् । भ्रातृव्यम् । अवेति । क्रामति । रुद्रस्य । गाणपत्यादितिगाण-पत्यात् ।
इति । आह । रौद्राः । वै । पशवः । रुद्रात् । एव । [७] पशून् । निर्याच्येतिनिः-
याच्य । आत्मने । कर्म । कुरुते । पूष्णा । सयुजेतिस-युजा । सह । इति । आह ।
पूषा । वै । अध्वनाम् । सन्नेतेतिसं-नेता । समष्ट्याइतिसं-अष्ट्यै । पुरीषायतनइति
पुरीष-आयतनः । वै । एषः । यत् । अग्निः । अङ्गिरसः । वै । एतम् । अग्रे । देव
तानाम् । समिति । अभरन् । पृथिव्याः । सधस्थादितिसध-स्थात् । अग्निम् । पुरी
ष्यम् । अङ्गिरस्वत् । अच्छ । इहि । इति । आह । सायतनमितिस-आयतनम् ।
एव । एनम् । देवताभिः । समिति । भरति । अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । अ
च्छ । इमः । इति । आह । येन । [८] सङ्गच्छतइतिसं-गच्छते । वाजम् । एव ।
अस्य । वृङ्क्ते । प्रजापतयइतिप्रजा-पतये । प्रतिप्रोच्येतिप्रति-प्रोच्य । अग्निः । स
म्भृत्यइतिसं-भृत्यः । इति । आहुः । इयम् । वै । प्रजापतिरितिप्रजा-पतिः । तस्याः ।
एतत् । श्रोत्रम् । यत् । वल्मीकः । अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । भरिष्यामः ।
इति । वल्मीकवपामितिवल्मीक-वपाम् । उपेति । तिष्ठते । साख्यादितिस-अख्यात् ।
एव । प्रजापतयइतिप्रजा-पतये । प्रतिप्रोच्येतिप्रति-प्रोच्य । अग्निम् । समिति । भ
रति । अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । भरामः । इति । आह । येन । सङ्गच्छतइति
सं-गच्छते । वाजम् । एव । अस्य । वृङ्क्ते । अन्विति । अग्निः । उषसाम् । अ
ग्रम् । [९] अख्यत् । इति । आह । अनुख्यात्याइत्यनु-ख्यात्यै । आगत्येत्या-गत्य ।
वाजी । अध्वनः । आक्रम्येत्या-क्रम्य । वाजिन् । पृथिवीम् । इति । आह । इच्छति ।
एव । एनम् । पूर्वया । विन्दति । उत्तरयेत्युत्-तरया । द्वाभ्याम् । एति । क्रमयति ।

प्रतिष्ठित्याइतिप्रति-स्थित्यै । अनुरूपाभ्यामित्यनु-रूपाभ्याम् । तस्मात् । अनुरूपा इत्यनु-रूपाः । पशवः । प्रेति । जायन्ते । द्यौः । ते । पृष्ठम् । पृथिवी । सधस्थमिति सध-स्थम् । इति । आह । एभ्यः । वै । एतम् । लोकेभ्यः । प्रजापतिरितिप्रजा-पतिः । समिति । ऐरयत् । रूपम् । एव । अस्य । एतत् । महिमानम् । व्याचष्टइतिवि-आ चष्टे । वज्री । वै । एषः । यत् । अश्वः । दद्भिरितिदत्-भिः । अन्यतोदद्भ्यइत्यन्य तोदत्-भ्यः । भूयान् । लोमभिरितिलोम-भिः । उभयादद्भ्यइत्युभयादत्-भ्यः । यम् । द्विष्यात् । तम् । अधस्पदमित्यधः-पदम् । ध्यायेत् । वज्रेण । एव । एनम् । स्तृणु ते ॥ [१०] आहपापीयान्नुद्रादेवयेनाग्रँव्वज्रीवैसप्तदशच ॥ ❀ ॥२॥

उदिति । क्राम । उदिति । अक्रमीत् । इति । द्वाभ्याम् । उदिति । क्रमय ति । प्रतिष्ठित्याइतिप्रति-स्थित्यै । अनुरूपाभ्यामित्यनु-रूपाभ्याम् । तस्मात् । अनु रूपाइत्यनु-रूपाः । पशवः । प्रेति । जायन्ते । अपः । उपेति । सृजति । यत्र । वै । आपः । उपगच्छन्तीत्युप-गच्छन्ति । तत् । ओषधयः । प्रतीति । तिष्ठन्ति । ओ षधीः । प्रतितिष्ठन्तीरितिप्रति-तिष्ठन्तीः । पशवः । अनु । प्रतीति । तिष्ठन्ति । पशून् । यज्ञः । यज्ञम् । यजमानः । यजमानम् । प्रजाइतिप्र-जाः । तस्मात् । अपः । उपेति । सृजति । प्रतिष्ठित्याइतिप्रति-स्थित्यै । यत् । अध्वर्युः । अनग्नौ । आहुतिमित्या-हुतिम् । जुहुयात् । अन्धः । अध्वर्युः । [११] स्यात् । रक्षाꣳसि । यज्ञम् । हन्युः । हिरण्यम् । उपास्येत्युप-अस्य । जुहोति । अग्निवतीत्यग्नि-वति । एव । जुहोति । न । अन्धः । अध्वर्युः । भवति । न । यज्ञम् । रक्षाꣳसि । घ्नन्ति । जिघर्मि । अग्निम् । मनसा । घृतेन । इति । आह । मनसा । हि । पुरुषः । यज्ञम् । अभिगच्छतीत्यभि-गच्छति । प्रतिरूप्यन्तमितिप्रति-रूप्यन्तम् । भुवनानि । विश्वा । इति । आह । स वैम् । हि । एषः । प्रत्यङ् । रक्षेति । पृथुम् । तिरश्चा । वयसा । बृहन्तम् । इति । आह । अल्पः । हि । एषः । जातः । महान् । [१२] भवति । व्यचिष्ठम् । अन्नम् । रभसम् । विदानम् । इति । आह । अन्नम् । एव । अस्मै । स्वदयति । सर्वम् । अ स्मै । स्वदते । यः । एवम् । वेद । एति । त्वा । जिघर्मि । वचसा । घृतेन । इति । आह । तस्मात् । यत् । पुरुषः । मनसा । अभिगच्छतीत्यभि-गच्छति । तत् । वाचा । वदति । अरक्षसा । इति । आह । रक्षसाम् । अपहत्याइत्यप-हत्यै । मयिश्रीरिति

मर्यं-श्रीः । स्पृहयद्वंर्णइतिस्पृहयत्-वर्णः । अग्निः । इति । आह । अपचितिमित्यप-चितिम् । एव । अस्मिन्न् । दधाति । अपंचितिमानित्यपंचिति-मान् । भवति । यः एवम् । [१३] वेदं । मनंसा । तु । वै । ताम् । आप्तुम् । अर् इति । याम् । अध्वर्युः । अनग्नौ । आहुंतिमित्या-हुतिम् । जुहोतिं । मनंस्वतीभ्याम् । जुहोति । आहुंत्यो रित्या-हुत्योः । आप्त्यैं । द्वाभ्याम् । प्रतिष्ठित्याइतिप्रतिं-स्थित्यै । यज्ञमुखेयंज्ञमुख इतियज्ञमुखे-यज्ञमुखे । वै । क्रियमाणे । यज्ञम् । रक्षाꣳसि । जिघाꣳसन्ति । एतर् हिं । खलुं । वै । एतत् । यज्ञमुखमितियज्ञ-मुखम् । यर् हिं । एनत् । आहुंतिरित्या-हुतिः । अश्नुते । परीतिं । लिखति । रक्ष॑साम् । अपंहत्याइत्यपं-हत्यै । तिसृभिरि तितिसृ-भिः । परीतिं । लिखति । त्रिवृदितित्रि-वृत् । वै । अग्निः । यावान् । एव । अग्निः । तस्मा॑त् । रक्षाꣳसि । अपेतिं । हन्ति । [१४] गायत्रिया । परीतिं । लि खति । तेजंः । वै । गायत्री । तेजंसा । एव । एनम् । परीतिं । गृह्णाति । त्रिष्टुभा । परीतिं । लिखति । इन्द्रियम् । वै । त्रिष्टुक् । इन्द्रियेणं । एव । एनम् । परीतिं । गृ ह्णाति । अनुष्टुभेत्यंनु-स्तुभा । परीतिं । लिखति । अनुष्टुबित्यंनु-स्तुप् । सर्वाणि । छन्दाꣳसि । परिभू रितिपरि-भूः । पर्याप्त्याइतिपरिं-आप्त्यै । मध्यतः । अनुष्टुभेत्यं नु-स्तुभा । वाक् । वै । अनुष्टुबित्यंनु-स्तुप् । तस्मात् । मध्यतः । वाचा । वदामः । गायत्रिया । प्रथमया । परीतिं । लिखति । अथं । अनुष्टुभेत्यंनु-स्तुभा । अथं । त्रि ष्टुभा । तेजंः । वै । गायत्री । यज्ञः । अनुष्टुगित्यंनु-स्तुक् । इन्द्रियम् । त्रिष्टुप् । ते जंसा । च । एव । इन्द्रियेणं । च । उभयतंः । यज्ञम् । परीतिं । गृह्णाति ॥ [१५]

अन्धोऽध्वर्युर्महान्भंवतियएवꣳ हन्तित्रिष्टुभातेजोवैगायत्रीत्रयोदशच ॥ ॥३॥

देवस्यं । त्वा । सवितुः । प्रसवइतिप्र-सवे । इतिं । खनति । प्रसूत्याइतिप्र-सूत्यै । अथोइतिं । धूमम् । एव । एतेनं । जनयति । ज्योतिष्मन्तम् । त्वा । अग्ने । सुप्रतीकमितिसु-प्रतीकम् । इतिं । आह । ज्योतिः । एव । एतेनं । जनयति । सः । अग्निः । जातः । प्रजाइतिप्र-जाः । शुचा । आर्पयत् । तम् । देवाः । अर्धर्चेनेत्यर्ध-ऋचेनं । अशमयन्न् । शिवम् । प्रजाभ्यइतिप्र-जाभ्यंः । अहिꣳसन्तम् । इतिं । आह । प्रजाभ्यइतिप्र-जाभ्यंः । एव । एनम् । शमयति । द्वाभ्याम् । खनति । प्र तिष्ठित्याइतिप्रतिं-स्थित्यै । अपाम् । पृष्ठम् । असि । इतिं । पुष्करपर्णमितिपुष्कर-

पर्णम् । एतिं । [१६] हरति । अपाम् । वै । एतत् । पृष्ठम् । यत् । पुष्करपर्णमितिं पुष्कर-पर्णम् । रूपेणं । एव । एनत् । एतिं । हरति । पुष्करपर्णेनेतिंपुष्कर-पर्णेनं । समितिं । भरति । योनिः । वै । अग्नेः । पुष्करपर्णमितिंपुष्कर-पर्णम् । सयोनिमिति स-योनिम् । एव । अग्निम् । समितिं । भरति । कृष्णाजिनेनेतिंकृष्ण-अजिनेनं । समितिं । भरति । यज्ञः । वै । कृष्णाजिनमितिंकृष्ण-अजिनम् । यज्ञेनं । एव । यज्ञम् । समितिं । भरति । यत् । ग्राम्याणाम् । पशूनाम् । चर्मणा । सम्भरेदितिंसं-भरेत् । ग्राम्यान् । पशून् । शुचा । अर्पयेत् । कृष्णाजिनेनेतिंकृष्ण-अजिनेनं । समिति । भरति । आरण्यान् । एव । पशून् । [१७] शुचा । अर्पयति । तस्मात् । समावत् । पशूनाम् । प्रजायमानानामितिप्र-जायमानानाम् । आरण्याः । पशवः । कनीयांसः । शुचा । हि । ऋताः । लोमतः । समितिं । भरति । अतः । हि । अस्य । मेध्यम् । कृष्णाजिनमितिंकृष्ण-अजिनम् । च । पुष्करपर्णमितिंपुष्कर-पर्णम् । च । समितिं । स्तृणाति । इयम् । वै । कृष्णाजिनमितिंकृष्ण-अजिनम् । असौ । पुष्करपर्णमितिंपुष्कर-पर्णम् । आभ्याम् । एव । एनम् । उभयतः । परीतिं । गृह्णाति । अग्निः । देवेभ्यः । निलायत । तम् । अथर्वा । अन्वितिं । अपश्यत् । अथर्वा । त्वा । प्रथमः । निरितिं । अमन्थत् । अग्ने । इतिं । [१८] आह । यः । एव । एनम् । अन्वपश्यदित्यंनु-अपश्यत् । तेनं । एव । एनम् । समितिं । भरति । त्वाम् । अग्ने । पुष्करात् । अधीतिं । इतिं । आह । पुष्करपर्णइतिंपुष्कर-पर्णे । हि । एनम् । उपश्रितमित्युप-श्रितम् । अविन्दत् । तम् । उ । त्वा । दध्यङ् । ऋषिः । इतिं । आह । दध्यङ् । वै । आथर्वणः । तेजस्वी । आसीत् । तेजः । एव । अस्मिन् । दधाति । तम् । उ । त्वा । पाथ्यः । वृषा । इतिं । आह । पूर्वम् । एव । उदितम् । उत्तरेणेत्युत-तरेण । अभीतिं । गृणाति । [१९] चतसृभिरितिचतसृ-भिः । समितिं । भरति । चत्वारि । छन्दांसि । छन्दोभिरितिछन्दः-भिः । एव । गायत्रीभिः । ब्राह्मणस्य । गायत्रः । हि । ब्राह्मणः । त्रिष्टुग्भिरितित्रिष्टुक्-भिः । राजन्यस्य । त्रैष्टुभः । हि । राजन्यः । यम् । कामयेत । वसीयान् । स्यात् । इतिं । उभयीभिः । तस्य । समितिं । भरेत् । तेजः । च । एव । अस्मै । इन्द्रियम् । च । समीचीइतिं । दधाति । अष्टाभिः । समितिं । भरति । अष्टाक्षरेत्यष्टा-अक्षरा । गायत्री । गायत्रः । अग्निः । यावान् ।

एव । अग्निः । तम् । समिति । भरति । सीद । होतः । इति । आह । देवताः । एव । अस्मै । समिति । सादयति । नीति । होता । इति । मनुष्यान् । समिति । सीदस्व । इति । वयाꣳसि । जनिष्व । हि । जेन्यः । अग्रे । अह्नाम् । इति । आह । देवमनुष्यानितिदेव-मनुष्यान् । एव । अस्मै । सꣳसन्नानितिसं-सन्नान् । प्रेति । जनयति ॥ [२०] ऐवपशूनितिगृणातिहोतरितिसप्तविꣳशतिश्च ॥ ❀ ॥४॥

क्रूरम् । इव । वै । अस्याः । एतत् । करोति । यत् । खनति । अपः । उपेति । सृजति । आपः । वै । शान्ताः । शान्ताभिः । एव । अस्यै । शुचम् । शमयति । समिति । ते । वायुः । मातरिश्वा । दधातु । इति । आह । प्राणइतिप्र-अनः । वै । वायुः । प्राणेनेतिप्र-अनेन । एव । अस्यै । प्राणमितिप्र-अनम् । समिति । दधाति । समिति । ते । वायुः । इति । आह । तस्मात् । वायुप्रच्युतेतिवायु-प्रच्युता । दिवः । वृष्टिः । ईर्ते । तस्मै । च । देवि । वषट् । अस्तु । [२१] तुभ्यम् । इति । आह । षट् । वै । ऋतवः । ऋतुषु । एव । वृष्टिम् । दधाति । तस्मात् । सर्वान् । ऋतून् । वर्षति । यत् । वषट्कुर्यादितिवषट्-कुर्यात् । यातयामेतियात-यामा । अस्य । वषट्कारइतिवषट्-कारः । स्यात् । यत् । न । वषट्कुर्यादितिवषट्-कुर्यात् । रक्षाꣳसि । यज्ञम् । हन्युः । वट् । इति । आह । परोक्षमितिपरः-अक्षम् । एव । वषट् । करोति । न । अस्य । यातयामेतियात-यामा । वषट्कारइतिवषट्-कारः । भवति । न । यज्ञम् । रक्षाꣳसि । घ्नन्ति । सुजातइतिसु-जातः । ज्योतिषा । सह । इति । अनुष्टुभेत्यनु-स्तुभा । उपेति । नह्यति । अनुष्टुबित्यनु-स्तुप् । [२२] सर्वाणि । छन्दाꣳसि । छन्दाꣳसि । खलु । वै । अग्नेः । प्रिया । तनूः । प्रियया । एव । एनम् । तनुवा । परीति । दधाति । वेदुकः । वासः । भवति । यः । एवम् । वेद । वारुणः । वै । अग्निः । उपनद्धइत्युप-नद्धः । उदिति । उ । तिष्ठ । स्वध्वरेतिसु-अध्वर । ऊर्ध्वः । उ । स्विति । नः । ऊतये । इति । सावित्रीभ्याम् । उदिति । तिष्ठति । सवितृप्रसूतइतिसवितृ-प्रसूतः । एव । अस्य । ऊर्ध्वाम् । वरुणमेनिमितिवरुण-मेनिम् । उदिति । सृजति । द्वाभ्याम् । प्रतिष्ठित्याइतिप्रति-स्थित्यै । सः । जातः । गर्भः । असि । [२३] रोदस्योः । इति । आह । इमेइति । वै । रोदसीइति । तयोः । एषः । गर्भः । यत् । अग्निः । तस्मात् । एवम् । आह । अग्ने । चारुः । विभृतइतिवि-भृतः । ओषधीषु ।

इति । आह । यदा । हि । एतम् । विभरन्तीतिवि-भरन्ति । अथ । चारुतरइतिचारु-तरः । भवति । प्रेति । मातृभ्यइतिमातृ-भ्यः । अधीति । कनिक्रदत् । गाः । इति । आह । ओषधयः । वै । अस्य । मातरः । ताभ्यः । एव । एनम् । प्रेति । च्यावयति । स्थिरः । भव । वीड्वङ्गइतिवीडु-अङ्गः । इति । गर्दभे । एति । सादयति । [२४] समिति । नह्यति । एव । एनम् । एतया । स्थेम्ने । गर्दभेन । समिति । भरति । तस्मात् । गर्दभः । पशूनाम् । भारभारितमइतिभारभारि-तमः । गर्दभेन । समिति । भरति । तस्मात् । गर्दभः । अपीति । अनालेशइत्यना-लेशे । अतीति । अन्यान् । पशून् । मेद्यति । अन्नम् । हि । एनेन । अर्कम् । सम्भरन्तीतिसं-भरन्ति । गर्दभेन । समिति । भरति । तस्मात् । गर्दभः । द्विरेताइतिद्वि-रेताः । सन्न् । कनिष्ठम् । पशूनाम् । प्रेति । जायते । अग्निः । हि । अस्य । योनिम् । निर्दहतीतिनिः-दहति । प्रजास्वितिप्र-जासु । वै । एषः । एतर्हि । आरूढइत्या-रूढः । [२५] सः । ईश्वरः । प्रजाइतिप्र-जाः । शुचा । प्रदहइतिप्र-दहः । शिवः । भव । प्रजाभ्यइतिप्र-जाभ्यः । इति । आह । प्रजाभ्यइतिप्र -जाभ्यः । एव । एनम् । शमयति । मानुषीभ्यः । त्वम् । अङ्गिरः । इति । आह । मानव्यः । हि । प्रजाइतिप्र-जाः । मा । द्यावापृथिवीइतिद्यावा पृथिवी । अभीति । शूशुचः । मा । अन्तरिक्षम् । मा । वनस्पतीन् । इति । आह । एभ्यः । एव । एनम् । लोकेभ्यः । शमयति । प्रेति । एतु । वाजी । कनिक्रदत् । इति । आह । वाजी । हि । एषः । नानदत् । रासभः । पत्वा । इति । [२६] आह । रासभः । इति । हि । एतम् । ऋषयः । अवदन्न् । भरन्न् । अग्निम् । पुरीष्यम् । इति । आह । अग्निम् । हि । एषः । भरति । मा । पादि । आयुषः । पुरा । इति । आह । आयुः । एव । अस्मिन्न् । दधाति । तस्मात् । गर्दभः । सर्वम् । आयुः । एति । तस्मात् । गर्दभे । पुरा । आयुषः । प्रमीतइतिप्र-मीते । बिभ्यति । वृषा । अग्निम् । वृषणम् । भरन्न् । इति । आह । वृषा । हि । एषः । वृषा । अग्निः । अपाम् । गर्भम् । [२७] समुद्रियम् । इति । आह । अपाम् । हि । एषः । गर्भः । यत् । अग्निः । अग्ने । एति । याहि । वीतये । इति । वै । इमौ । लोकौ । वीति । एताम् । अग्ने । एति । याहि । वीतये । इति । यत् । आह । अनयोः । लोकयोः । वीत्याइतिवि-इत्यै । प्रच्युतइतिप्र-च्युतः । वै । एषः । आयतनादित्या-यतनात् । अगतः । प्रतिष्ठामिति

प्रति-स्थाम् । सः । एतर्हि । अध्वर्युम् । च । यजमानम् । च । ध्यायति । ऋतम् । सत्यम् । इति । आह । इयम् । वै । ऋतम् । असौ । [२८] सत्यम् । अनयोः । एव । एनम् । प्रतीति । स्थापयति । न । आर्तिम् । एति । ऋच्छति । अध्वर्युः । न । यजमानः । वरुणः । वै । एषः । यजमानम् । अभि । एति । एति । यत् । अग्निः । उपनद्धइत्युप-नद्धः । ओषधयः । प्रतीति । गृह्णीत । अग्निम् । एतम् । इति । आह । शान्त्यै । व्यस्यन्निति वि-अस्यन् । विश्वाः । अमतीः । अरातीः । इति । आह । रक्षसाम् । अपहत्याइत्यप-हत्यै । निषीदन्निति नि-सीदन् । नः । अपेति । दुर्मतिमिति दुः-मतिम् । हनत् । इति । आह । प्रतिष्ठित्याइतिप्रति-स्थित्यै । ओषधयः । प्रतीति । मोदध्वम् । [२९] एनम् । इति । आह । ओषधयः । वै । अग्नेः । भागधेयमितिभाग-धेयम् । ताभिः । एव । एनम् । समिति । अर्धयति । पुष्पावतीरितिपुष्प-वतीः । सुपिप्पलाइतिसु-पिप्पलाः । इति । आह । तस्मात् । ओषधयः । फलम् । गृह्णन्ति । अयम् । वः । गर्भः । ऋत्वियः । प्रत्नम् । सधस्थमितिसध-स्थम् । एति । असदत् । इति । आह । याभ्यः । एव । एनम् । प्रच्यावयतीतिप्र-च्यावयति । तासु । एव । एनम् । प्रतीति । स्थापयति । द्वाभ्याम् । उपावहरतीत्युप-अवहरति । प्रतिष्ठित्या इतिप्रति-स्थित्यै ॥ [३०] अस्त्वनुष्टुबसि सादयत्यारूढः पत्वेतिगर्भमसौ मोदध्वन्द्विचत्वारिꣳशच्च ॥ ❀ ❀ ❀ ❀ ❀ ॥५॥

वारुणः । वै । अग्निः । उपनद्धइत्युप-नद्धः । वीति । पाजसा । इति । वीति । सृꣳसयति । सवितृप्रसूतइतिसवितृ-प्रसूतः । एव । अस्य । विषूचीम् । वरुणमेनिमितिवरुण-मेनिम् । वीति । सृजति । अपः । उपेति । सृजति । आपः । वै । शान्ताः । शान्ताभिः । एव । अस्य । शुचम् । शमयति । तिसृभिरितितिसृ-भिः । उपेति । सृजति । त्रिवृदितित्रि-वृत् । वै । अग्निः । यावान् । एव । अग्निः । तस्य । शुचम् । शमयति । मित्रः । सꣳसृज्येतिसं-सृज्य । पृथिवीम् । इति । आह । मित्रः । वै । शिवः । देवानाम् । तेन । एव । [३१] एनम् । समिति । सृजति । शान्त्यै । यत् । ग्राम्याणाम् । पात्राणाम् । कपालैः । सꣳसृजेदितिसं-सृजेत् । ग्राम्याणि । पात्राणि । शुचा । अर्पयेत् । अर्मकपालैरित्यर्म-कपालैः । समिति । सृजति । एतानि । वै । अनुपजीवनीयानीत्यनुप-जीवनीयानि । तानि । एव । शुचा । अर्पयति । शर्कराभिः । स

मिति । सृजति । धृत्यै । अथोइति । शन्त्वायेतिशं-त्वाय । अजलोमैरित्यंज-लोमैः । समिति । सृजति । एषा । वै । अग्नेः । प्रिया । तनूः । यत् । अजा । प्रियया । एव । एनम् । तनुवा । समिति । सृजति । अथोइति । तेजसा । कृष्णाजिनस्येतिकृष्ण-अजिनस्य । लोमभिरितिलोम-भिः । समिति । [३२] सृजति । यज्ञः । वै । कृष्णाजिनमितिकृष्ण-अजिनम् । यज्ञेन । एव । यज्ञम् । समिति । सृजति । रुद्राः । सम्भृत्येतिसं-भृत्य । पृथिवीम् । इति । आह । एताः । वै । एतम् । देवताः । अग्रे । समिति । अभरन् । ताभिः । एव । एनम् । समिति । भरति । मखस्य । शिरः । असि । इति । आह । यज्ञः । वै । मखः । तस्य । एतत् । शिरः । यत् । उखा । तस्मात् । एवम् । आह । यज्ञस्य । पदेइति । स्थः । इति । आह । यज्ञस्य । हि । एतेइति । [३३] पदेइति । अथोइति । प्रतिष्ठित्याइतिप्रति-स्थित्यै । प्रेति । अन्याभिः । यच्छति । अन्विति । अन्यैः । मन्त्रयते । मिथुनत्वायेतिमिथुन-त्वाय । त्र्युद्धिमितित्रि-उद्धिम् । करोति । त्रयः । इमे । लोकाः । एषाम् । लोकानाम् । आप्त्यै । छन्दोभिरितिछन्दः-भिः । करोति । वीर्यम् । वै । छन्दांसि । वीर्येण । एव । एनाम् । करोति । यजुषा । बिलम् । करोति । व्यावृत्त्याइतिवि-आवृत्त्यै । इयतीम् । करोति । प्रजापतिनेतिप्रजा-पतिना । यज्ञमुखेनेतियज्ञ-मुखेन । सम्मितामितिसं-मिताम् । द्विस्तनामितिद्वि-स्तनाम् । करोति । द्यावापृथिव्योरितिद्यावा-पृथिव्योः । दोहाय । चतुस्तनामितिचतुः-स्तनाम् । करोति । पशूनाम् । दोहाय । अष्टास्तनामित्यष्टा-स्तनाम् । करोति । छन्दसाम् । दोहाय । नवाश्रिमितिनव-अश्रिम् । अभिचरतइत्यभि-चरतः । कुर्यात् । त्रिवृतमितित्रि-वृतम् । एव । वज्रम् । सम्भृत्येतिसं-भृत्य । भ्रातृव्याय । प्रेति । हरति । स्तृत्यै । कृत्वाय । सा । महीम् । उखाम् । इति । नीति । दधाति । देवतासु । एव । एनाम् । प्रतीति । स्थापयति ॥ [३४] तेनैवलोमभिस्समेतेअभिचरतएकंविंशतिश्च ॥ ❀ ❀ ❀ ❀ ॥ ६ ॥

सप्तभिरितिसप्त-भिः । धूपयति । सप्त । वै । शीर्षण्याः । प्राणाइतिप्र-अनाः । शिरः । एतत् । यज्ञस्य । यत् । उखा । शीर्षन् । एव । यज्ञस्य । प्राणानितिप्र-अनान् । दधाति । तस्मात् । सप्त । शीर्षन् । प्राणाइतिप्र-अनाः । अश्वशकेनेत्यश्व-शकेन । धूपयति । प्राजापत्यइतिप्राजा-पत्यः । वै । अश्वः । सयोनित्वायेतिस

योनि-त्वार्य । अदितिः । त्वा । इति । आह । इयम् । वै । अदितिः । अदित्या । एव । अदित्याम् । खनति । अस्याः । अक्रूरङ्कारायेत्यक्रूरं-काराय । न । हि । स्वः । स्वम् । हिनस्ति । देवानाम् । त्वा । पत्नीः । इति । आह । देवानाम् । [३५] वै । एताम् । पत्नयः । अग्रे । अकुर्वन्न् । ताभिः । एव । एनाम् । दधाति । धिषणाः । त्वा । इति । आह । विद्याः । वै । धिषणाः । विद्याभिः । एव । एनाम् । अभीति । इन्धे । ग्नाः । त्वा । इति । आह । छन्दाꣳसि । वै । ग्नाः । छन्दोभिरितिछन्दः-भिः । एव । एनाम् । श्रपयति । वरूत्रयः । त्वा । इति । आह । होत्राः । वै । वरूत्रयः । होत्रा भिः । एव । एनाम् । पचति । जनयः । त्वा । इति । आह । देवानाम् । वै । पत्नीः । [३६] जनयः । ताभिः । एव । एनाम् । पचति । षड्भिरितिषट्-भिः । पचति । षट् । वै । ऋतवः । ऋतुभिरित्यृतु-भिः । एव । एनाम् । पचति । द्विः । पचन्तु । इति । आह । तस्मात् । द्विः । सꣳवथ्सरस्येतिसं-वथ्सरस्य । सस्यम् । पच्यते । वारुणी । उखा । अभीद्धेत्यभि-इद्धा । मैत्रिया । उपेति । एति । शान्त्यै । देवः । त्वा । सवि ता । उदिति । वपतु । इति । आह । सवितृप्रसूत इतिसवितृ-प्रसूतः । एव । एनाम् । ब्रह्मणा । देवताभिः । उदिति । वपति । अपद्यमाना । पृथिवि । आशाः । दिशः । एति । पृण । [३७] इति । आह । तस्मात् । अग्निः । सर्वाः । दिशः । अनु । वीति । भाति । उदिति । तिष्ठ । बृहती । भव । ऊर्ध्वा । तिष्ठ । ध्रुवा । त्वम् । इति । आह । प्रतिष्ठित्याइतिप्रति-स्थित्यै । असुर्यम् । पात्रम् । अनाच्छृण्णमित्यना-छृण्णम् । एति । छृणत्ति । देवत्रेतिदेव-त्रा । अकः । अजक्षीरेणेत्यज-क्षीरेण । एति । छृण त्ति । परमम् । वै । एतत् । पयः । यत् । अजक्षीरमित्यज-क्षीरम् । परमेण । एव । एनाम् । पयसा । एति । छृणत्ति । यजुषा । व्यावृत्त्याइतिवि-आवृत्त्यै । छन्दोभि रितिछन्दः-भिः । एति । छृणत्ति । छन्दोभिरितिछन्दः-भिः । वै । एषा । क्रियते । छन्दोभिरितिछन्दः-भिः । एव । छन्दाꣳसि । एति । छृणत्ति ॥ [३८] आहदेवा नाꣳवैपत्नीःपृणैषाषट्च ॥ ❀ ❀ ❀ ❀ ॥७॥

एकविꣳशत्येत्येक-विꣳशत्या । माषैः । पुरुषशीर्षमितिपुरुष-शीर्षम् । अच्छ । एति । अमेध्याः । वै । माषाः । अमेध्यम् । पुरुषशीर्षमितिपुरुष-शीर्षम् । अमेध्यैः । एव । अस्य । अमेध्यम् । निरवदायेतिनिः-अवदाय । मेध्यम् । कृत्वा ।

एतिं। हरति। एकंविꣳशतिरित्येकं-विꣳशतिः। भवन्ति। एकविꣳशइत्येक-विꣳशः। वै। पुरुषः। पुरुषस्य। आप्त्यै। व्यृद्धमितिवि-ऋद्धम्। वै। एतत्। प्राणैरितिप्र-अनैः। अमेध्यम्। यत्। पुरुषशीर्षमितिपुरुष-शीर्षम्। सप्तधेतिसप्त-धा। वितृण्णामितिवि-तृण्णाम्। वल्मीकवपामितिवल्मीक-वपाम्। प्रतिं। नीतिं। दधाति। सप्त। वै। शीर्षण्याः। प्राणाइतिप्र-अनाः। प्राणैरितिप्र-अनैः। एव। एनत्। समितिं। अर्द्धयति। मेध्यत्वायेतिमेध्य-त्वाय। यावन्तः। [३९] वै। मृत्युबन्धवइतिमृत्यु-बन्धवः। तेषाम्। यमः। आधिपत्यमित्याधि-पत्यम्। परीति। इयाय। यमगाथाभिरितियम-गाथाभिः। परीति। गायति। यमात्। एव। एनत्। वृङ्क्ते। तिसृभिरितितिसृ-भिः। परीति। गायति। त्रयः। इमे। लोकाः। एभ्यः। एव। एनत्। लोकेभ्यः। वृङ्क्ते। तस्मात्। गायते। न। देयम्। गाथा। हि। तत्। वृङ्क्ते। अग्निभ्यइत्यग्नि-भ्यः। पशून्। एति। लभते। कामाः। वै। अग्नयः। कामान्। एव। अवेति। रुन्धे। यत्। पशून्। न। आलभेतेत्या-लभेत। अनवरुद्धाइत्यनव-रुद्धाः। अस्य। [४०] पशवः। स्युः। यत्। पर्यग्निकृतानितिपर्यग्नि-कृतान्। उत्सृजेदित्युत्-सृजेत्। यज्ञवेशसमितियज्ञ-वेशसम्। कुर्यात्। यत्। सꣳस्थापयेदितिसं-स्थापयेत्। यातयामानीतियात-यामानि। शीर्षाणि। स्युः। यत्। पशून्। आलभतइत्या-लभते। तेन। एव। पशून्। अवेति। रुन्धे। यत्। पर्यग्निकृतानितिपर्यग्नि-कृतान्। उत्सृजतीत्युत्-सृजति। शीर्ष्णाम्। अयातयामत्वायेत्ययातयाम-त्वाय। प्राजापत्येनेतिप्राजा-पत्येन। समिति। स्थापयति। यज्ञः। वै। प्रजापतिरितिप्रजा-पतिः। यज्ञे। एव। यज्ञम्। प्रतीति। स्थापयति। प्रजापतिरितिप्रजा-पतिः। प्रजाइतिप्र-जाः। असृजत। सः। रिरिचानः। अमन्यत। सः। एताः। आप्रीरित्या-प्रीः। अपश्यत्। ताभिः। वै। सः। मुखतः। [४१] आत्मानम्। एति। अप्रीणीत। यत्। एताः। आप्रियइत्या-प्रियः। भवन्ति। यज्ञः। वै। प्रजापतिरितिप्रजा-पतिः। यज्ञम्। एव। एताभिः। मुखतः। एति। प्रीणाति। अपरिमितछन्दसइत्यपरिमित-छन्दसः। भवन्ति। अपरिमितइत्यपरि-मितः। प्रजापतिरितिप्रजा-पतिः। प्रजापतेरितिप्रजा-पतेः। आप्त्यै। ऊनातिरिक्ताइत्यूंन-अतिरिक्ताः। मिथुनाः। प्रजात्याइतिप्र-जात्यै। लोमशम्। वै। नाम। एतत्। छन्दः। प्रजापतेरि

तिप्रजा-पतेः । पशवः । लोमशाः । पशून् । एव । अवेति । रुन्धे । सर्वाणि । वै । एताः । रूपाणि । सर्वाणि । रूपाणि । अग्नौ । चित्ये । क्रियन्ते । तस्मात् । एताः । अग्नेः । चित्यस्य । [४२] भवन्ति । एकविꣳशतिमित्येक-विꣳशतिम् । सामिधेनीरितिसां-इधेनीः । अन्विति । आह । रुक् । वै । एकविꣳशइत्येक-विꣳशः । रुचम् । एव । गच्छति । अथोइति । प्रतिष्ठामितिप्रति-स्थाम् । एव । प्रतिष्ठेतिप्रति-स्था । हि । एकविꣳशइत्येक-विꣳशः । चतुर्विꣳशतिमितिचतुः-विꣳशतिम् । अन्विति । आह । चतुर्विꣳशतिरितिचतुः-विꣳशतिः । अर्द्धमासाइत्यर्द्ध-मासाः । सꣳवथ्सरइतिसं-वथ्सरः । सꣳवथ्सरइतिसं-वथ्सरः । अग्निः । वैश्वानरः । साक्षादितिस-अक्षात् । एव । वैश्वानरम् । अवेति । रुन्धे । पराचीः । अन्विति । आह । पराङ् । इव । हि । सुवर्गइतिसुवः-गः । लोकः । समाः । त्वा । अग्ने । ऋतवः । वर्द्धयन्तु । इति । आह । समाभिः । एव । अग्निम् । वर्द्धयति । [४३] ऋतुभिरित्यृतु-भिः । सꣳवथ्सरमितिसं-वथ्सरम् । विश्वाः । एति । भाहि । प्रदिशइतिप्र-दिशः । पृथिव्याः । इति । आह । तस्मात् । अग्निः । सर्वाः । दिशः । अनु । वीति । भाति । प्रतीति । औहताम् । अश्विना । मृत्युम् । अस्मात् । इति । आह । मृत्युम् । एव । अस्मात् । अपेति । नुदति । उदिति । वयम् । तमसः । परीति । इति । आह । पाप्मा । वै । तमः । पाप्मानम् । एव । अस्मात् । अपेति । हन्ति । अगन्म । ज्योतिः । उत्तममित्युत्-तमम् । इति । आह । असौ । वै । आदित्यः । ज्योतिः । उत्तममित्युत्-तमम् । आदित्यस्य । एव । सायुज्यम् । गच्छति । न । सꣳवथ्सरइतिसं-वथ्सरः । तिष्ठति । न । अस्य । श्रीः । तिष्ठति । यस्य । एताः । क्रियन्ते । ज्योतिष्मतीम् । उत्तमामित्युत्-तमाम् । अन्विति । आह । ज्योतिः । एव । अस्मै । उपरिष्टात् । दधाति । सुवर्गस्येतिसुवः-गस्य । लोकस्य । अनुख्यात्याइत्यनु-ख्यात्यै ॥ [४४] यावन्तोऽस्यमुखतश्चित्यस्यवर्द्धयत्याहित्योऽष्टाविꣳशतिश्च ॥ ❀ ❀ ॥८॥

षड्भिरितिषट्-भिः । दीक्षयति । षट् । वै । ऋतवः । ऋतुभिरित्यृतु-भिः । एव । एनम् । दीक्षयति । सप्तभिरितिसप्त-भिः । दीक्षयति । सप्त । छन्दाꣳसि । छन्दोभिरितिछन्दः-भिः । एव । एनम् । दीक्षयति । विश्वे । देवस्य । नेतुः । इति । अनुष्टुभेत्यनु-स्तुभा । उत्तमयेत्युत्-तमया । जुहोति । वाक् । वै । अनुष्टुबित्यनु-स्तुप् ।

तस्मात् । प्राणानामितिप्र-अनानाम् । वाक् । उत्तमेत्युत्-तमा । एकस्मात् । अक्ष
रात् । अनाप्तम् । प्रथमम् । पदम् । तस्मात् । यत् । वाचः । अनाप्तम् । तत् । मनु
ष्याः । उपेति । जीवन्ति । पूर्णया । जुहोति । पूर्णः । इव । हि । प्रजापतिरितिप्र
जा-पतिः । [४५] प्रजापतेरितिप्रजा-पतेः । आप्त्यै । न्यूनयेतिनि-ऊनया । जुहो
ति । न्यूनादितिनि-ऊनात् । हि । प्रजापतिरितिप्रजा-पतिः । प्रजाइतिप्र-जाः । अ
सृजत । प्रजानामितिप्र-जानाम् । सृष्ट्यै । यत् । अर्चिषि । प्रवृञ्ज्यादितिप्र-वृञ्ज्यात् ।
भूतम् । अवेति । रुन्धीत । यत् । अङ्गारेषु । भविष्यत् । अङ्गारेषु । प्रेति । वृणक्ति ।
भविष्यत् । एव । अवेति । रुन्धे । भविष्यत् । हि । भूयः । भूतात् । द्वाभ्याम् । प्रेति ।
वृणक्ति । द्विपादितिद्वि-पात् । यजमानः । प्रतिष्ठित्याइतिप्रति-स्थित्यै । ब्रह्मणा ।
वै । एषा । यजुषा । सम्भृतेतिसं-भृता । यत् । उखा । सा । यत् । भिद्येत । आर्तिम् ।
एति । ऋच्छेत् । [४६] यजमानः । हन्येत । अस्य । यज्ञः । मित्र । एताम् । उ
खाम् । तप । इति । आह । ब्रह्म । वै । मित्रः । ब्रह्मन् । एव । एनाम् । प्रतीति ।
स्थापयति । न । आर्तिम् । एति । ऋच्छति । यजमानः । न । अस्य । यज्ञः । हन्य
ते । यदि । भिद्येत । तैः । एव । कपालैः । समिति । सृजेत् । सा । एव । ततः ।
प्रायश्चित्तिः । यः । गतश्रीरितिगत-श्रीः । स्यात् । मथित्वा । तस्य । अवेति । दध्यात् ।
भूतः । वै । एषः । सः । स्वाम् । [४७] देवताम् । उपेति । एति । यः । भूतिकाम
इतिभूति-कामः । स्यात् । यः । उखायै । सम्भवेदितिसं-भवेत् । सः । एव । तस्य ।
स्यात् । अतः । हि । एषः । सम्भवतीतिसं-भवति । एषः । वै । स्वयम्भूरितिस्वयं-
भूः । नाम । भवति । एव । यम् । कामयेत । भ्रातृव्यम् । अस्मै । जनयेयम् । इति ।
अन्यतः । तस्य । आहृत्येत्या-हृत्य । अवेति । दध्यात् । साक्षादितिस-अक्षात् ।
एव । अस्मै । भ्रातृव्यम् । जनयति । अम्बरीषात् । अन्नकामस्येत्यन्न-कामस्य ।
अवेति । दध्यात् । अम्बरीषे । वै । अन्नम् । भ्रियते । सयोनीतिस-योनि । एव ।
अन्नम् । [४८] अवेति । रुन्धे । मुञ्जान् । अवेति । दधाति । ऊर्क् । वै । मुञ्जाः ।
ऊर्जम् । एव । अस्मै । अपीति । दधाति । अग्निः । देवेभ्यः । निलायत । सः । क्रुमु
कम् । प्रेति । अविशत् । क्रुमुकम् । अवेति । दधाति । यत् । एव । अस्य । तत्र ।
न्यक्तमितिनि-अक्तम् । तत् । एव । अवेति । रुन्धे । आज्येन । समिति । यौति ।

एतत् । वै । अग्नेः । प्रियम् । धाम । यत् । आज्यम् । प्रियेण । एव । एनम् । धाम्ना । समिति । अर्द्धयति । अथोइति । तेजसा । [४९] वैकङ्कतीम् । एति । दधाति । भाः । एव । अवेति । रुन्धे । शमीमयीमितिशमी-मयीम् । एति । दधाति । शान्त्यै । सीद । त्वम् । मातुः । अस्याः । उपस्थइत्युप-स्थे । इति । तिसृभिरितितिसृ-भिः । जातम् । उपेति । तिष्ठते । त्रयः । इमे । लोकाः । एषु । एव । लोकेषु । आविदमित्या-विदम् । गच्छति । अथोइति । प्राणानितिप्र-अनान् । एव । आत्मन् । धत्ते ॥ [५०] प्रजापतिर् ऋच्छेथ्स्वामेवान्नन्तेजसाचतुस्त्रिꣳशच ॥ ❀ ॥ ९ ॥

न । ह । स्म । वै । पुरा । अग्निः । अपरशुवृक्णमित्यपरशु-वृक्णम् । दहति । तत् । अस्मै । प्रयोगइतिप्र-योगः । एव । ऋषिः । अस्वदयत् । यत् । अग्ने । यानि । कानि । च । इति । समिधमितिसं-इधम् । एति । दधाति । अपरशुवृक्णमित्यपरशु-वृक्णम् । एव । अस्मै । स्वदयति । सर्वम् । अस्मै । स्वदते । यः । एवम् । वेद । औदुम्बरीम् । एति । दधाति । ऊर्क् । वै । उदुम्बरः । ऊर्जम् । एव । अस्मै । अपीति । दधाति । प्रजापतिरितिप्रजा-पतिः । अग्निम् । असृजत । तम् । सृष्टम् । रक्षाꣳसि । [५१] अजिघाꣳसन् । सः । एतत् । रक्षोघ्नमितिरक्षः-घ्नम् । अपश्यत् । तेन । वै । सः । रक्षाꣳसि । अपेति । अहत । यत् । रक्षोघ्नमितिरक्षः-घ्नम् । भवति । अग्नेः । एव । तेन । जातात् । रक्षाꣳसि । अपेति । हन्ति । आश्वत्थीम् । एति । दधाति । अश्वत्थः । वै । वनस्पतीनाम् । सपत्नसाहइतिसपत्न-साहः । विजित्याइतिवि-जित्यै । वैकङ्कतीम् । एति । दधाति । भाः । एव । अवेति । रुन्धे । शमीमयीमितिशमी-मयीम् । एति । दधाति । शान्त्यै । सꣳशितमितिसं-शितम् । मे । ब्रह्म । उदिति । एषाम् । बाहूइति । अतिरम् । इति । उत्तमेइत्युत्-तमे । औदुम्बरीइति । [५२] वाचयति । ब्रह्मणा । एव । क्षत्रम् । समिति । श्यति । क्षत्रेण । ब्रह्म । तस्मात् । ब्राह्मणः । राजन्यवानितिराजन्य-वान् । अतीति । अन्यम् । ब्राह्मणम् । तस्मात् । राजन्यः । ब्राह्मणवानितिब्राह्मण-वान् । अतीति । अन्यम् । राजन्यम् । मृत्युः । वै । एषः । यत् । अग्निः । अमृतम् । हिरण्यम् । रुक्मम् । अन्तरम् । प्रतीति । मुञ्चते । अमृतम् । एव । मृत्योः । अन्तः । धत्ते । एकविꣳशतिनिर्बाधइत्येकविꣳशति-निर्बाधः । भवति । एकविꣳशतिरित्येक-विꣳशतिः । वै । देवलोकाइति

देव-लोकाः । द्वादंश । मासाः । पञ्च । ऋतवंः । त्रयंः । इमे । लोकाः । असौ । आ दित्यः । [५३] एकविꣳशइत्येकं-विꣳशः । एतावंन्तः । वै । देवलोकाइतिदेव-लोकाः । तेभ्यंः । एव । भ्रातृंव्यम् । अन्तः । एति । निर्बाधैरितिनिः-बाधैः । वै । देवाः । असुरान् । निर्बाधइतिनिः-बाधे । अकुर्वत । तत् । निर्बाधानामितिनिः-बाधानाम् । निर्बाधत्वमितिनिर्बाध-त्वम् । निर्बाधीतिनिः-बाधी । भवति । भ्रातृंव्यान् । एव । निर्बाधइतिनिः-बाधे । कुरुते । सावित्रिया । प्रतीति । मुञ्चते । प्रसूत्याइतिप्र-सूत्यै । नक्तोषासां । इति । उत्तरयेत्युत्-तरया । अहोरात्राभ्यामित्यंहः-रात्राभ्याम् । एव । एनम् । उदिति । यच्छते । देवाः । अग्निम् । धारयन्न् । द्रविणोदाइतिद्रविणः-दाः । इति । आह । प्राणाइतिप्र-अनाः । वै । देवाः । द्रविणोदाइतिद्रविणः-दाः । अहो रात्राभ्यामित्यंहः-रात्राभ्याम् । एव । एनम् । उद्यत्येत्युत्-यत्यं । [५४] प्राणैरिति प्र-अनैः । दाधार । आसीनः । प्रतीति । मुञ्चते । तस्मात् । आसीनाः । प्रजाइति प्र-जाः । प्रेति । जायन्ते । कृष्णाजिनमितिकृष्ण-अजिनम् । उत्तरमित्युत्-तरम् । तेजः । वै । हिरंण्यम् । ब्रह्म । कृष्णाजिनमितिकृष्ण-अजिनम् । तेजसा । च । एव । एनम् । ब्रह्मणा । च । उभयतः । परीति । गृह्णाति । षडुद्याममितिषट्-उद्यामम् । शिक्यम् । भवति । षट् । वै । ऋतवंः । ऋतुभिरित्यृतु-भिः । एव । एनम् । उदिति । यच्छते । यत् । द्वादशोद्याममितिद्वादंश-उद्यामम् । सँवथ्सरेणेतिसं-वथ्सरेण । एव । मौञ्जम् । भवति । ऊर्क् । वै । मुञ्जाः । ऊर्जा । एव । एनम् । समिति । अर्द्धयति । सुपर्णइतिसु-पर्णः । असि । गरुत्मान् । इति । अवेति । ईक्षते । रूपम् । एव । अस्य । एतत् । महिमानम् । व्याचष्टइतिवि-आचष्टे । दिवम् । गच्छ । सुवः । पत । इति । आह । सुवर्गमितिसुवः-गम् । एव । एनम् । लोकम् । गमयति ॥ [५५] रुक्षाꣳ स्यौदुम्बरीआदित्यउद्यत्यसञ्चतुर्विꣳशतिश्च ॥ ❀ ❀ ❀ ॥१०॥

समिद्धइतिसं-इद्धः । अञ्जन्न् । कृदंरम् । मतीनाम् । घृतम् । अग्ने । मधुमदितिमधुं-मत् । पिन्वमानः ॥ वाजी । वहन्न् । वाजिनम् । जातवेदइतिजात-वेदः । देवानाम् । वक्षि । प्रियम् । एति । सधस्थमितिसध-स्थम् ॥ घृतेन । अञ्जन्न् । समिति । पथः । देवयानानितिदेव-यानान् । प्रजानन्नितिप्र-जानन्न् । वाजी । अपीति । एतु । देवान् ॥ अन्विति । त्वा । सप्ते । प्रदिशइतिप्र-दिशः । सचन्ताम् ।

स्वधामितिस्व-धाम् । अस्मै । यजमानाय । धेहि ॥ ईड्यः । च । असि । वन्द्यः । च । वाजिन्न् । आशुः । च । असि । मेध्यः । च । सप्ते ॥ अग्निः । त्वा । [५६] देवैः । वसुभिरितिवसु-भिः । सजोषाइतिस-जोषाः । प्रीतम् । वह्निम् । वहतु । जातवेदाइतिजात-वेदाः ॥ स्तीर्णम् । बर्हिः । सुष्टरीमेतिसु-स्तरीम । जुषाणा । उरु । पृथु । प्रथमानम् । पृथिव्याम् ॥ देवेभिः । युक्तम् । अदितिः । सजोषाइतिस-जोषाः । स्योनम् । कृण्वाना । सुविते । दधातु ॥ एताः । उ । वः । सुभगाइतिसु-भगाः । विश्वरूपाइतिविश्व-रूपाः । वीति । पक्षोभिरितिपक्षः-भिः । श्रयमाणाः । उदिति । आतैः ॥ ऋष्वाः । सतीः । कवषः । शुम्भमानाः । द्वारः । देवीः । सुप्रायणाइतिसु-प्रायणाः । भवन्तु ॥ अन्तरा । मित्रावरुणेतिमित्रा-वरुणा । चरन्तीइति । मुखम् । यज्ञानाम् । अभीति । सव्विँदानेइतिसं-विदाने ॥ उषासा । वाम् । [५७] सुहिरण्येइतिसु-हिरण्ये । सुशिल्पेइतिसु-शिल्पे । ऋतस्य । योनौ । इह । सादयामि ॥ प्रथमा । वाम् । सरथिनेतिस-रथिना । सुवर्णेतिसु-वर्णा । देवौ । पश्यन्तौ । भुवनानि । विश्वा ॥ अपिप्रयम् । चोदना । वाम् । मिमाना । होतारा । ज्योतिः । प्रदिशेतिप्र-दिशा । दिशन्ता ॥ आदित्यैः । नः । भारती । वष्टु । यज्ञम् । सरस्वती । सह । रुद्रैः । नः । आवीत् ॥ इडा । उपहूतेत्युप-हूता । वसुभिरितिवसु-भिः । सजोषाइतिस-जोषाः । यज्ञम् । नः । देवीः । अमृतेषु । धत्त ॥ त्वष्टा । वीरम् । देवकाममितिदेव-कामम् । जजान । त्वष्टुः । अर्वा । जायते । आशुः । अश्वः ॥ [५८] त्वष्टा । इदम् । विश्वम् । भुवनम् । जजान । बहोः । कर्तारम् । इह । यक्षि । होतः ॥ अश्वः । घृतेन । त्मन्या । समक्तइतिसं-अक्तः । उपेति । देवान् । ऋतुशइत्यृतु-शः । पाथः । एतु ॥ वनस्पतिः । देवलोकमितिदेव-लोकम् । प्रजानन्नितिप्र-जानन् । अग्निना । हव्या । स्वदितानि । वक्षत् ॥ प्रजापतेरितिप्रजा-पतेः । तपसा । वावृधानः । सद्यः । जातः । दधिषे । यज्ञम् । अग्ने ॥ स्वाहाकृतेनेतिस्वाहा-कृतेन । हविषा । पुरोगाइतिपुरः-गाः । याहि । साध्या । हविः । अदन्तु । देवाः ॥ [५९] अग्निष्ठावामश्वोद्धिचत्वारिꣳशच ॥ ❀ ❀ ❀ ॥ ११ ॥

सावित्राणिव्यृद्धमुत्क्रामदेवस्यखनतिक्रूरव्वाँरुणस्सप्तभिरेकविꣳशत्याषड्भिर्नहंस्समसमिद्धोअञ्जन्नेकादश ॥११॥ सावित्राण्युत्क्रामक्रूरव्वाँरुणःपशवस्स्युर्नहंस्सनव

पञ्चाशत् ॥ ५९ ॥ सावित्राणिंहविरंदन्तुदेवाः ॥ ❁ ❁ ❁

हरिः ओ (३) म् ॥

इति पञ्चमकाण्डे प्रथमः प्रश्नः ॥

## अथ पञ्चमकाण्डे द्वितीयः प्रश्नः ॥

हरिः ओ (४) म् ॥

विष्णुमुखाइतिविष्णु-मुखाः । वै । देवाः । छन्दोभिरितछन्दः-भिः । इमान् । लोकान् । अनपजय्यमित्यनप-जय्यम् । अभीति । अजयन्न् । यत् । विष्णुक्रमानितिविष्णु-क्रमान् । क्रमते । विष्णुः । एव । भूत्वा । यजमानः । छन्दोभिरितिछन्दः-भिः । इमान् । लोकान् । अनपजय्यमित्यनप-जय्यम् । अभीति । जयति । विष्णोः । क्रमः । असि । अभिमातिहेत्यभिमाति-हा । इति । आह । गायत्री । वै । पृथिवी । त्रैष्टुभम् । अन्तरिक्षम् । जागती । द्यौः । आनुष्टुभीरित्यानु-स्तुभीः । दिशः । छन्दोभिरितिछन्दः-भिः । एव । इमान् । लोकान् । यथापूर्वमितियथा-पूर्वम् । अभीति । जयति । प्रजापतिरितिप्रजा-पतिः । अग्निम् । असृजत । सः । अस्मात् । सृष्टः । [१] पराङ् । ऐत् । तम् । एतया । अन्विति । ऐत् । अक्रन्दत् । इति । तया । वै । सः । अग्नेः । प्रियम् । धाम । अवेति । अरुन्ध । यत् । एताम् । अन्वाहेत्यनु-आह । अग्नेः । एव । एतया । प्रियम् । धाम । अवेति । रुन्धे । ईश्वरः । वै । एषः । पराङ् । प्रदघइतिप्र-दघः । यः । विष्णुक्रमानितिविष्णु-क्रमान् । क्रमते । चतसृभिरितिचतसृ-भिः । एति । वर्तते । चत्वारि । छन्दाँसि । छन्दाँसि । खलु । वै । अग्नेः । प्रिया । तनूः । प्रियाम् । एव । अस्य । तनुवम् । अभीति । [२] पर्यावर्ततइतिपरि-आवर्तते । दक्षिणा । पर्यावर्ततइतिपरि-आवर्तते । स्वम् । एव । वीर्यम् । अन्विति । पर्यावर्ततइतिपरि-आवर्तते । तस्मात् । दक्षिणः । अर्द्धः । आत्मनः । वीर्यावत्तरइतिवीर्यावत्-तरः । अथोइति । आदित्यस्य । एव । आवृतमित्या-वृतम् । अन्विति । पर्यावर्ततइतिपरि-आवर्तते । शुनश्शेपम् । आजीगर्तिम् । वरुणः । अगृह्णात् । सः । एताम् । वारुणीम् । अपश्यत् । तया । वै । सः । आत्मानम् । वरुणपाशादितिवरुण-पाशात् ।

अमुञ्चत् । वरुणः । वै । एतम् । गृह्णाति । यः । उखाम् । प्रतिमुञ्चतइतिप्रति-मुञ्चते । उदिति । उत्तममित्युत्-तमम् । वरुण । पाशम् । अस्मत् । इति । आह । आत्मानम् । एव । एतया । [३] वरुणपाशादितिवरुण-पाशात् । मुञ्चति । एति । त्वा । अहाः । षम् । इति । आह । एति । हि । एनम् । हरति । ध्रुवः । तिष्ठ । अविचाचलिरित्यवि-चाचलिः । इति । आह । प्रतिष्ठित्याइतिप्रति-स्थित्यै । विशः । त्वा । सर्वाः । वाञ्छन्तु । इति । आह । विशा । एव । एनम् । समिति । अर्धयति । अस्मिन् । राष्ट्रम् । अधीति । श्रय । इति । आह । राष्ट्रम् । एव । अस्मिन् । ध्रुवम् । अकः । यम् । कामयेत । राष्ट्रम् । स्यात् । इति । तम् । मनसा । ध्यायेत् । राष्ट्रम् । एव । भवति । [४] अग्ने । बृहन् । उषसाम् । ऊर्ध्वः । अस्थात् । इति । आह । अग्रम् । एव । एनम् । समानानाम् । करोति । निर्जग्मिवानितिनिः-जग्मिवान् । तमसः । इति । आह । तमः । एव । अस्मात् । अपेति । हन्ति । ज्योतिषा । एति । अगात् । इति । आह । ज्योतिः । एव । अस्मिन् । दधाति । चतसृभिरितिचतसृ-भिः । सादयति । चत्वारि । छन्दांसि । छन्दोभिरितिछन्दः-भिः । एव । अतिच्छन्दसेत्यति-छन्दसा । उत्तमयेत्युत्-तमया । वर्ष्म । वै । एषा । छन्दसाम् । यत् । अतिच्छन्दाइत्यति-छन्दाः । वर्ष्म । एव । एनम् । समानानाम् । करोति । सद्वतीतिसत्-वती । [५] भवति । सत्त्वमितिसत्-त्वम् । एव । एनम् । गमयति । वात्सप्रेणेतिवात्स-प्रेण । उपेति । तिष्ठते । एतेन । वै । वत्सप्रीरितिवत्स-प्रीः । भालन्दनः । अग्नेः । प्रियम् । धाम । अवेति । अरुन्ध । अग्नेः । एव । एतेन । प्रियम् । धाम । अवेति । रुन्धे । एकादशम् । भवति । एकधेत्येक-धा । एव । यजमाने । वीर्यम् । दधाति । स्तोमेन । वै । देवाः । अस्मिन् । लोके । आर्ध्नुवन् । छन्दोभिरितिछन्दः-भिः । अमुष्मिन् । स्तोमस्य । इव । खलु । वै । एतत् । रूपम् । यत् । वात्सप्रमितिवात्स-प्रम् । यत् । वात्सप्रेणेतिवात्स-प्रेण । उपतिष्ठतइत्युप-तिष्ठते । [६] इमम् । एव । तेन । लोकम् । अभीति । जयति । यत् । विष्णुक्रमानितिविष्णु-क्रमान् । क्रमते । अमुम् । एव । तैः । लोकम् । अभीति । जयति । पूर्वेद्युः । प्रेति । क्रामति । उत्तरेद्युः । उपेति । तिष्ठते । तस्मात् । योगे । अन्यासाम् । प्रजानामितिप्र-जानाम् । मनः । क्षेमे । अन्यासाम् । तस्मात् । यायावरः । क्षेम्यस्य । ईशे । तस्मात् । या

यावरः । स्वेम्यम् । अध्यवस्यतीत्यधि-अवस्यति । मुष्टीइति । करोति । वाचम् । य च्छति । यज्ञस्य । धृत्यै ॥ [७] सृष्टी(१)म्येतयाभवतिसद्वत्युपतिष्ठतेद्विचत्वारिंशच ॥ ❀ ❀ ❀ ❀ ॥१॥

अन्नपतइत्यन्न-पते । अन्नस्य । नः । देहि । इति । आह । अग्निः । वै । अन्नपतिरित्यन्न-पतिः । सः । एव । अस्मै । अन्नम् । प्रेति । यच्छति । अनमीवस्य । शुष्मिणः । इति । आह । अयक्ष्मस्य । इति । वाव । एतत् । आह । प्रेति । प्रदातारमितिप्र-दातारम् । तारिषः । ऊर्जम् । नः । धेहि । द्विपदइतिद्वि-पदे । चतुष्पदइतिचतुः-पदे । इति । आह । आशिषमित्या-शिषम् । एव । एताम् । एति । शास्ते । उदिति । उ त्वा । विश्वे । देवाः । इति । आह । प्राणाइतिप्र-अनाः । वै । विश्वे । देवाः । [८] प्राणैरितिप्र-अनैः । एव । एनम् । उदिति । यच्छते । अग्ने । भरन्तु । चित्तिभिरितिचित्ति-भिः । इति । आह । यस्मै । एव । एनम् । चित्ताय । उद्यच्छतइत्युत्-यच्छते । तेन । एव । एनम् । समिति । अर्धयति । चतसृभिरितिचतसृ-भिः । एति । सादयति । चत्वारि । छन्दांसि । छन्दोभिरितिछन्दः-भिः । एव । अतिच्छन्दसेत्यति-छन्दसा । उत्तमयेत्युत्-तमया । वर्ष्म । वै । एषा । छन्दसाम् । यत् । अतिच्छन्दाइत्यति-छन्दाः । वर्ष्म । एव । एनम् । समानानाम् । करोति । सद्वतीतिसत्-वती । भवति । सत्त्वमितिसत् त्वम् । एव । एनम् । गमयति । प्रेति । इत् । अग्ने । ज्योतिष्मान् । [९] याहि । इति । आह । ज्योतिः । एव । अस्मिन्न् । दधाति । तनुवा । वै । एषः । हिनस्ति । यम् । हिनस्ति । मा । हिंसीः । तनुवा । प्रजाइतिप्र-जाः । इति । आह । प्रजाभ्यइतिप्र-जाभ्यः । एव । एनम् । शमयति । रक्षांसि । वै । एतत् । यज्ञम् । सचन्ते । यत् । अनः । उथ्सर्जतीत्युत्-सर्जति । अक्रन्दत् । इति । अन्विति । आह । रक्षसाम् । अपहत्याइत्यप-हत्यै । अनसा । वहन्ति । अपचितिमित्यप-चितिम् । एव । अस्मिन्न् । दधाति । तस्मात् । अनस्वी । च । रथी । च । अतिथीनाम् । अपचिततमावित्यपचित-तमौ । [१०] अपचितिमानित्यपचिति-मान् । भवति । यः । एवम् । वेद । समिधेतिसं-इधा । अग्निम् । दुवस्यत । इति । घृतानुषिक्तामितिघृत-अनुषिक्ताम् । अवसितइत्यव-सिते । समिधमितिसं-इधम् । एति । दधाति । यथा । अतिथये । आगतायेत्या-गताय । सर्पिष्वत् । आतिथ्यम् ।

क्रियते । तादृक् । एव । तत् । गायत्रिया । ब्राह्मणस्य । गायत्रः । हि । ब्राह्मणः । त्रिष्टुभा । राजन्यस्य । त्रैष्टुभः । हि । राजन्यः । अफ्स्वित्यप्-सु । भस्म । प्रेति । वेशयति । अफ्सुयोनिरित्यफ्सु-योनिः । वै । अग्निः । स्वाम् । एव । एनम् । योनिम् । गमयति । तिसृभिरितितिसृ-भिः । प्रेति । वेशयति । त्रिवृदितित्रि-वृत् । वै । [११] अग्निः । यावान् । एव । अग्निः । तम् । प्रतिष्ठामितिप्रति-स्थाम् । गमयति । परेति । वै । एषः । अग्निम् । वपति । यः । अफ्स्वित्यप्-सु । भस्म । प्रवेशयतीतिप्र-वेशयति । ज्योतिष्मतीभ्याम् । अवेति । दधाति । ज्योतिः । एव । अस्मिन्न् । दधाति । द्वाभ्याम् । प्रतिष्ठित्याइतिप्रति-स्थित्यै । परेति । वै । एषः । प्रजामितिप्र-जाम् । पशून् । वपति । यः । अफ्स्वित्यप्-सु । भस्म । प्रवेशयतीतिप्र-वेशयति । पुनः । ऊर्जा । सह । रय्या । इति । पुनः । उदेतीत्युत्-एति । प्रजामितिप्र-जाम् । एव । पशून् । आत्मन्न् । धत्ते । पुनः । त्वा । आदित्याः । [१२] रुद्राः । वसवः । समिति । इन्धताम् । इति । आह । एताः । वै । एतम् । देवताः । अग्रे । समिति । ऐन्धत । ताभिः । एव । एनम् । समिति । इन्धे । बोध । सः । बोधि । इति । उपेति । तिष्ठते । बोधयति । एव । एनम् । तस्मात् । सुप्त्वा । प्रजाइतिप्र-जाः । प्रेति । बुध्यन्ते । यथास्थानमितियथा-स्थानम् । उपेति । तिष्ठते । तस्मात् । यथास्थानमितियथा-स्थानम् । पशवः । पुनः । एत्येत्या-इत्य । उपेति । तिष्ठन्ते ॥ [१३] वैविश्वेदेवाज्योतिष्मानपचितततमौत्रिवृद्धाआदित्याद्विचत्वारिंशच्च ॥ ❀ ॥२॥

यावती । वै । पृथिवी । तस्यै । यमः । आधिपत्यमित्याधि-पत्यम् । परीति । इयाय । यः । वै । यमम् । देवयजनमितिदेव-यजनम् । अस्याः । अनिर्याच्येत्यनिः-याच्य । अग्निम् । चिनुते । यमाय । एनम् । सः । चिनुते । अपेति । इत । इति । अध्यवसाययतीत्यधि-अवसाययति । यमम् । एव । देवयजनमितिदेव-यजनम् । अस्यै । निर्याच्येतिनिः-याच्य । आत्मने । अग्निम् । चिनुते । इष्वग्रेणेतीषु-अग्रेण । वै । अस्याः । अनामृतमित्यना-मृतम् । इच्छन्तः । न । अविन्दन्न् । ते । देवाः । एतत् । यजुः । अपश्यन्न् । अपेति । इत । इति । यत् । एतेन । अध्यवसाययतीत्यधि-अवसाययति । [१४] अनामृतइत्यना-मृते । एव । अग्निम् । चिनुते । उदिति । हन्ति । यत् । एव । अस्याः । अमेध्यम् । तत् । अपेति । हन्ति । अपः । अवेति । उक्षति ।

शीर्षाणम् । एव । अग्निम् । चिनुते । सशीर्षेतिस-शीर्षा । अमुष्मिन्न् । लोके । भवति । यः । एवम् । वेद । सुवर्गायेतिसुवः-गाय । वै । एषः । लोकाय । चीयते । यत् । अग्निः । तस्य । यत् । अयथापूर्वमित्ययथा-पूर्वम् । क्रियते । असुवर्ग्यमित्य सुवः-ग्यम् । अस्य । तत् । सुवर्ग्यइतिसुवः-ग्यः । अग्निः । चितिम् । उपधायेत्युप-धाय । अभीति । मृशेत् । चित्तिम् । अचित्तिम् । चिनवत् । वीति । विद्वान् । पृष्ठा । इव । वीता । वृजिना । च । मर्तान् । राये । च । नः । स्वपत्यायेतिसु-अपत्याय । देव । दितिम् । च । रास्व । अदितिम् । उरुष्य । इति । यथापूर्वमितियथा-पूर्वम् । एव । एनाम् । उपेति । धत्ते । प्राञ्चम् । एनम् । चिनुते । सुवर्ग्यइतिसुवः-ग्यः । अस्य । भवति ॥ [२१] ओषधयःकञ्जुहोतिस्वपत्यायाष्टादशच ॥ ❋ ॥४॥

विश्वकर्मेतिविश्व-कर्मा । दिशाम् । पतिः । सः । नः । पशून् । पातु । सः । अस्मान् । पातु । तस्मै । नमः । प्रजापतिरितिप्रजा-पतिः । रुद्रः । वरुणः । अग्निः । दिशाम् । पतिः । सः । नः । पशून् । पातु । सः । अस्मान् । पातु । तस्मै । नमः । एताः । वै । देवताः । एतेषाम् । पशूनाम् । अधिपतयइत्यधि-पतयः । ताभ्यः । वै । एषः । एति । वृश्च्यते । यः । पशुशीर्षाणीतिपशु-शीर्षाणि । उपदधातीत्युप-दधाति । हिरण्येष्टकाइतिहिरण्य-इष्टकाः । उपेति । दधाति । एताभ्यः । एव । देवताभ्यः । नमः । करोति । ब्रह्मवादिनइतिब्रह्म-वादिनः । [२२] वदन्ति । अग्नौ । ग्राम्यान् । पशून् । प्रेति । दधाति । शुचा । आरण्यान् । अर्पयति । किम् । ततः । उदिति । शिꣳषति । इति । यत् । हिरण्येष्टकाइतिहिरण्य-इष्टकाः । उपदधातीत्युप-दधाति । अमृतम् । वै । हिरण्यम् । अमृतेन । एव । ग्राम्येभ्यः । पशुभ्यइतिपशु-भ्यः । भेषजम् । करोति । न । एनान् । हिनस्ति । प्राणइतिप्र-अनः । वै । प्रथमा । स्वयमातृण्णेतिस्वयं-आतृण्णा । व्यानइतिवि-अनः । द्वितीया । अपानइत्यप-अनः । तृतीया । अनु । प्रेति । अन्यात् । प्रथमाम् । स्वयमातृण्णामितिस्वयं-आतृण्णाम् । उपधायेत्युप-धाय । प्राणेनेतिप्र-अनेन । एव । प्राणमितिप्र-अनम् । समिति । अर्धयति । वीति । अन्यात् । [२३] द्वितीयाम् । उपधायेत्युप-धाय । व्यानेनेतिवि-अनेन । एव । व्यानमितिवि-अनम् । समिति । अर्धयति । अपेति । अन्यात् । तृ

108

तीयांम् । उपधायेत्युंप-धायं । अपानेनेत्यंप-अनेनं । एव । अपानमित्यंप-अनम् । समिति । अर्धयति । अथोइतिं । प्राणैरितिंप्र-अनैः । एव । एनम् । समितिं । इन्धे । भूः । भुवः । सुवंः । इतिं । स्वयमातृण्णाइतिंस्वयं-आतृण्णाः । उपेतिं । दधाति । इमे । वै । लोकाः । स्वयमातृण्णाइतिस्वयं- आतृण्णाः । एताभिः । खलु । वै । व्याहृतीभिरि तिव्याहृति-भिः । प्रजापतिरितिंप्रजा - पतिः । प्रेतिं । अजायत । यत् । एताभिः । व्याहृतीभिरितिव्याहृति-भिः । स्वयमातृण्णाइतिंस्वयं-आतृण्णाः । उपदधातीत्युंप-दधाति । इमान् । एव । लोकान् । उपधायेत्युंप-धायं । एषु । [२४] लोकेषु । अधि । प्रेतिं । जायते । प्राणायेतिंप्र-अनायं । व्यानायेतिंवि-अनायं । अपानायेत्यं प-अनायं । वाचे । त्वा । चक्षुंषे । त्वा । तयां । देवतंया । अङ्गिरस्वत् । ध्रुवा । सीद । अग्निनां । वै । देवाः । सुवर्गमितिंसुवः-गम् । लोकम् । अजिगाꣳसन्न् । तेनं । पतितुम् । न । अशक्नुवन्न् । ते । एताः । चतंस्रः । स्वयमातृण्णाइतिस्वयं - आतृ ण्णाः । अपश्यन्न् । ताः । दिक्षु । उपेतिं । अदधत । तेनं । सर्वतंश्चक्षुषेतिंसर्वतंः- चक्षुषा । सुवर्गमितिंसुवः-गम् । लोकम् । आयन्न् । यत् । चतंस्रः । स्वयमातृण्णा इतिस्वयं-आतृण्णाः । दिक्षु । उपदधातीत्युंप-दधाति । सर्वतंश्चक्षुषेतिंसर्वतंः-च क्षुषा । एव । तत् । अग्निनां । यजमानः । सुवर्गमितिंसुवः-गम् । लोकम् । एति ॥ [२५]ब्रह्मवादिनोव्यन्न्यादेषुयजमानस्त्रीणिंच ॥ ❀ ❀ ॥५॥

अग्ने । एतिं । याहि । वीतयें । इतिं । आह । अह्वत । एव । एनम् । अ ग्निम् । दूतम् । । वृणीमहे । इतिं । आह । हूत्वा । एव । एनम् । वृणीते । अग्निनां । अग्निः । समितिं । इध्यते । इतिं । आह । समितिं । इन्धे । एव । एनम् । अग्निः । वृत्राणिं । जङ्घनत् । इतिं । आह । समिद्धइतिसं-इद्धे । एव । अस्मिन्न् । इन्द्रियम् । दधाति । अग्नेः । स्तोमंम् । मनामहे । इतिं । आह । मनुते । एव । एनम् । एता निं । वै । अह्नाम् । रूपाणिं । [२६] अन्वहमित्यंनु-अहम् । एव । एनम् । चिनुते । अवेतिं । अह्नाम् । रूपाणिं । रुन्धे । ब्रह्मवादिनइतिंब्रह्म-वादिनंः । वदन्ति । कस्मात् । सत्यात् । यातयाम्नीरितिंयात-याम्नीः । अन्याः । इष्टंकाः । अयांतयाम्नीत्ययांत- याम्नी । लोकम्पृणेतिंलोकं-पृणा । इतिं । ऐन्द्राग्नीत्यैन्द्र-अग्नी । हि । बार्हस्पत्या ।

इतिं । ब्रूयात् । इन्द्राग्नीइतीन्द्र-अग्नी । च । हि । देवानांम् । बृहस्पतिः । च । अयांतयामानइत्ययांत-यामानः । अनुचरवतीत्यंनुचर-वती । भवति । अजांमित्वायेत्यजांमि-त्वाय । अनुष्टुभेत्यंनु-स्तुभा । अन्विति । चरति । आत्मा । वै । लोकम्पृणेतिं लोकं-पृणा । प्राणइतिप्र-अनः । अनुष्टुबित्यंनु-स्तुप् । तस्मात् । प्राणइतिप्र-अनः । सर्वांणि । अङ्गानि । अन्विति । चरति । ताः । अस्य । सूदंदोहसइतिसूदं-दोहसः । [२७] इतिं । आह । तस्मात् । परुंषिपरुषीतिपरुंषि-परुषि । रसंः । सोमम् । श्रीणन्ति । पृश्ञयः । इतिं । आह । अन्नम् । वै । पृश्ञि । अन्नम् । एव । अवेतिं । रुन्धे । अर्कः । वै । अग्निः । अर्कः । अन्नम् । अन्नम् । एव । अवेतिं । रुन्धे । जन्मन्न् । देवानांम् । विशंः । त्रिषु । एतिं । रोचने । दिवः । इतिं । आह । इमान् । एव । अस्मै । लोकान् । ज्योतिष्मतः । करोति । यः । वै । इष्टंकानाम् । प्रतिष्ठामितिप्रति-स्थाम् । वेदं । प्रतीतिं । एव । तिष्ठति । तया । देवतंया । अङ्गिरस्वत् । ध्रुवा । सीद । इतिं । आह । एषा । वै । इष्टंकानाम् । प्रतिष्ठेतिंप्रति-स्था । यः । एवम् । वेदं । प्रतीतिं । एव । तिष्ठति ॥ [२८] रूपाणिसूदंदोहसस्तयाषोडंशच॥ ❀ ॥६॥

सुवर्गायेतिंसुवः-गायं । वै । एषः । लोकाय । चीयते । यत् । अग्निः । वज्रंः । एकादशिनीं । यत् । अग्नौ । एकादशिनीम् । मिनुयात् । वज्रेण । एनम् । सुवर्गादितिंसुवः-गात् । लोकात् । अन्तः । दध्यात् । यत् । न । मिनुयात् । स्वरुंभिरितिस्वरुं-भिः । पशून् । वीतिं । अर्द्धयेत् । एकयूपमित्यैक-यूपम् । मिनोति । न । एनम् । वज्रेण । सुवर्गादितिंसुवः-गात् । लोकात् । अन्तर्दधातीत्यन्तः-दधाति । न । स्वरुंभिरितिस्वरुं-भिः । पशून् । वीतिं । अर्धयति । वीतिं । वै । एषः । इन्द्रियेणं । वीर्यैण । ऋध्यते । यः । अग्निम् । चिन्वन्न् । अधिक्रामतीत्यंधि-क्रामंति । ऐन्द्रिया । [२९] ऋचा । आक्रमंणमित्या-क्रमंणम् । प्रतीतिं । इष्टंकाम् । उपेतिं । दध्यात् । न । इन्द्रियेणं । वीर्यैण । वीतिं । ऋध्यते । रुद्रः । वै । एषः । यत् । अग्निः । तस्य । तिस्रः । शरव्याः । प्रतीचीं । तिरश्चीं । अनूचीं । ताभ्यंः । वै । एषः । एतिं । वृश्च्यते । यः । अग्निम् । चिनुते । अग्निम् । चित्वा । तिसृधन्वमितिंतिसृ-धन्वम् । अयाचितम् । ब्राह्मणाय । दद्यात् । ताभ्यंः । एव । नमंः । करोति । अथोइतिं । ताभ्यंः । एव । आत्मानंम् । निरितिं । क्रीणीते । यत् । ते । रुद्र । पुरः । [३०] । धनुंः । तत् ।

वातः। अन्विति । वातु । ते । तस्मै । ते । रुद्र । सꣳवथ्सरेणेतिसं-वथ्सरेण । नमः। करोमि । यत् । ते । रुद्र । दक्षिणा । धनुः । तत् । वातः । अन्विति । वातु । ते । तस्मै । ते । रुद्र । परिवथ्सरेणेतिपरि-वथ्सरेण । नमः । करोमि । यत् । ते । रुद्र । पश्चात्। धनुः । तत् । वातः । अन्विति । वातु । ते । तस्मै । ते । रुद्र । इदावथ्सरेण । नमः । करोमि । यत् । ते । रुद्र । उत्तरादित्युत्-तरात् । धनुः । तत् । [ ३१ ] वातः । अन्विति । वातु । ते । तस्मै । ते । रुद्र । इदुवथ्सरेणेतीदु-वथ्सरेण । नमः। करोमि । यत् । ते । रुद्र । उपरि । धनुः । तत् । वातः । अन्विति । वातु । ते । तस्मै । ते । रुद्र । वथ्सरेण । नमः । करोमि । रुद्रः । वै । एषः । यत् । अग्निः । सः। यथा । व्याघ्रः । क्रुद्धः । तिष्ठति । एवम् । वै । एषः । एतर् हिं । सञ्चितमितिसं-चितम् । एतैः । उपेति । तिष्ठते । नमस्कारैरितिनमः-कारैः । एव । एनम् । शमयति। ये । अग्नयः । [३२] पुरीष्याः । प्रविष्टाइतिप्र-विष्टाः । पृथिवीम् । अनु ॥ तेषाम् । त्वम् । असि । उत्तमइत्युत्-तमः । प्रेति । नः । जीवातवे । सुव ॥ आपम् । त्वा । अग्ने । मनसा । आपम् । त्वा । अग्ने । तपसा । आपम् । त्वा । अग्ने । दीक्षया । आपम् । त्वा । अग्ने । उपसद्भिरित्युपसत्-भिः । आपम् । त्वा । अग्ने । सुत्यया । आपम् । त्वा । अग्ने । दक्षिणाभिः । आपम् । त्वा । अग्ने । अवभृथेनेत्यव-भृथेन । आपम् । त्वा । अग्ने । वशया । आपम् । त्वा । अग्ने । स्वगाकारेणेतिस्वगा-कारेण । इति । आह । एषा । वै । अग्नेः । आप्तिः । तया । एव । एनम् । आप्नोति ॥[३३]
ऐन्द्रिया पुरउत्तराद्धनुस्तदग्नयआहाष्टौच ॥ ❀ ❀ ॥७॥

गायत्रेण । पुरस्तात् । उपेति । तिष्ठते । प्राणमितिप्र-अनम् । एव । अस्मिन्न् । दधाति । बृहद्रथन्तराभ्यामितिबृहत्-रथन्तराभ्याम् । पक्षौ । ओजः । एव । अस्मिन्न् । दधाति । ऋतुस्थायज्ञायज्ञियेन । पुच्छम् । ऋतुषु । एव । प्रतीति । तिष्ठति । पृष्ठैः । उपेति । तिष्ठते । तेजः । वै । पृष्ठानि । तेजः । एव । अस्मिन्न् । दधाति । प्रजापतिरितिप्रजा-पतिः । अग्निम् । असृजत । सः । अस्मात् । सृष्टः । पराङ् । ऐत् । तम् । वारवन्तीयेनेतिवार-वन्तीयेन । अवारयत । तत् । वारवन्तीयस्येतिवार-वन्तीयस्य । वारवन्तीयत्वमितिवारवन्तीय-त्वम् । श्यैतेन । श्येती । अकुरुत । तत् । श्यैतस्य । श्यैतत्वमितिश्यैत-त्वम् । [ ३४ ] यत् । वारवन्तीयेनेतिवार-वन्तीयेन । उप

तिष्ठतइत्युप-तिष्ठते । वारयते । एव । एनम् । श्यैतेन । श्येती । कुरुते । प्रजापतेः । हृदयेन । अपिपक्षमित्यपि-पक्षम् । प्रति । उपेति । तिष्ठते । प्रमाणम् । एव । अस्य । गच्छति । प्राच्या । त्वा । दिशा । सादयामि । गायत्रेण । छन्दसा । अग्निना । देवतया । अग्नेः । शीर्ष्णा । अग्नेः । शिरः । उपेति । दधामि । दक्षिणया । त्वा । दिशा । सादयामि । त्रैष्टुभेन । छन्दसा । इन्द्रेण । देवतया । अग्नेः । पक्षेण । अग्नेः । पक्षम् । उपेति । दधामि । प्रतीच्या । त्वा । दिशा । सादयामि । [३५] जागतेन । छन्दसा । सवित्रा । देवतया । अग्नेः । पुच्छेन । अग्नेः । पुच्छम् । उपेति । दधामि । उदीच्या । त्वा । दिशा । सादयामि । आनुष्टुभेनेत्यानु-स्तुभेन । छन्दसा । मित्रावरुणाभ्यामितिमित्रा-वरुणाभ्याम् । देवतया । अग्नेः । पक्षेण । अग्नेः । पक्षम् । उपेति । दधामि । ऊर्ध्वया । त्वा । दिशा । सादयामि । पाङ्क्तेन । छन्दसा । बृहस्पतिना । देवतया । अग्नेः । पृष्ठेन । अग्नेः । पृष्ठम् । उपेति । दधामि । यः । वै । अपात्मानमित्यप-आत्मानम् । अग्निम् । चिनुते । अपात्मेत्यप-आत्मा । अमुष्मिन् । लोके । भवति । यः । सात्मानमितिस-आत्मानम् । चिनुते । सात्मेतिस-आत्मा । अमुष्मिन् । लोके । भवति । आत्मेष्टकाइत्यात्म-इष्टकाः । उपेति । दधाति । एषः । वै । अग्नेः । आत्मा । सात्मानमितिस-आत्मानम् । एव । अग्निम् । चिनुते । सात्मेतिस-आत्मा । अमुष्मिन् । लोके । भवति । यः । एवम् । वेद ॥[३६] श्यैतत्वम्प्रतीच्यांत्वादिशासादयामियस्सात्मानञ्चिनुतेद्वाविꣳशतिश्च ॥ ॥८॥

अग्ने । उदधइत्युद-धे । या । ते । इषुः । युवा । नाम । तया । नः । मृड । तस्याः । ते । नमः । तस्याः । ते । उपेति । जीवन्तः । भूयास्म । अग्ने । दुध्र । गह्य । किꣳशिल । वन्य । या । ते । इषुः । युवा । नाम । तया । नः । मृड । तस्याः । ते । नमः । तस्याः । ते । उपेति । जीवन्तः । भूयास्म । पञ्च । वै । एते । अग्नयः । यत् । चितयः । उदधिरित्युद-धिः । एव । नाम । प्रथमः । दुध्रः । [३७] द्वितीयः । गह्यः । तृतीयः । किꣳशिलः । चतुर्थः । वन्यः । पञ्चमः । तेभ्यः । यत् । आहुतीरित्या-हुतीः । न । जुहुयात् । अध्वर्युम् । च । यजमानम् । च । प्रेति । दहेयुः । यत् । एताः । आहुतीरित्या-हुतीः । जुहोति । भागधेयेनेतिभाग-धेयेन । एव । एनान् । शमयति । न । आर्तिम् । एति । ऋच्छति । अध्वर्युः । न । यजमानः ।

वाक् । मे । आसन्न् । नसोः । प्राणइतिप्र-अनः । अक्ष्योः । चक्षुः । कर्णयोः । श्रोत्रम् । बाहुवोः । बलम् । ऊरुवोः । ओजः । अरिष्टा । विश्वानि । अङ्गानि । तनूः । [३८] तनुवा । मे । सह । नमः । ते । अस्तु । मा । मा । हिँसीः । अपेति । वै । एतस्मात् । प्राणाइतिप्र-अनाः । क्रामन्ति । यः । अग्निम् । चिन्वन्न् । अधिक्रामतीत्यधि-क्रामति । वाक् । मे । आसन्न् । नसोः । प्राणइतिप्र-अनः । इति । आह । प्राणानितिप्र-अनान् । एव । आत्मन्न् । धत्ते । यः । रुद्रः । अग्नौ । यः । अफ्स्वित्यप्-सु । यः । ओषधीषु । यः । रुद्रः । विश्वा । भुवना । आविवेशेत्या-विवेश । तस्मै । रुद्राय । नमः । अस्तु । आहुतिभागाइत्याहुति-भागाः । वै । अन्ये । रुद्राः । हविर्भागाइतिहविः-भागाः । [३९] अन्ये । शतरुद्रीयमितिशत-रुद्रीयम् । हुत्वा । गावीधुकम् । चरुम् । एतेन । यजुषा । चरमायाम् । इष्टकायाम् । नीति । दध्यात् । भागधेयेनेतिभाग-धेयेन । एव । एनम् । शमयति । तस्य । तु । वै । शतरुद्रीयमितिशत-रुद्रीयम् । हुतम् । इति । आहुः । यस्य । एतत् । अग्नौ । क्रियते । इति । वसवः । त्वा । रुद्रैः । पुरस्तात् । पान्तु । पितरः । त्वा । यमराजानइतियम-राजानः । पितृभिरितिपितृ-भिः । दक्षिणतः । पान्तु । आदित्याः । त्वा । विश्वैः । देवैः । पश्चात् । पान्तु । द्युतानः । त्वा । मारुतः । मरुद्भिरितिमरुत्-भिः । उत्तरतइत्युत्-तरतः । पातु । [४०] देवाः । त्वा । इन्द्रज्येष्ठाइतीन्द्र-ज्येष्ठाः । वरुणराजानइतिवरुण-राजानः । अधस्तात् । च । उपरिष्टात् । च । पान्तु । न । वै । एतेन । पूतः । न । मेध्यः । न । प्रोक्षितइतिप्र-उक्षितः । यत् । एनम् । अतः । प्राचीनम् । प्रोक्षतीतिप्र-उक्षति । यत् । सञ्चितमितिसं-चितम् । आज्येन । प्रोक्षतीतिप्र-उक्षति । तेन । पूतः । तेन । मेध्यः । तेन । प्रोक्षितइतिप्र-उक्षितः ॥ [४१] दुध्रस्तनूꣳ हविर्भागाःपातु द्वात्रिꣳशच्च ॥ ❀ ❀ ❀ ❀ ॥९॥

समीची । नाम । असि । प्राची । दिक् । तस्याः । ते । अग्निः । अधिपतिरित्यधि-पतिः । असितः । रक्षिता । यः । च । अधिपतिरित्यधि-पतिः । यः । च । गोप्ता । ताभ्याम् । नमः । तौ । नः । मृडयताम् । ते । यम् । द्विष्मः । यः । च । नः । द्वेष्टि । तम् । वाम् । जम्भे । दधामि । ओजस्विनी । नाम । असि । दक्षिणा । दिक् । तस्याः । ते । इन्द्रः । अधिपतिरित्यधि-पतिः । पृदाकुः । प्राची । नाम । असि ।

प्रतीची । दिक् । तस्याः । ते । [४२] सोमः । अधिपतिरित्यधि-पतिः । स्वजइति स्व-जः । अवस्थावेत्यव-स्थावा । नाम । असि । उदीची । दिक् । तस्याः । ते । वरुणः । अधिपतिरित्यधि-पतिः । तिरश्चराजिरितितिरश्च-राजिः । अधिपत्नीत्यधि-पत्नी । नाम । असि । बृहती । दिक् । तस्याः । ते । बृहस्पतिः । अधिपतिरित्यधि-पतिः । श्वित्रः । वशिनी । नाम । असि । इयम् । दिक् । तस्याः । ते । यमः । अधिपतिरित्यधि-पतिः । कल्माषग्रीवइतिकल्माष-ग्रीवः । रक्षिता । यः । च । अधिपतिरित्यधि-पतिः । यः । च । गोप्ता । ताभ्याम् । नमः । तौ । नः । मृडयताम् । ते । यम् । द्विष्मः । यः । च । [४३] नः । द्वेष्टि । तम् । वाम् । जम्भे । दधामि । एताः । वै । देवताः । अग्निम् । चितम् । रक्षन्ति । ताभ्यः । यत् । आहुतीरित्या-हुतीः । न । जुहुयात् । अध्वर्युम् । च । यजमानम् । च । ध्यायेयुः । यत् । एताः । आहुतीरित्या-हुतीः । जुहोति । भागधेयेनेतिभाग-धेयेन । एव । एनान् । शमयति । न । आर्तिम् । एति । ऋच्छति । अध्वर्युः । न । यजमानः । हेतयः । नाम । स्थ । तेषाम् । वः । पुरः । गृहाः । अग्निः । वः । इषवः । सलिलः । निलिम्पाइतिनि-लिम्पाः । नाम । [४४] स्थ । तेषाम् । वः । दक्षिणा । गृहाः । पितरः । वः । इषवः । सगरः । वज्रिणः । नाम । स्थ । तेषाम् । वः । पश्चात् । गृहाः । स्वप्नः । वः । इषवः । गह्वरः । अवस्थावानइत्यव-स्थावानः । नाम । स्थ । तेषाम् । वः । उत्तरादित्युत्-तरात् । गृहाः । आपः । वः । इषवः । समुद्रः । अधिपतयइत्यधि-पतयः । नाम । स्थ । तेषाम् । वः । उपरि । गृहाः । वर्षम् । वः । इषवः । अवस्वान् । क्रव्याः । नाम । स्थ । पार्थिवाः । तेषाम् । वः । इह । गृहाः । [४५] अन्नम् । वः । इषवः । निमिष इतिनि-मिषः । वातनाममितिवात-नामम् । तेभ्यः । वः । नमः । ते । नः । मृडयत । ते । यम् । द्विष्मः । यः । च । नः । द्वेष्टि । तम् । वः । जम्भे । दधामि । हुतादइतिहुत-अदः । वै । अन्ये । देवाः । अहुतादइत्यहुत-अदः । अन्ये । तान् । अग्निचिदित्यग्नि-चित् । एव । उभयान् । प्रीणाति । दध्ना । मधुमिश्रेणेतिमधु-मिश्रेण । एताः । आहुतीरित्या-हुतीः । जुहोति । भागधेयेनेतिभाग-धेयेन । एव । एनान् । प्रीणाति । अथोइति । खलु । आहुः । इष्टकाः । वै । देवाः । अहुतादइत्यहुत-अदः । इति । [४६] अनुपरिक्राममित्यनु-परिक्रामम् । जुहोति । अपरिवर्गमित्यपरि-वर्गम् ।

एव । एनान् । प्रीणाति । इमम् । स्तनम् । ऊर्जस्वन्तम् । धय । अपाम् । प्रप्यातमितिप्र-प्यातम् । अग्ने । सरिरस्य । मध्ये ॥ उत्सम् । जुषस्व । मधुमन्तमितिमधु-मन्तम् । ऊर्व । समुद्रियम् । सदनम् । एति । विशस्व ॥ यः । वै । अग्निम् । प्रयुज्येतिप्र-युज्य । न । विमुञ्चतीतिवि-मुञ्चति । यथा । अश्वः । युक्तः । अविमुच्यमानइत्यवि-मुच्यमानः । क्षुध्यन् । पराभवतीतिपरा-भवति । एवम् । अस्य । अग्निः । परेति । भवति । तम् । पराभवन्तमितिपरा-भवन्तम् । यजमानः । अनु । परेति । भवति । सः । अग्निम् । चित्वा । लूक्षः । [४७] भवति । इमम् । स्तनम् । ऊर्जस्वन्तम् । धय । अपाम् । इति । आज्यस्य । पूर्णाम् । स्रुचम् । जुहोति । एषः । वै । अग्नेः । विमोकइतिवि-मोकः । विमुच्येतिवि-मुच्य । एव । अस्मै । अन्नम् । अपीति । दधाति । तस्मात् । आहुः । यः । च । एवम् । वेद । यः । च । न । सुधायमितिसु-धायम् । ह । वै । वाजी । सुहितइतिसु-हितः । दधाति । इति । अग्निः । वाव । वाजी । तम् । एव । तत् । प्रीणाति । सः । एनम् । प्रीतः । प्रीणाति । वसीयान् । भवति ॥ [४८] प्रतीचीदिक्तस्यास्तेद्धिष्मोयश्चनिलिम्पानामेहगुहाइतिलूक्षोवसीयान्भवति ॥ ❀ ❀ ❀ ॥१०॥

इन्द्राय । राज्ञे । सूकरः । वरुणाय । राज्ञे । कृष्णः । यमाय । राज्ञे । ऋश्यः । ऋषभाय । राज्ञे । गवयः । शार्दूलाय । राज्ञे । गौरः । पुरुषराजायेतिपुरुष-राजाय । मर्कटः । क्षिप्रश्येनस्येतिक्षिप्र-श्येनस्य । वर्तिका । नीलङ्गोः । क्रिमिः । सोमस्य । राज्ञः । कुलुङ्गः । सिन्धोः । शिꣳशुमारः । हिमवतइतिहिम-वतः । हस्ती ॥ [४९] इन्द्रायाष्टाविꣳशतिः ॥ ❀ ❀ ❀ ॥११॥

मयुः । प्राजापत्यइतिप्राजा-पत्यः । ऊलः । हलीक्ष्णः । वृषदꣳशः । ते । धातुः । सरस्वत्यै । शारिः । श्येता । पुरुषवागितिपुरुष-वाक् । सरस्वते । शुकः । श्येतः । पुरुषवागितिपुरुष-वाक् । आरण्यः । अजः । नकुलः । शका । ते । पौष्णाः । वाचे । क्रौञ्चः ॥ [५०] मयुस्त्रयोविꣳशतिः ॥ ❀ ॥१२॥

अपाम् । नप्त्रे । जषः । नाक्रः । मकरः । कुलीकयः । ते । अकूपारस्य । वाचे । पैङ्गराजइतिपैङ्ग-राजः । भगाय । कुषीतकः । आती । वाहसः । दर्विदा । ते । वायव्याः । दिग्भ्यइतिदिक्-भ्यः । चक्रवाकः ॥ [५१] अपामेकान्नविꣳशतिः ॥ १३ ॥

बलाय । अजगरः । आखुः । सृजया । शयण्डकः । ते । मैत्राः । मृत्यवे । असितः । मन्यवे । स्वजइतिस्व-जः । कुम्भीनसइतिकुम्भी-नसः । पुष्करसादइतिपुष्कर-सादः । लोहिताहिरितिलोहित-अहिः । ते । त्वाष्ट्राः । प्रतिश्रुत्कायाइतिप्रति-श्रुत्कायै । वाहसः ॥ [५२] ॥ ❀ ❀ ॥१४॥

पुरुषमृगइतिपुरुष-मृगः । चन्द्रमसे । गोधा । कालका । दार्वाघाटइतिदारु-आघातः । ते । वनस्पतीनाम् । एणी । अह्ने । कृष्णः । रात्रियै । पिकः । क्ष्विङ्का । नीलशीर्ष्णीतिनील-शीर्ष्णी । ते । अर्यम्णे । धातुः । कन्कटः ॥ [५३] ॥ ॥१५॥

सौरी । बलाका । ऋश्यः । मयूरः । श्येनः । ते । गन्धर्वाणाम् । वसूनाम् । कपिञ्जलः । रुद्राणाम् । तित्तिरिः । रोहित् । कुण्डृणाची । गोलत्तिका । ताः । अप्सरसाम् । अरण्याय । सृमरः ॥ [५४] ❀ ❀ ॥१६॥

पृषतः । वैश्वदेवइतिवैश्व-देवः । पित्वः । न्यङ्कुः । कशः । ते । अनुमत्याइत्यनु-मत्यै । अन्यवापइत्यन्य-वापः । अर्धमासानामित्यर्ध-मासानाम् । मासाम् । कश्यपः । क्वयिः । कुटरुः । दात्यौहः । ते । सिनीवाल्यै । बृहस्पतये । शितिपुटः ॥ [५५] ॥१७॥

शका । भौमी । पान्त्रः । कशः । मान्थीलवः । ते । पितॄणाम् । ऋतूनाम् । जहका । सव्ँवथ्सरायेतिसं-वथ्सराय । लोपा । कपोतः । उलूकः । शशः । ते । नैरृताइतिनैः-ऋताः । कृकवाकुः । सावित्रः ॥ [५६] बलायपुरुषमृगस्सौरीपृषतश्शकाऽष्टादशाष्टादश ॥ ❀ ❀ ❀ ॥१८॥

रुरुः । रौद्रः । कृकलासः । शकुनिः । पिप्पका । ते । शरव्यायै । हरिणः । मारुतः । ब्रह्मणे । शार्गः । तरक्षुः । कृष्णः । श्वा । चतुरक्षइतिचतुः-अक्षः । गर्दभः । ते । इतरजनानामितीतर-जनानाम् । अग्नये । धूङ्क्ष्णा । [५७] रुरुर्विꣳशतिः ॥ ❀ ❀ ❀ ❀ ❀ ॥१९॥

अलजः । आन्तरिक्षः । उद्रः । मद्गुः । प्लवः । ते । अपाम् । अदित्यै । हꣳससाचिरितिहꣳस-साचिः । इन्द्राण्यै । कीर्शा । गृध्रः । शितिकक्षीतिशिति-कक्षी । वार्ध्राणसः । ते । दिव्याः । द्यावापृथिव्येतिद्यावा-पृथिव्या । श्वाविदितिश्व-वित् ॥ [५८] ❀ ❀ ॥२०॥

सुपर्णइतिसु-पर्णः । पार्जन्यः । हꣳसः । वृकः । वृषदꣳशः । ते । ऐन्द्राः । अपाम् । उद्रः । अर्यम्णे । लोपाशः । सिꣳहः । नकुलः । व्याघ्रः । ते । महेन्द्रायेतिमहा-इन्द्राय । कामाय । परस्वान् । [५९] अलजस्सुपर्णोऽष्टादशाष्टादश ॥२१॥

आग्नेयः । कृष्णग्रीवइतिकृष्ण-ग्रीवः । सारस्वती । मेषी । बभ्रुः । सौम्यः । पौष्णः । श्यामः । शितिपृष्ठइतिशिति-पृष्ठः । बार्हस्पत्यः । शिल्पः । वैश्वदेवइतिवैश्व-देवः । ऐन्द्रः । अरुणः । मारुतः । कल्माषः । ऐन्द्राग्नइत्यैन्द्र-अग्नः । सꣳहितइतिसं-हितः । अधोरामइत्यधः-रामः । सावित्रः । वारुणः । पेत्वः ॥ [६०] आग्नेयो द्वाविꣳशतिः ॥ ❀ ❀ ❀ ॥२२॥

अश्वः । तूपरः । गोमृगइतिगो-मृगः । ते । प्राजापत्याइतिप्राजा-पत्याः । आग्नेयौ । कृष्णग्रीवावितिकृष्ण-ग्रीवौ । त्वाष्ट्रौ । लोमशसक्थावितिलोमश-सक्थौ । शितिपृष्ठावितिशिति-पृष्ठौ । बार्हस्पत्यौ । धात्रे । पृषोदरइतिपृष-उदरः । सौर्यः । बलक्षः । पेत्वः ॥ [६१] अश्वष्षोडश ॥ ❀ ❀ ॥२३॥

अग्नये । अनीकवतइत्यनीक-वते । रोहिताञ्जिरितिरोहित-अञ्जिः । अनड्वान् । अधोरामावित्यधः-रामौ । सावित्रौ । पौष्णौ । रजतनाभीइतिरजत-नाभी । वैश्वदेवावितिवैश्व-देवौ । पिशङ्गौ । तूपरौ । मारुतः । कल्माषः । आग्नेयः । कृष्णः । अजः । सारस्वती । मेषी । वारुणः । कृष्णः । एकशितिपादित्येक-शितिपात् । पेत्वः ॥ [६२] अग्नयेऽनीकवतेद्वाविꣳशतिः ॥ ॥२४॥

यदेकेनप्रजापतिः प्रेणाऽनुयजुषाऽपो विश्वकर्माऽग्नआयाहिसुवर्गाय वज्रो गायत्रेणाग्नं उदधेसमीचीन्द्राय मयुरपाम्बलाय पुरुषमृगस्सौरीपृषतश्शकारुरुरलजस्सुपर्ण आग्नेयोऽश्वोऽग्नयेऽनीकवते चतुर्विꣳशतिः ॥ २४ ॥ यदेकेन सपापीयानितद्वा अग्नेर्द्धनुस्तद्देवास्त्वेन्द्रंज्येष्ठा अपान्नप्त्रेऽश्वस्तूपरोद्विषष्टिः ॥ ६२ ॥ यदेकेनैकशितिपात्पेत्वः ॥

हरिः ओ (३) म् ॥

इति पञ्चमकाण्डे पञ्चमः प्रश्नः ॥

## अथ पञ्चमकाण्डे-षष्ठः प्रश्नः ॥

### हरिः ओ (४) म् ॥

हिरण्यवर्णाइतिहिरण्य-वर्णाः । शुचयः । पावकाः । यासु । जातः । कश्यपः । यासु । इन्द्रः ॥ अग्निम् । याः । गर्भम् । दधिरे । विरूपाइतिवि-रूपाः । ताः । नः । आपः । शम् । स्योनाः । भवन्तु ॥ यासाम् । राजा । वरुणः । याति । मध्ये । सत्यानृतेइतिसत्य-अनृते । अवपश्यन्नित्यव-पश्यन्न् । जनानाम् ॥ मधुश्चुतइति मधु-श्चुतः । शुचयः । याः । पावकाः । ताः । नः । आपः । शम् । स्योनाः । भवन्तु ॥ यासाम् । देवाः । दिवि । कृण्वन्ति । भक्षम् । याः । अन्तरिक्षे । बहुधेतिबहु-धा । भवन्ति ॥ याः । पृथिवीम् । पयसा । उन्दन्ति । [१] शुक्राः । ताः । नः । आपः । शम् । स्योनाः । भवन्तु ॥ शिवेन । मा । चक्षुषा । पश्यत । आपः । शिवया । तनुवा । उपेति । स्पृशत । त्वचम् । मे ॥ सर्वान् । अग्नीन् । अप्सुषदइत्यप्सु-सदः । हुवे । वः । मयि । वर्चः । बलम् । ओजः । नीति । धत्त ॥ यत् । अदः । सम्प्रयतीरितिसं-प्रयतीः । अहौ । अनदत । हते ॥ तस्मात् । एति । नद्यः । नाम । स्थ । ता । वः । नामानि । सिन्धवः ॥ यत् । प्रेषिताइतिप्र-इषिताः । वरुणेन । ताः । शीभम् । समवल्गतेतिसं-अवल्गत ॥ [२] तत् । आप्नोत् । इन्द्रः । वः । यतीः । तस्मात् । आपः । अन्विति । स्थन ॥ अपकाममित्यप-कामम् । स्यन्दमानाः । अवीवरत । वः । हिकम् ॥ इन्द्रः । वः । शक्तिभिरिति शक्ति-भिः । देवीः । तस्मात् । वाः । नाम । वः । हितम् ॥ एकः । देवः । अपीति । अतिष्ठत् । स्यन्दमानाः । यथावशमितियथा-वशम् ॥ उदिति । आनिषुः । महीः । इति । तस्मात् । उदकम् । उच्यते ॥ आपः । भद्राः । घृतम् । इत् । आपः । आसुः । अग्नीषोमावित्यग्नी-सोमौ । बिभ्रति ॥ आपः । इत् । ताः ॥ तीव्रः । रसः । मधुपृचामितिमधु-पृचाम् । [३] अरङ्गमइत्यरं-गमः । एति । मा । प्राणेनेति प्र-अनेन । सह । वर्चसा । गन्न् ॥ आत् । इत् । पश्यामि । उत । वा । शृणोमि । एति । मा । घोषः । गच्छति । वाक् । नः । आसाम् ॥ मन्ये । भेजानः । अमृतस्य । तर् हि । हिरण्यवर्णाइतिहिरण्य-वर्णाः । अतृपम् । यदा । वः ॥ आपः । हि ।

स्थ । मयोभुवइतिमयः-भुवः । ताः । नः । ऊर्जे । दधातन ॥ महे । रणाय । चक्षसे ॥ यः । वः । शिवतमइतिशिव-तमः । रसः । तस्य । भाजयत । इह । नः ॥ उशतीः । इव । मातरः ॥ तस्मै । अरम् । गमाम । वः । यस्य । क्षयाय । जिन्वथ ॥ आपः । जनयथ । च । नः ॥ दिवि । श्रयस्व । अन्तरिक्षे । यतस्व । पृथिव्या । समिति । भव । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । असि । ब्रह्मवर्चसायेतिब्रह्म-वर्चसाय । त्वा ॥ [४] उन्दन्तिसमवल्गतमधुपृचाम्मातरोद्धाविँशतिश्च ॥ ॥१॥

अपाम् । ग्रहान् । गृह्णाति । एतत् । वाव । राजसूयमितिराज-सूयम् । यत् । एते । ग्रहाः । सवः । अग्निः । वरुणसवइतिवरुण-सवः । राजसूयमितिराज-सूयम् । अग्निसवइत्यग्नि-सवः । चित्यः । ताभ्याम् । एव । सूयते । अथोइति । उभौ । एव । लोकौ । अभीति । जयति । यः । च । राजसूयेनेतिराज-सूयेन । ईजानस्य । यः । च । अग्निचितइत्यग्नि-चितः । आपः । भवन्ति । आपः । वै । अग्नेः । भ्रातृव्याः । यत् । अपः । अग्नेः । अधस्तात् । उपदधातीत्युप-दधाति । भ्रातृव्याभिभूत्याइतिभ्रातृव्य-अभिभूत्यै । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । अमृतम् । [५] वै । आपः । तस्मात् । अद्भिरित्यत्-भिः । अवतान्तमित्यव-तान्तम् । अभीति । सिञ्चन्ति । न । आर्तिम् । एति । ऋच्छति । सर्वम् । आयुः । एति । यस्य । एताः । उपधीयन्तइत्युप-धीयन्ते । यः । उ । च । एनाः । एवम् । वेद । अन्नम् । वै । आपः । पशवः । आपः । अन्नम् । पशवः । अन्नादइत्यन्न-अदः । पशुमानितिपशु-मान् । भवति । यस्य । एताः । उपधीयन्तइत्युप-धीयन्ते । यः । उ । च । एनाः । एवम् । वेद । द्वादश । भवन्ति । द्वादश । मासाः । सँव्वँथ्सरइतिसं-वथ्सरः । सँव्वँथ्सरेणेतिसं-वथ्सरेण । एव । अस्मै । [६] अन्नम् । अवेति । रुन्धे । पात्राणि । भवन्ति । पात्रे । वै । अन्नम् । अद्यते । सयोनीतिस-योनि । एव । अन्नम् । अवेति । रुन्धे । एति । द्वादशात् । पुरुषात् । अन्नम् । अत्ति । अथोइति । पात्रात् । न । छिद्यते । यस्य । एताः । उपधीयन्तइत्युप-धीयन्ते । यः । उ । च । एनाः । एवम् । वेद । कुम्भाः । च । कुम्भीः । च । मिथुनानि । भवन्ति । मिथुनस्य । प्रजात्याइतिप्र-जात्यै । प्रेति । प्रजयेतिप्र-जया । पशुभिरितिपशु-भिः । मिथुनैः । जायते । यस्य । एताः । उपधीयन्तइत्युप-धीयन्ते ।

यः । उ । [७] च । एनाः । एवम् । वेद । शुक् । वै । अग्निः । सः । अध्वर्युम् । यजमानम् । प्रजाइतिप्र-जाः । शुचा । अर्पयति । यत् । अपः । उपदधातीत्युप-द धाति । शुचम् । एव । अस्य । शमयति । न । आर्तिम् । एति । ऋच्छति । अ ध्वर्युः । न । यजमानः । शाम्यन्ति । प्रजाइतिप्र-जाः । यत्र । एताः । उपधीयन्त इत्युप-धीयन्ते । अपाम् । वै । एतानि । हृदयानि । यत् । एताः । आपः । यत् । एताः । अपः । उपदधातीत्युप-दधाति । दिव्याभिः । एव । एनाः । समिति । सृ जति । वर्षुकः । पर्जन्यः । [८] भवति । यः । वै । एतासाम् । आयतनमित्या-यतनम् । क्लृप्तिम् । वेद । आयतनवानित्यायतन-वान् । भवति । कल्पते । अ स्मै । अनुसीतमित्यनु-सीतम् । उपेति । दधाति । एतत् । वै । आसाम् । आयत नमित्या-यतनम् । एषा । क्लृप्तिः । यः । एवम् । वेद । आयतनवानित्यायतन-वान् । भवति । कल्पते । अस्मै । द्वन्द्वमितिद्वं-द्वम् । अन्याः । उपेति । दधाति । चतस्रः । मध्ये । धृत्यै । अन्नम् । वै । इष्टकाः । एतत् । खलु । वै । साक्षादितिस-अक्षात् । अन्नम् । यत् । एषः । चरुः । यत् । एतम् । चरुम् । उपदधातीत्युप-द धाति । साक्षादितिस-अक्षात् । [९] एव । अस्मै । अन्नम् । अवेति । रुन्धे । मध्यतः । उपेति । दधाति । मध्यतः । एव । अस्मै । अन्नम् । दधाति । तस्मात् । मध्यतः । अन्नम् । अद्यते । बार्हस्पत्यः । भवति । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । अस्मै । अन्नम् । अवेति । रुन्धे । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । अ सि । ब्रह्मवर्चसायेतिब्रह्म-वर्चसाय । त्वा । इति । आह । तेजस्वी । ब्रह्मवर्चसी तिब्रह्म-वर्चसी । भवति । यस्य । एषः । उपधीयतइत्युप-धीयते । यः । उ । च । एनम् । एवम् । वेद ॥ [१०] अमृतमस्मै जायते यस्यैताउपधीयन्तेयउपर्जन्यंउ पदधाति साक्षाथ्सप्तचत्वारिंशच्च ॥ ❀ ❀ ❀ ॥२॥

भूतेष्टकाइतिभूत-इष्टकाः । उपेति । दधाति । अत्रात्रेत्यत्र-अत्र । वै । मृ त्युः । जायते । यत्रयत्रेतियत्र-यत्र । एव । मृत्युः । जायते । ततः । एव । एनम् । अवेति । यजते । तस्मात् । अग्निचिदित्यग्नि-चित् । सर्वम् । आयुः । एति । स र्वम् । हि । अस्य । मृत्यवः । अवेष्टाइत्यव-इष्टाः । तस्मात् । अग्निचिदित्यग्नि-चित् । न । अभिचरितवाइत्यभि-चरितवै । प्रत्यक् । एनम् । अभिचारइत्यभि-चारः ।

स्तृणुते । सूयते । वै । एषः । यः । अग्निम् । चिनुते । देवसुवामितिदेव-सुवाम् । एतानि । हवीꣳषि । भवन्ति । एतावन्तः । वै । देवानाम् । सवाः । ते । एव । [११] अस्मै । सवान् । प्रेति । यच्छन्ति । ते । एनम् । सुवन्ते । सवः । अग्निः । वरुणसवइतिवरुण-सवः । राजसूयमितिराज-सूयम् । ब्रह्मसवइतिब्रह्म-सवः । चित्यः । देवस्य । त्वा । सवितुः । प्रसवइतिप्र-सवे । इति । आह । सवितृप्रसूतइतिसवितृ-प्रसूतः । एव । एनम् । ब्रह्मणा । देवताभिः । अभीति । सिञ्चति । अन्नस्यान्नस्येत्यन्नस्य-अन्नस्य । अभीति । सिञ्चति । अन्नस्यान्नस्येत्यन्नस्य-अन्नस्य । अवरुध्याइत्यव-रुध्यै । पुरस्तात् । प्रत्यञ्चम् । अभीति । सिञ्चति । पुरस्तात् । हि । प्रतीचीनम् । अन्नम् । अद्यते । शीर्षतः । अभीति । सिञ्चति । शीर्षतः । हि । अन्नम् । अद्यते । एति । मुखात् । अन्ववस्रावयतीत्यनु-अवस्रावयति । [१२] मुखतः । एव । अस्मै । अन्नाद्यमित्यन्न-अद्यम् । दधाति । अग्नेः । त्वा । साम्राज्येनेतिसाम्-राज्येन । अभीति । सिञ्चामि । इति । आह । एषः । वै । अग्नेः । सवः । तेन । एव । एनम् । अभीति । सिञ्चति । बृहस्पतेः । त्वा । साम्राज्येनेतिसाम्-राज्येन । अभीति । सिञ्चामि । इति । आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । एनम् । अभीति । सिञ्चति । इन्द्रस्य । त्वा । साम्राज्येनेतिसाम्-राज्येन । अभीति । सिञ्चामि । इति । आह । इन्द्रियम् । एव । अस्मिन्न् । उपरिष्टात् । दधाति । एतत् । [१३] वै । राजसूयस्येतिराज-सूयस्य । रूपम् । यः । एवम् । विद्वान् । अग्निम् । चिनुते । उभौ । एव । लोकौ । अभीति । जयति । यः । च । राजसूयेनेतिराज-सूयेन । ईजानस्य । यः । च । अग्निचितइत्यग्नि-चितः । इन्द्रस्य । सुषुवाणस्य । दशधेतिदश-धा । इन्द्रियम् । वीर्यम् । परेति । अपतत् । तत् । देवाः । सौत्रामण्या । समिति । अभरन्न् । सूयते । वै । एषः । यः । अग्निम् । चिनुते । अग्निम् । चित्वा । सौत्रामण्या । यजेत । इन्द्रियम् । एव । वीर्यम् । सम्भृत्येतिसम्-भृत्य । आत्मन् । धत्ते ॥ [१४] तएवान्ववस्रावयत्येतदष्टाचत्वारिꣳशच ॥ ❀ ❀ ❀ ❀ ॥ ३ ॥

सजूरितिस-जूः । अब्दः । अयावभिरित्ययाव-भिः । सजूरितिस-जूः । उषाः । अरुणीभिः । सजूरितिस-जूः । सूर्यः । एतशेन । सजोषावितिस-जोषौ ।

अश्विना। दʼँसोभिरिति दʼँसः-भिः। सजूरिति स-जूः। अग्निः। वैश्वानरः। इडाभिः। घृतेन। स्वाहा। सँवथ्सरइति सं-वथ्सरः। वै। अब्दः। मासाः। अयावाः। उषाः। अरुणी। सूर्यः। एतशः। इमेइति। अश्विना। सँवथ्सरइति सं-वथ्सरः। अग्निः। वैश्वानरः। पशवः। इडा। पशवः। घृतम्। सँवथ्सरमिति सं-वथ्सरम्। पशवः। अनु। प्रेति। जायन्ते। सँवथ्सरेणेति सं-वथ्सरेण। एव। अस्मै। पशून्। प्रेति। जनयति। दर्भस्तम्बइति दर्भ-स्तम्बे। जुहोति। यत्। [१५] वै। अस्याः। अमृतम्। यत्। वीर्यम्। तत्। दर्भाः। तस्मिन्। जुहोति। प्रेति। एव। जायते। अन्नादइत्यन्न-अदः। भवति। यस्य। एवम्। जुह्वति। एताः। वै। देवताः। अग्नेः। पुरस्ताद्भागाइति पुरस्तात्-भागाः। ताः। एव। प्रीणाति। अथोइति। चक्षुः। एव। अग्नेः। पुरस्तात्। प्रतीति। दधाति। अनन्धः। भवति। यः। एवम्। वेद। आपः। वै। इदम्। अग्रे। सलिलम्। आसीत्। सः। प्रजापतिरिति प्रजा-पतिः। पुष्करपर्णइति पुष्कर-पर्णे। वातः। भूतः। अलेलायत्। सः। [१६] प्रतिष्ठामिति प्रति-स्थाम्। न। अविन्दत। सः। एतत्। अपाम्। कुलायम्। अपश्यत्। तस्मिन्। अग्निम्। अचिनुत। तत्। इयम्। अभवत्। ततः। वै। सः। प्रतीति। अतिष्ठत्। याम्। पुरस्तात्। उपादधादित्युप-अदधात्। तत्। शिरः। अभवत्। सा। प्राची। दिक्। याम्। दक्षिणतः। उपादधादित्युप-अदधात्। सः। दक्षिणः। पक्षः। अभवत्। सा। दक्षिणा। दिक्। याम्। पश्चात्। उपादधादित्युप-अदधात्। तत्। पुच्छम्। अभवत्। सा। प्रतीची। दिक्। याम्। उत्तरतइत्युत्-तरतः। उपादधादित्युप-अदधात्। [१७] सः। उत्तरइत्युत्-तरः। पक्षः। अभवत्। सा। उदीची। दिक्। याम्। उपरिष्टात्। उपादधादित्युप-अदधात्। तत्। पृष्ठम्। अभवत्। सा। ऊर्ध्वा। दिक्। इयम्। वै। अग्निः। पञ्चेष्टकइति पञ्च-इष्टकः। तस्मात्। यत्। अस्याम्। खनन्ति। अभीति। इष्टकाम्। तृन्दन्ति। अभीति। शर्कराम्। सर्वा। वै। इयम्। वयोभ्यइति वयः-भ्यः। नक्तम्। दृशे। दीप्यते। तस्मात्। इमाम्। वयाʼँसि। नक्तम्। न। अधीति। आसते। यः। एवम्। विद्वान्। अग्निम्। चिनुते। प्रतीति। एव। [१८] तिष्ठति। अभीति। दिशः। जयति। आग्नेयः। वै। ब्राह्मणः। तस्मात्। ब्राह्मणाय। सर्वासु। दि

खु । अधुंकम् । स्वाम् । एव । तत् । दिशंम् । अन्विति । एति । अपाम् । वै । अग्निः । कुलायम् । तस्मात् । आपः । अग्निम् । हारुकाः । स्वाम् । एव । तत् । योनिम् । प्रेति । विशन्ति ॥ [१९] यद्ंलेलायुथ्स उत्तरतउपादधाद्देवद्वात्रिंशच्च ॥४॥

सँव्वथ्सरमितिसं-वुथ्सरम् । उरूयम् । भूत्वा । द्वितीये । सँव्वथ्सरइतिसं-वथ्सरे । आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । ऐन्द्रम् । एकादशकपालमित्येकांदश-कपालम् । वैश्वदेवमितिवैश्व-देवम् । द्वादशकपालमिति द्वादश-कपालम् । बार्हस्पत्यम् । चरुम् । वैष्णवम् । त्रिकपालमितित्रि-कपालम् । तृतीये । सँव्वथ्सरइतिसं-वथ्सरे । अभिजितेत्यभि-जिता । यजेत । यत् । अष्टाकपालइत्यष्टा-कपालः । भवति । अष्टाक्षरेत्यष्टा-अक्षरा । गायत्री । आग्नेयम् । गायत्रम् । प्रातस्सवनमितिप्रातः-सवनम् । प्रातस्सवनमितिप्रातः-सवनम् । एव । तेन । दाधार । गायत्रीम् । छन्दः । यत् । एकादशकपालइत्येकांदश-कपालः । भवति । एकादशाक्षरेत्येकांदश-अक्षरा । त्रिष्टुक् । ऐन्द्रम् । त्रैष्टुभम् । माध्यन्दिनम् । सवनम् । माध्यन्दिनम् । एव । सवनम् । तेन । दाधार । त्रिष्टुभम् । [२०] छन्दः । यत् । द्वादशकपालइतिद्वादश-कपालः । भवति । द्वादशाक्षरेतिद्वादश-अक्षरा । जगती । वैश्वदेवमितिवैश्व-देवम् । जागतम् । तृतीयसवनमितितृतीय-सवनम् । तृतीयसवनमितितृतीय-सवनम् । एव । तेन । दाधार । जगतीम् । छन्दः । यत् । बार्हस्पत्यः । चरुः । भवति । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्म । एव । तेन । दाधार । यत् । वैष्णवः । त्रिकपालइतित्रि-कपालः । भवति । यज्ञः । वै । विष्णुः । यज्ञम् । एव । तेन । दाधार । यत् । तृतीये । सँव्वथ्सरइतिसं-वथ्सरे । अभिजितेत्यभि-जिता । यजते । अभिजित्याइत्यभि-जित्यै । यत् । सँव्वथ्सरमितिसं-वथ्सरम् । उरूयम् । बिभर्ति । इमम् । एव । [२१] तेन । लोकम् । स्पृणोति । यत् । द्वितीये । सँव्वथ्सरइतिसं-वथ्सरे । अग्निम् । चिनुते । अन्तरिक्षम् । एव । तेन । स्पृणोति । यत् । तृतीये । सँव्वथ्सरइतिसं-वथ्सरे । यजते । अमुम् । एव । तेन । लोकम् । स्पृणोति । एतम् । वै । परः । आट्णारः । कक्षीवानितिकक्षी-वान् । औशिजः । वीतहव्यइतिवीत-हव्यः । श्रायसः । त्रसदस्युः । पौरुकुथ्स्यइतिपौरु-कुथ्स्यः । प्रजाकामाइतिप्रजा-कामाः । अचिन्वत । ततः । वै । ते । सह

स्र꣫सहस्रमितिसहस्र-सहस्रम् । पुत्रान् । अविन्दन्त । प्रथते । प्रजयेतिप्र-जया । पशुभिरितिपशु-भिः । ताम् । मात्राम् । आप्नोति । याम् । ते । अगच्छन् । यः । एवम् । विद्वान् । एतम् । अग्निम् । चिनुते ॥ [२२] द्वाधारयत्रिष्टुभमिममेवैवच्चत्वारि च ॥ ॥ ५ ॥

प्रजापतिरितिप्रजा-पतिः । अग्निम् । अचिनुत । सः । क्षुरपविरितिक्षुर-पविः । भूत्वा । अतिष्ठत् । तम् । देवाः । बिभ्यतः । न । उपेति । आयन् । ते । छन्दोभिरितिछन्दः-भिः । आत्मानम् । छादयित्वा । उपेति । आयन् । तत् । छन्दसाम् । छन्दस्त्वमितिछन्दः-त्वम् । ब्रह्म । वै । छन्दा꣫सि । ब्रह्मणः । एतत् । रूपम् । यत् । कृष्णाजिनमितिकृष्ण-अजिनम् । कार्ष्णीइति । उपानहौ । उपेति । मुञ्चते । छन्दोभिरितिछन्दः-भिः । एव । आत्मानम् । छादयित्वा । अग्निम् । उपेति । चरति । आत्मनः । अहि꣫सायै । देवनिधिरितिदेव-निधिः । वै । एषः । नीति । धीयते । यत् । अग्निः । [२३] अन्ये । वा । वै । निधिमितिनि-धिम् । अगुप्तम् । विन्दन्ति । न । वा । प्रति । प्रेति । जानाति । उखाम् । एति । क्रामति । आत्मानम् । एव । अधिपामित्यधि-पाम् । कुरुते । गुप्त्यै । अथोइति । खलु । आहुः । न । आक्रम्येत्या-क्रम्या । इति । नैरृतीतिनैः-ऋती । उखा । यत् । आक्रामेदित्या-क्रामेत् । निरृत्याइतिनिः-ऋत्यै । आत्मानम् । अपीति । दध्यात् । तस्मात् । न । आक्रम्येत्या-क्रम्या । पुरुषशीरूपमितिपुरुष-शीरूपम् । उपेति । दधाति । गुप्त्यै । अथोइति । यथा । ब्रूयात् । एतत् । मे । गोपाय । इति । तादृक् । एव । तत् । [२४] प्रजापतिरितिप्रजा-पतिः । वै । अथर्वा । अग्निः । एव । दध्यङ् । आथर्वणः । तस्य । इष्टकाः । अस्थानि । एतम् । ह । वाव । तत् । ऋषिः । अभ्यनूवाचेत्यभि-अनूवाच । इन्द्रः । दधीचः । अस्थभिरित्यस्थ-भिः । इति । यत् । इष्टकाभिः । अग्निम् । चिनोति । सात्मानमितिस-आत्मानम् । एव । अग्निम् । चिनुते । सात्मेतिस-आत्मा । अमुष्मिन् । लोके । भवति । यः । एवम् । वेद । शरीरम् । वै । एतत् । अग्नेः । यत् । चित्यः । आत्मा । वैश्वानरः । यत् । चिते । वैश्वानरम् । जुहोति । शरीरम् । एव । सꣳस्कृत्य । [२५] अभ्यारोहतीत्यभि-आरोहति । शरीरम् । वै । एतत् । यजमानः । समिति । कुरुते । यत् । अग्निम् । चिनुते । यत् ।

चिते । वैश्वानरम् । जुहोति । शरीरम् । एव । सꣳस्कृत्य । आत्मना । अभ्यारोहतीत्यभि-आरोहति । तस्मात् । तस्य । न । अवेति । घ्नन्ति । जीवन्न् । एव । देवान् । अपीति । एति । वैश्वानर्या । ऋचा । पुरीषम् । उपेति । दधाति । इयम् । वै । अग्निः । वैश्वानरः । तस्य । एषा । चितिः । यत् । पुरीषम् । अग्निम् । एव । वैश्वानरम् । चिनुते । एषा । वै । अग्नेः । प्रिया । तनूः । यत् । वैश्वानरः । प्रियाम् । एव । अस्य । तनुवम् । अवेति । रुन्धे ॥ [२६] अग्निष्टथ्सꣳस्कृत्यामेर्दशंच ॥६॥

अग्नेः । वै । दीक्षयाँ । देवाः । विराजमितिवि-राजम् । आप्नुवन्न् । तिस्रः । रात्रीः । दीक्षितः । स्यात् । त्रिपदेतित्रि-पदा । विराडितिवि-राट् । विराजमितिवि-राजम् । आप्नोति । षट् । रात्रीः । दीक्षितः । स्यात् । षट् । वै । ऋतवः । सꣳवथ्सरइतिसं-वथ्सरः । सꣳवथ्सरइतिसं-वथ्सरः । विराडितिवि-राट् । विराजमितिवि-राजम् । आप्नोति । दश । रात्रीः । दीक्षितः । स्यात् । दशाक्षरेतिदश-अक्षरा । विराडितिवि-राट् । विराजमितिवि-राजम् । आप्नोति । द्वादश । रात्रीः । दीक्षितः । स्यात् । द्वादश । मासाः । सꣳवथ्सरइतिसं-वथ्सरः । सꣳवथ्सरइतिसं-वथ्सरः । विराडितिवि-राट् । विराजमितिवि-राजम् । आप्नोति । त्रयोदशेतित्रयः-दश । रात्रीः । दीक्षितः । स्यात् । त्रयोदशेतित्रयः-दश । [२७] मासाः । सꣳवथ्सरइतिसं-वथ्सरः । सꣳवथ्सरइतिसं-वथ्सरः । विराडितिवि-राट् । विराजमितिवि-राजम् । आप्नोति । पञ्चदशेतिपञ्च-दश । रात्रीः । दीक्षितः । स्यात् । पञ्चदशेतिपञ्च-दश । वै । अर्धमासस्येत्यर्ध-मासस्य । रात्रयः । अर्धमासशइत्यर्धमास-शः । सꣳवथ्सरइतिसं-वथ्सरः । आप्यते । सꣳवथ्सरइतिसं-वथ्सरः । विराडितिवि-राट् । विराजमितिवि-राजम् । आप्नोति । सप्तदशेतिसप्त-दश । रात्रीः । दीक्षितः । स्यात् । द्वादश । मासाः । पञ्च । ऋतवः । सः । सꣳवथ्सरइतिसं-वथ्सरः । सꣳवथ्सरइतिसं-वथ्सरः । विराडितिवि-राट् । विराजमितिवि-राजम् । आप्नोति । चतुर्विꣳशतिमितिचतुः-विꣳशतिम् । रात्रीः । दीक्षितः । स्यात् । चतुर्विꣳशतिरितिचतुः-विꣳशतिः । अर्धमासाइत्यर्ध-मासाः । सꣳवथ्सरइतिसं-वथ्सरः । सꣳवथ्सरइतिसं-वथ्सरः । विराडितिवि-राट् । विराजमितिवि-राजम् । आप्नोति । त्रिꣳशतम् । रात्रीः । दीक्षितः । स्यात् । [२८] त्रिꣳशदक्षरेतित्रिꣳशत्-अक्षरा । विराडितिवि-राट् । विराजमितिवि-रा

जम् । आप्नोति । मासम् । दीक्षितः । स्यात् । यः । मासः । सः । सँव्वथ्सरइति
सं-वथ्सरः । सँव्वथ्सरइतिसं-वथ्सरः । विराडितिवि-राट् । विराजमितिवि-राजम् ।
आप्नोति । चतुरः । मासः । दीक्षितः । स्यात् । चतुरः । वै । एतम् । मासः । व
संवः । अबिभरुः । ते । पृथिवीम् । एति । अजयन्न् । गायत्रीम् । छन्दः । अष्टौ ।
रुद्राः । ते । अन्तरिक्षम् । एति । अजयन्न् । त्रिष्टुभम् । छन्दः । द्वादश । आदि
त्याः । ते । दिवम् । एति । अजयन्न् । जगतीम् । छन्दः । ततः । वै । ते । व्यावृ
तमितिवि-आवृतम् । अगच्छन्न् । श्रैष्ठ्यम् । देवानाम् । तस्मात् । द्वादश । मा
सः । भृत्वा । अग्निम् । चिन्वीत । द्वादश । मासाः । सँव्वथ्सरइतिसं-वथ्सरः । सँव्व
थ्सरइतिसं-वथ्सरः । अग्निः । चित्यः । तस्य । अहोरात्राणीत्यहः-रात्राणि । इष्टकाः ।
आप्तेष्टकमित्याप्त-इष्टकम् । एनम् । चिनुते । अथोइति । व्यावृतमितिवि-आवृतम् ।
एव । गच्छति । श्रैष्ठ्यम् । समानानाम् ॥ [२९] स्यात्त्रयोदशत्रिꣳशतꣳरात्री
र्दीक्षितस्स्याद्वैतेऽष्टाविꣳशतिश्च ॥ ❀ ❀ ❀ ॥७॥

सुवर्गायेतिसुवः-गाय । वै । एषः । लोकाय । चीयते । यत् । अग्निः । तम् ।
यत् । न । अन्वारोहेदित्यनु-आरोहेत् । सुवर्गादितिसुवः-गात् । लोकात् । यजमा
नः । हीयेत । पृथिवीम् । एति । अक्रमिषम् । प्राणइतिप्र-अनः । मा । मा । हा
सीत् । अन्तरिक्षम् । एति । अक्रमिषम् । प्रजेतिप्र-जा । मा । मा । हासीत् ।
दिवम् । एति । अक्रमिषम् । सुवः । अगन्म । इति । आह । एषः । वै ।
अग्नेः । अन्वारोहइत्यनु-आरोहः । तेन । एव । एनम् । अन्वारोहतीत्यनु-आरोह
ति । सुवर्गस्येतिसुवः-गस्य । लोकस्य । समष्ट्याइतिसं-अष्ट्यै । यत् । पक्षसम्मि
तामितिपक्ष-सम्मिताम् । मिनुयात् । [३०] कनीयाꣳसम् । यज्ञक्रतुमितियज्ञ-क्र
तुम् । उपेति । इयात् । पापीयसी । अस्य । आत्मनः । प्रजेतिप्र-जा । स्यात् ।
वेदिसम्मितामितिवेदि-सम्मिताम् । मिनोति । ज्यायाꣳसम् । एव । यज्ञक्रतुमि
तियज्ञ-क्रतुम् । उपेति । एति । न । अस्य । आत्मनः । पापीयसी । प्रजेतिप्र-
जा । भवति । साहस्रम् । चिन्वीत । प्रथमम् । चिन्वानः । सहस्रसम्मितइतिसह
स्र-सम्मितः । वै । अयम् । लोकः । इमम् । एव । लोकम् । अभीति । जयति ।
द्विषाहस्रमितिद्वि-साहस्रम् । चिन्वीत । द्वितीयम् । चिन्वानः । द्विषाहस्रमितिद्वि-

साहस्रम् । वै । अन्तरिक्षम् । अन्तरिक्षम् । एव । अभीति । जयति । त्रिषाहस्रमितित्रि-साहस्रम् । चिन्वीत । तृतीयम् । चिन्वानः । [३१] त्रिषाहस्रइतित्रि-साहस्रः । वै । असौ । लोकः । अमुम् । एव । लोकम् । अभीति । जयति । जानुदघ्नमितिजानु-दघ्नम् । चिन्वीत । प्रथमम् । चिन्वानः । गायत्रिया । एव । इमम् । लोकम् । अभ्यारोहतीत्यभि-आरोहति । नाभिदघ्नमितिनाभि-दघ्नम् । चिन्वीत । द्वितीयम् । चिन्वानः । त्रिष्टुभा । एव । अन्तरिक्षम् । अभ्यारोहतीत्यभि-आरोहति । ग्रीवदघ्नमितिग्रीव-दघ्नम् । चिन्वीत । तृतीयम् । चिन्वानः । जगत्या । एव । अमुम् । लोकम् । अभ्यारोहतीत्यभि-आरोहति । न । अग्निम् । चित्वा । रामाम् । उपेति । इयात् । अयोनौ । रेतः । धास्यामि । इति । न । द्वितीयम् । चित्वा । अन्यस्य । स्त्रियम् । [३२] उपेति । इयात् । न । तृतीयम् । चित्वा । काम् । चन । उपेति । इयात् । रेतः । वै । एतत् । नीति । धत्ते । यत् । अग्निम् । चिनुते । यत् । उपेयादित्युप-इयात् । रेतसा । वीति । ऋध्येत । अथो इति । खलु । आहुः । अप्रजस्यमित्यप्र-जस्यम् । तत् । यत् । न । उपेयादित्युप-इयात् । इति । यत् । रेतस्सिचाविति रेतः-सिचौ । उपदधातीत्युप-दधाति । तेइति । एव । यजमानस्य । रेतः । बिभृतः । तस्मात् । उपेति । इयात् । रेतसः । अस्कन्दाय । त्रीणि । वाव । रेतांसि । पिता । पुत्रः । पौत्रः । [३३] यत् । द्वेइति । रेतस्सिचाविति रेतः-सिचौ । उपदध्यादित्युप-दध्यात् । रेतः । अस्य । वीति । छिन्द्यात् । तिस्रः । उपेति । दधाति । रेतसः । सन्तत्याइतिसं-तत्यै । इयम् । वाव । प्रथमा । रेतस्सिगितिरेतः-सिक् । वाक् । वै । इयम् । तस्मात् । पश्यन्ति । इमाम् । पश्यन्ति । वाचम् । वदन्तीम् । अन्तरिक्षम् । द्वितीया । प्राणइतिप्र-अनः । वै । अन्तरिक्षम् । तस्मात् । न । अन्तरिक्षम् । पश्यन्ति । न । प्राणमितिप्र-अनम् । असौ । तृतीया । चक्षुः । वै । असौ । तस्मात् । पश्यन्ति । अमूम् । पश्यन्ति । चक्षुः । यजुषा । इमाम् । च । [३४] अमूम् । च । उपेति । दधाति । मनसा । मध्यमाम् । एषाम् । लोकानाम् । क्लृप्त्यै । अथोइति । प्राणानामितिप्र-अनानाम् । इष्टः । यज्ञः । भृगुभिरितिभृगु-भिः । आशीर्दाइत्याशीः-दाः । वसुभिरितिवसु-भिः । तस्य । ते । इष्टस्य । वीतस्य । द्रविणा । इह । भक्षीय । इति । आह । स्तुतशस्त्रे

इतिस्तुत-शस्त्रे । एव । एतेन । वु_ । पिता । मातरिश्वा । अच्छिद्रा । पदा । धाः ।
अच्छिद्राः । उशिजः । पदा । अन्विति । तरुषुः । सोमः । विश्वविदितिविश्व-
वित् । नेता । नेषत् । बृहस्पतिः । उक्थामदानीत्युक्थ-मदानि । शंसिषत् । इ
ति । आह । एतत् । वै । अग्नेः । उक्थम् । तेन । एव । एनम् । अन्विति । शंस
ति । [३५] मिनुयात्तृतीयञ्चिन्वानस्त्रियम्पौत्रंश्चवैमस्तचं ॥ ❀ ❀ ॥८॥

सूयते । वै । एषः । अग्नीनाम् । यः । उखायाम् । भ्रियते । यत् । अधः ।
सादयेत् । गर्भाः । प्रपादुकाइतिप्र-पादुकाः । स्युः । अथोइति । यथा । सवात् ।
प्रत्यवरोहतीतिप्रति-अवरोहति । तादृक् । एव । तत् । आसन्दी । सादयति । गर्भा
णाम् । धृत्यै । अप्रपादायेत्यप्र-पादाय । अथोइति । सवम् । एव । एनम् । करो
ति । गर्भः । वै । एषः । यत् । उख्यः । योनिः । शिक्यम् । यत् । शिक्यात् । उ
खाम् । निरूहेदितिनिः-ऊहेत् । योनेः । गर्भम् । निरिति । हन्यात् । षडुद्याममि
तिषट्-उद्यामम् । शिक्यम् । भवति । षोढाविहितइतिषोढा-विहितः । वै । [३६] पु
रुषः । आत्मा । च । शिरः । च । चत्वारि । अङ्गानि । आत्मन् । एव । एनम् ।
बिभर्ति । प्रजापतिरितिप्रजा-पतिः । वै । एषः । यत् । अग्निः । तस्य । उखा ।
च । उलूखलम् । च । स्तनौ । तौ । अस्य । प्रजाइतिप्र-जाः । उपेति । जीवन्ति ।
यत् । उखाम् । च । उलूखलम् । च । उपदधातीत्युप-दधाति । ताभ्याम् । एव ।
यजमानः । अमुष्मिन् । लोके । अग्निम् । दुहे । सँव्वथ्सरइतिसं-वथ्सरः । वै । ए
षः । यत् । अग्निः । तस्य । त्रेधाविहिताइतित्रेधा-विहिताः । इष्टकाः । प्राजापत्या
इतिप्राजा-पत्याः । वैष्णवीः । [३७] वैश्वकर्मणीरितिवैश्व-कर्मणीः । अहोरात्राणीत्य
हः-रात्राणि । एव । अस्य । प्राजापत्याइतिप्राजा-पत्याः । यत् । उख्यम् । बिभ
र्ति । प्राजापत्याइतिप्राजा-पत्याः । एव । तत् । उपेति । धत्ते । यत् । समिधइति
सं-इधः । आदधातीत्या-दधाति । वैष्णवाः । वै । वनस्पतयः । वैष्णवीः । एव ।
तत् । उपेति । ध_ । यत् । इष्टकाभिः । अग्निम् । चिनोति । इयम् । वै । विश्वक
र्मेतिविश्व-कर्मा । वैश्वकर्मणीरितिवैश्व-कर्मणीः । एव । तत् । उपेति । धत्ते । तस्मात् ।
आहुः । त्रिवृदितित्रि-वृत् । अग्निः । इति । तम् । वै । एतम् । यजमानः । एव ।
चिन्वीत । यत् । अस्य । अन्यः । चिनुयात् । यत् । तम् । दक्षिणाभिः । न । राध

येत् । अग्निम् । अस्य । वृञ्जीत । यः । अस्य । अग्निम् । चिनुयात् । तम् । दक्षिणाभिः । राधयेत् । अग्निम् । एव । तत् । स्पृणोति ॥ [३८] षोढाविहितोवै वैष्णवीरन्योविंशतिश्चं ॥ ❀ ❀ ❀ ❀ ॥ ९ ॥

प्रजापतिरितिप्रजा-पतिः । अग्निम् । अचिनुत । ऋतुभिरित्यृतु-भिः । संव्वथ्सरमितिसं-वथ्सरम् । वसन्तेन । एव । अस्य । पूर्वार्धमितिपूर्व-अर्धम् । अचिनुत । ग्रीष्मेण । दक्षिणम् । पक्षम् । वर्षाभिः । पुच्छम् । शरदा । उत्तरमित्युत्-तरम् । पक्षम् । हेमन्तेन । मध्यम् । ब्रह्मणा । वै । अस्य । तत् । पूर्वार्धमितिपूर्व-अर्धम् । अचिनुत । क्षत्रेण । दक्षिणम् । पक्षम् । पशुभिरितिपशु-भिः । पुच्छम् । विशा । उत्तरमित्युत्-तरम् । पक्षम् । आशया । मध्यम् । यः । एवम् । विद्वान् । अग्निम् । चिनुते । ऋतुभिरित्यृतु-भिः । एव । एनम् । चिनुते । अथोइति । एतत् । एव । सर्वम् । अवेति । [३९] रुन्धे । शृण्वन्ति । एनम् । अग्निम् । चिक्यानम् । अत्ति । अन्नम् । रोचते । इयम् । वाव । प्रथमा । चितिः । ओषधयः । वनस्पतयः । पुरीषम् । अन्तरिक्षम् । द्वितीया । वयांसि । पुरीषम् । असौ । तृतीया । नक्षत्राणि । पुरीषम् । यज्ञः । चतुर्थी । दक्षिणा । पुरीषम् । यजमानः । पञ्चमी । प्रजेतिप्र-जा । पुरीषम् । यत् । त्रिचितीकमितित्रि-चितीकम् । चिन्वीत । यज्ञम् । दक्षिणाम् । आत्मानम् । प्रजामितिप्र-जाम् । अन्तः । इयात् । तस्मात् । पञ्चचितीकइतिपञ्च-चितीकः । चेतव्यः । एतत् । एव । सर्वम् । स्पृणोति । यत् । तिस्रः । चितयः । [४०] त्रिवृदितित्रि-वृत् । हि । अग्निः । यत् । द्वेइति । द्विपादितिद्वि-पात् । यजमानः । प्रतिष्ठित्याइतिप्रति-स्थित्यै । पञ्च । चितयः । भवन्ति । पाङ्क्तः । पुरुषः । आत्मानम् । एव । स्पृणोति । पञ्च । चितयः । भवन्ति । पञ्चभिरितिपञ्च-भिः । पुरीषैः । अभीति । ऊहति । दश । समिति । पद्यन्ते । दशाक्षरइतिदश-अक्षरः । वै । पुरुषः । यावान् । एव । पुरुषः । तम् । स्पृणोति । अथोइति । दशाक्षरेतिदश-अक्षरा । विराडितिवि-राट् । अन्नम् । विराडितिवि-राट् । विराजीतिवि-राजि । एव । अन्नाद्यइत्यन्न अद्ये । प्रतीति । तिष्ठति । संव्वथ्सरइतिसं-वथ्सरः । वै । षष्ठी । चितिः । ऋतवः । पुरीषम् । षट् । चितयः । भवन्ति । षट् । पुरीषाणि । द्वादश । समिति । पद्यन्ते । द्वादश । मासाः । संव्वथ्सरइतिसं-वथ्स

रः । सँव॒थ्स॒रइति॑सं-व॒थ्स॒रे । ए॒व । प्रतीति॑ । ति॒ष्ठ॒ति॒ ॥ [ ४१ ] अव॒चित॑य॒ः पुरी॑ष
म्पञ्च॑दशच ॥ ❀ ❀ ❀ ❀ ॥१०॥

रोहि॑तः । धू॒म्ररो॑हित॒इति॑धू॒म्र-रो॒हि॒तः । क॒र्कन्धु॑रोहित॒इति॑क॒र्कन्धु-रो॒हि॒तः ।
ते । प्रा॒जा॒प॒त्याइति॑प्राजा-प॒त्याः । ब॒भ्रुः । अ॒रु॒णब॑भ्रु॒रित्य॑रु॒ण-ब॒भ्रुः । शु॒कब॑भ्रुरि
ति॒शु॒क-ब॒भ्रुः । ते । रौ॒द्राः । श्येत॑ः । श्ये॒ता॒रुष॒इति॑श्येत-अ॒रुषः । श्येत॑ग्रीव॒इति॒श्येत॑-
ग्री॒वः । ते । पि॒तृ॒दे॒व॒त्याइति॑पितृ-दे॒व॒त्याः । ति॒स्रः । कृ॒ष्णाः । व॒शाः । वा॒रु॒ण्य॑ः ।
ति॒स्रः । श्वे॒ताः । व॒शाः । सौ॒र्य॑ः । मै॒त्रा॒बा॒र्ह॒स्प॒त्याइति॑मैत्रा-बा॒र्ह॒स्प॒त्याः । धू॒म्र
ल॑ला॒म॒इति॑धू॒म्र-ल॒ला॒माः । तू॒प॒राः ॥ [४२] ❀ ❀ ॥११॥

पृश्नि॑ः । ति॒र॒श्चीन॑पृश्नि॒रिति॑तिर॒श्चीन॑-पृश्नि॒ः । ऊ॒र्ध्वपृ॑श्नि॒रित्यू॒र्ध्व-पृश्नि॒ः ।
ते । मा॒रु॒ताः । फ॒ल्गूः । लो॒हि॒तो॒र्णीति॑लोहित-ऊ॒र्णी । ब॒ल॒क्षी । ताः । सा॒र॒स्व॒
त्य॑ः । पृष॑ती । स्थू॒लपृ॑ष॒तीति॑स्थूल-पृ॒ष॒ती । क्षु॒द्रपृ॑ष॒तीति॑क्षुद्र-पृ॒ष॒ती । ताः । वै॒
श्व॒दे॒व्य॑इति॑वैश्व-दे॒व्य॑ः । ति॒स्रः । श्या॒माः । व॒शाः । पौ॒ष्णि॒य॑ः । ति॒स्रः । रोहि॑
णीः । व॒शाः । मै॒त्रि॒य॑ः । ऐ॒न्द्रा॒बा॒र्ह॒स्प॒त्याइत्यै॑न्द्रा-बा॒र्ह॒स्प॒त्याः । अ॒रु॒णल॑ला॒मइ
त्य॑रु॒ण-ल॒ला॒माः । तू॒प॒राः ॥ [ ४३ ] रोहि॑त॒ः पृश्नि॒ष्षड्वि॑ँशति॒ष्षड्वि॑ँशतिः॥१२॥

शि॒ति॒बा॒हु॒रिति॑शिति-बा॒हुः । अ॒न्यत॑श्शितिबा॒हु॒रित्य॒न्यत॑ः-शि॒ति॒बा॒हुः ।
स॒म॒न्तशि॑तिबा॒हु॒रिति॑सम॒न्त-शि॒ति॒बा॒हुः । ते । ऐ॒न्द्र॒वा॒य॒वाइत्यै॑न्द्र-वा॒य॒वाः । शि॒
ति॒रन्ध्र॒इति॑शिति-रन्ध्रः । अ॒न्यत॑श्शितिरन्ध्र॒इत्य॒न्यत॑ः-शि॒ति॒र॒न्ध्रः । स॒म॒न्तशि॑तिर
न्ध्र॒इति॑सम॒न्त-शि॒ति॒र॒न्ध्रः । ते । मै॒त्रा॒व॒रु॒णाइति॑मैत्रा-व॒रु॒णाः । शु॒द्धवा॑ल॒इति॑शु
द्ध-वा॒लः । स॒र्वशु॑द्धवाल॒इति॑स॒र्व-शु॒द्ध॒वा॒लः । म॒णिवा॑ल॒इति॑म॒णि-वा॒लः । ते । आ॒
श्वि॒नाः । ति॒स्रः । शि॒ल्पाः । व॒शाः । वै॒श्व॒दे॒व्य॑इति॑वैश्व-दे॒व्य॑ः । ति॒स्रः । श्येनी॑ः ।
प॒र॒मे॒ष्ठि॒ने । सो॒मा॒पौ॒ष्णाइति॑सोमा-पौ॒ष्णाः । श्या॒मल॑ला॒म॒इति॑श्या॒म-ल॒ला॒माः ।
तू॒प॒राः ॥ [ ४४ ] ❀ ❀ ❀ ॥१३॥

उ॒न्नत॒इत्यु॑त्-न॒तः । ऋ॒ष॒भः । वा॒म॒नः । ते । ऐ॒न्द्रा॒व॒रु॒णाइत्यै॑न्द्रा-व॒रु॒णाः ।
शिति॑ककु॒दिति॒शिति॑-क॒कुत् । शि॒ति॒पृ॒ष्ठ॒इति॑शिति-पृ॒ष्ठः । शिति॑भस॒दिति॒शिति॑-भ॒
स॒त् । ते । ऐ॒न्द्रा॒बा॒र्ह॒स्प॒त्याइत्यै॑न्द्रा-बा॒र्ह॒स्प॒त्याः । शि॒ति॒पा॒दिति॑शिति-पात् ।
शि॒त्यो॒ष्ठ॒इति॑शिति-ओ॒ष्ठः । शि॒ति॒भ्रु॒रिति॑शिति-भ्रुः । ते । ऐ॒न्द्रा॒वै॒ष्ण॒वाइत्यै॑न्द्रा-वै

ष्णवाः । तिसूः । सिध्माः । वृशाः । वैश्वकर्मण्यइतिवैश्व-कर्मण्यः । तिसूः । धात्रे । पृषोदराइतिपृष-उदराः । ऐन्द्रापौष्णाइत्यैन्द्रा-पौष्णाः । श्येतललामाइति श्येत-ललामाः । तूपराः ॥ [४५] शितिबाहुरुन्नतःपञ्चविꣳशतिःपञ्चविꣳशतिः ॥

कर्णाः । त्रयः । यामाः । सौम्याः । त्रयः । श्वितिङ्गाः । अग्नये । यविष्ठाय । त्रयः । नकुलाः । तिसूः । रोहिणीः । त्र्यव्यइतित्रि-अव्यः । ताः । वसूनाम् । तिसूः । अरुणाः । दित्यौह्यः । ताः । रुद्राणाम् । सोमैन्द्राइतिसोम-ऐन्द्राः । बभ्रुलंलामाइतिबभ्रु-ललामाः । तूपराः ॥ [४६] कर्णास्त्रयोविꣳशतिः ॥ १५ ॥

शुण्ठाः । त्रयः । वैष्णवाः । अधीलोधकर्णाइत्यधीलोध-कर्णाः । त्रयः । विष्णवे । उरुक्रमायेत्युरु-क्रमाय । लप्सुदिनः । त्रयः । विष्णवे । उरुगायायेत्युरु-गायाय । पञ्चावीरितिपञ्च-अवीः । तिस्रः । आदित्यानाम् । त्रिवथ्साइतित्रि-वथ्साः । तिस्रः । अङ्गिरसाम् । ऐन्द्रावैष्णवाइत्यैन्द्रा-वैष्णवाः । गौरलंलामाइतिगौर-ललामाः । तूपराः ॥ [४७] शुण्ठाविꣳशतिः ॥ ❁ ❁ ॥ १६ ॥

इन्द्राय । राज्ञे । त्रयः । शितिपृष्ठाइतिशिति-पृष्ठाः । इन्द्राय । अधिराजायेत्यधि-राजाय । त्रयः । शितिककुदइतिशिति-ककुदः । इन्द्राय । स्वराज्ञइतिस्व-राज्ञे । त्रयः । शितिभसदइतिशिति-भसदः । तिस्रः । तुर्यौह्यः । साध्यानाम् । तिस्रः । पष्ठौह्यः । विश्वेषाम् । देवानाम् । आग्नेन्द्राः । कृष्णलंलामाइतिकृष्ण-ललामाः । तूपराः ॥ [४८] इन्द्रायराज्ञेद्वाविꣳशतिः ॥ ❁ ❁ ॥ १७ ॥

अदित्यै । त्रयः । रोहितैताइतिरोहित-एताः । इन्द्राण्यै । त्रयः । कृष्णैताइतिकृष्ण-एताः । कुहै । त्रयः । अरुणैताइत्यरुण-एताः । तिसूः । धेनवः । राकायै । त्रयः । अनड्वाहः । सिनीवाल्यै । आग्नावैष्णवाइत्याग्ना-वैष्णवाः । रोहितललामाइतिरोहित-ललामाः । तूपराः ॥ [४९] अदित्याअष्टादश ॥ ❁ ॥ १८ ॥

सौम्याः । त्रयः । पिशङ्गाः । सोमाय । राज्ञे । त्रयः । सारङ्गाः । पार्जन्याः । नभोरूपाइतिनभः-रूपाः । तिसूः । अजाः । मलूहाः । इन्द्राण्यै । तिसूः । मेष्यः । आदित्याः । द्यावापृथिव्याइतिद्यावा-पृथिव्याः । मालङ्गाः । तूपराः ॥ [५०] सौम्याएकान्नविꣳशतिः ॥ ❁ ❁ ❁ ॥ १९ ॥

वारुणाः । त्रयः । कृष्णलंलामाइतिकृष्ण-ललामाः । वरुणाय । राज्ञे । त्रयः ।

रोहितललामाइतिरोहित-ललामाः । वरुणाय । रिशादसइतिरिश-अदसे । त्रयः । अरुणललामाइत्यरुण-ललामाः । शिल्पाः । त्रयः । वैश्वदेवाइतिवैश्व-देवाः । त्रयः । पृश्नयः । सर्वदेवत्याइतिसर्व-देवत्याः । ऐन्द्रासूराइत्यैन्द्रा-सूराः । श्येतललामाइति श्येत-ललामाः । तूपराः । [ ५१ ] वारुणाविंꣳशतिः ॥ ❀ ❀ ॥ २० ॥

[1]सोमाय । स्वराज्ञइतिस्व-राज्ञे । अनोवाहावित्यनः-वाहौ । अनड्वाहौ । इन्द्राग्निभ्यामितीन्द्राग्नि-भ्याम् । ओजोदाभ्यामित्योजः-दाभ्याम् । उष्टारौ । इन्द्राग्निभ्यामितीन्द्राग्नि-भ्याम् । बलदाभ्यामितिबल-दाभ्याम् । सीरवाहावितिसीर-वाहौ । अवीइति । द्वेइति । धेनूइति । भौमीइति । दिग्भ्यइतिदिक्-भ्यः । वडबेइति । द्वेइति । धेनूइति । भौमीइति । वैराजीइति । पुरुषीइति । द्वेइति । धेनूइति । भौमीइति । वायवे । आरोहणवाहावित्यारोहण-वाहौ । अनड्वाहौ । वारुणीइति । कृष्णेइति । वशेइति । अराड्यौ । दिव्यौ । ऋषभौ । परिमरावितिपरि-मरौ ॥ [ ५२ ] सोमाय स्वराज्ञे चतुस्त्रिꣳशत् ॥ ❀ ❀ ॥ २१ ॥

एकादश । प्रातः । गव्याः । पशवः । एति । लभ्यन्ते । छगलः । कल्माषः । किकिदीविः । विदीगयः । ते । त्वाष्ट्राः । सौरीः । नव । श्वेताः । वशाः । अनूबन्ध्याइत्यनु-बन्ध्याः । भवन्ति । आग्नेयः । ऐन्द्राग्नइत्यैन्द्र-अग्नः । आश्विनः । ते । विशालयूपइतिविशाल-यूपे । एति । लभ्यन्ते ॥ [ ५३ ] एकादशप्रातःपञ्चविꣳशतिः ॥ ❀ ❀ ❀ ❀ ॥ २२ ॥

पिशङ्गाः । त्रयः । वासन्ताः । सारङ्गाः । त्रयः । ग्रैष्माः । पृषन्तः । त्रयः । वार्षिकाः । पृश्नयः । त्रयः । शारदाः । पृश्निसक्थाइतिपृश्नि-सक्थाः । त्रयः । हैमन्तिकाः । अवलिप्ताइत्यव-लिप्ताः । त्रयः । शैशिराः । सꣳवत्सरायेतिसं-वत्सराय । निवक्षसइतिनि-वक्षसः ॥ [ ५४ ] पिशङ्गाविꣳशतिः ॥ ❀ ॥ २३ ॥

---

(१) अस्मिन्ननुवाके पदान्तः ईकारः एकारश्च प्रग्रहो भवति ॥ तथाच प्रातिशाख्ये— (अ-४,सू ४८) 'सोमायस्वैतस्मिन्' इति ॥ अस्यार्थः पूर्वोक्त एव । उदा—अवी, वडबे, इत्यादि ॥ 'स्वराज्ञे' 'वायवे' इति पदद्वयस्थः एकारस्तु प्रगृह्यो न भवति । तथाच तत्रैव—'नज्ञेऽह्ने नित्यम्' (अ-४, सू-३९) इति, 'अवेचावेच' (अ-४, सू-९३) इतिच ॥ अनयोरर्थस्तु—'ज्ञे, अह्ने, अवे, इत्येतेषु स्थितः अन्त्यः स्वरः विध्यन्तरप्राप्तमपि प्रगृह्यत्वं न भजते । यथा—स्वराज्ञेऽनोवाहौ । अह्ने कृष्णः । वायव आरोहणवाहौ ॥ पदान्त ऊकारश्च सर्वत्र प्रगृह्यो भवति । तथाच तत्रैव—'ऊकारः' (अ-४,सू-९) इति ॥ उक्तएवार्थः । उदा—धेनू इत्यादि ॥

रोहितः कृष्णाधूम्रलंलामाः पृश्निश्श्यामा अरुणलंलामाशितिबाहुश्शिल्पा श्श्येनीश्श्यामलंलामा उन्नतस्सिध्माः कर्मण्यंश्श्येतंललामाः कर्णाबभ्रुलंलामाश्शुण्ठागौरलंलमाइन्द्राय कृष्णलंलामा अदित्यैरोहितललामास्सौम्यामालङ्गावारुणास्सूराश्श्येतंललामादर्श ॥ ❀ ❀ ❀ ❀ ॥

हिरंण्यवर्णा अपाङ्गृहान्भूतेष्टकास्सजूस्संवथ्सरम्प्रजापंति स्सरूषु रूपंविशमे वैं दीक्षयांसुवर्गायतय्यन्नसूयतें प्रजापंति श्ऋतुभीरोहितः पृश्निश्शितिबाहुरुन्नतः कर्णाश्शुण्ठाइन्द्रायादित्यै सौम्यावारुणास्सोमायैकादशपिशङ्गास्त्रयोंविंशतिः॥२३॥

हिरंण्यवर्णाभूतेष्टकाश्छन्दोयत्कनीयाꣳसन्त्रिवृद्धर्यमिवीरुणाश्चतुंष्पञ्चाशत् ॥५४॥

हिरंण्यवर्णास्सꣳवथ्सरायनिवंरूषसः ॥ ❀ ❀ ॥

हरिः ओ (३) म् ॥

इति पञ्चमकाण्डे षष्ठः प्रश्नः ॥

---

## अथ पञ्चमकाण्डे सप्तमः प्रश्नः ॥

हरिः ओ (४) म् ॥

यः। वै। अयंथादेवतमित्ययंथा-देवतम्। अग्निम्। चिनुते। एतिं। देवताभ्यः। वृश्च्यते। पापीयान्। भवति। यः। यथादेवतमितियथा-देवतम्। न। देवताभ्यः। एतिं। वृश्च्यते। वसीयान्। भवति। आग्नेय्या। गायत्रिया। प्रथमाम्। चितिम्। अभीति। मृशेत्। त्रिष्टुभा। द्वितीयाम्। जगंत्या। तृतीयाम्। अनुष्टुभेत्यनु-स्तुभा। चतुर्थीम्। पङ्क्त्या। पञ्चमीम्। यथादेवतमितियथा-देवतम्। एव। अग्निम्। चिनुते। न। देवताभ्यः। एतिं। वृश्च्यते। वसीयान्। भवति। इडायै। वै। एषा। विभंक्तिरितिवि-भक्तिः। पशवंः। इडा। पशुभिरितिपशु-भिः। एनम्। [१] चिनुते। यः। वै। प्रजापतयइतिप्रजा-पतये। प्रतिप्रोच्येतिप्रति-प्रोच्यं। अग्निम्। चिनोति। न। आर्तिम्। एतिं। ऋच्छति। अश्वौ। अभितः। तिष्ठेताम्। कृष्णः। उत्तरतइत्युत्-तरतः। श्वेतः। दक्षिणः। तौ। आलभ्येत्या-

लभ्यं । इष्टकाः । उपेति । दध्यात् । एतत् । वै । प्रजापतेरितिप्रजा-पतेः । रूपम् । प्राजापत्यइतिप्राजा-पत्यः । अश्वः । साक्षादितिस-अक्षात् । एव । प्रजापतयइतिप्रजा-पतये । प्रतिप्रोच्येतिप्रति-प्रोच्य । अग्निम् । चिनोति । न । आर्तिम् । एति । ऋच्छति । एतत् । वै । अह्नः । रूपम् । यत् । श्वेतः । अश्वः । रात्रियै । कृष्णः । एतत् । अह्नः । [२] रूपम् । यत् । इष्टकाः । रात्रियै । पुरीषम् । इष्टकाः । उपधास्यन्नित्युप-धास्यन् । श्वेतम् । अश्वम् । अभीति । मृशेत् । पुरीषम् । उपधास्यन्नित्युप-धास्यन् । कृष्णम् । अहोरात्राभ्यामित्यहः-रात्राभ्याम् । एव । एनम् । चिनुते । हिरण्यपात्रमितिहिरण्य-पात्रम् । मधोः । पूर्णम् । ददाति । मधव्यः । असानि । इति । सौर्या । चित्रवत्येतिचित्र-वत्या । अवेति । ईक्षते । चित्रम् । एव । भवति । मध्यन्दिने । अश्वम् । अवेति । घ्रापयति । असौ । वै । आदित्यः । इन्द्रः । एषः । प्रजापतिरितिप्रजा-पतिः । प्राजापत्यइतिप्राजा-पत्यः । अश्वः । तम् । एव । साक्षादितिस-अक्षात् । ऋध्नोति ॥ [३] एनमेतदह्नोऽष्टाचत्वारिंशच्च ॥ १ ॥

त्वाम् । अग्ने । वृषभम् । चेकितानम् । पुनः । युवानम् । जनयन्न् । उपागामित्युप-आगाम् ॥ अस्थूरि । नः । गार्हपत्यानीतिगार्ह-पत्यानि । सन्तु । तिग्मेन । नः । ब्रह्मणा । समिति । शिशाधि ॥ पशवः । वै । एते । यत् । इष्टकाः । चित्यांश्चित्यामितिचित्यां-चित्याम् । ऋषभम् । उपेति । दधाति । मिथुनम् । एव । अस्य । तत् । यज्ञे । करोति । प्रजननायेतिप्र-जननाय । तस्मात् । यूथेयूथइतियूथे-यूथे । ऋषभः ॥ संवथ्सरस्येतिसं-वथ्सरस्य । प्रतिमामितिप्रति-माम् । याम् । त्वा । रात्रि । उपासतइत्युप-आसते ॥ प्रजामितिप्र-जाम् । सुवीरामितिसु-वीराम् । कृत्वा । विश्वम् । आयुः । वीति । अश्नवत् ॥ प्राजापत्यामितिप्राजा-पत्याम् । [४] एताम् । उपेति । दधाति । इयम् । वाव । एषा । एकाष्टकेत्येक-अष्टका । यत् । एव । एका

(१) अयं नकारः संहितायां णत्वमापद्यते । तथा प्रातिशाख्ये—(अ-७,सू-२) 'षु षू कृधिसुवस्सामिन्द्रास्थूर्युरुवाष्षट् त्रिग्रामनिष्पूर्वः' इति ॥ अस्यार्थः—'षु, षू, कृधिसुवः, समिन्द्र, अस्थूरि, उरु, वाः, षट्, त्रि, ग्राम, निः, एवंपूर्वो नकारो णत्वमापद्यते । यथा—ऊर्ध्व ऊषण ऊतये । 'पदग्रहणेषु पदं गम्येत' इति परिभाषया 'गृहेषुनः' इत्यत्र पदैकदेशनिमित्तस्य नकारस्य न णत्वम् । मोषूण इन्द्र । षु, षू, इत्येतयोर्विकृतयोर्ग्रहणं षत्वाभावकाले णत्वाभावप्रदर्शनार्थम् । यथा—सुनः । न ऊतये । सूनः । न इन्द्र । इति । ब्रह्मणा कृधिसुवर्णशुक्रम् । कृधीतिकिम् । सुवर्न शुक्रस्स्वाहा । समिन्द्रणो मनसा । समितिकिम् । वर्तयेन्द्रनर्दबुद । अस्थूरिणोगार्हपत्यानि । उरुकृदुरुणस्कृधि । वार्णामिवोहितम् । षण्णवत्यैस्वाहा । त्रिणवस्तोमोवसूनाम् । ग्रामणीयं प्राप्नुवन्ति । निर्णेनिजतिततः । विसर्गेण किम् । निनोरयिम् ॥

ष्टकायामित्येक-अष्टकायाम् । अन्नम् । क्रियते । तत् । एव । एतया । अवेति । रुन्धे । एषा । वै । प्रजापतेरितिप्रजा-पतेः । कामदुघेतिकाम-दुघा । तया । एव । यजमानः । अमुष्मिन्न् । लोके । अग्निम् । दुहे । येन । देवाः । ज्योतिषा । ऊर्ध्वाः । उदायन्नित्युत्-आयन्न् । येन । आदित्याः । वसवः । येन । रुद्राः ॥ येन । अङ्गिरसः । महिमानम् । आनशुः । तेन । एतु । यजमानः । स्वस्ति ॥ सुवर्गायेतिसुवः-गाय । वै । एषः । लोकाय । [५] चीयते । यत् । अग्निः । येन । देवाः । ज्योतिषा । ऊर्ध्वाः । उदायन्नित्युत्-आयन्न् । इति । उख्यम् । समिति । इन्धे । इष्टकाः । एव । एताः । उपेति । धत्ते । वानस्पत्याः । सुवर्गस्येतिसुवः-गस्य । लोकस्य । समष्ट्याइतिसं-अष्ट्यै । शतायुधायेतिशत-आयुधाय । शतवीर्यायेतिशत-वीर्याय । शतोतयइतिशत-ऊतये । अभिमातिषाहइत्यभिमाति-साहे ॥ शतम् । यः । नः । शरदः । अजीतान् । इन्द्रः । नेषत् । अतीति । दुरितानीतिदुः-इतानि । विश्वा ॥ ये । चत्वारः । पथयः । देवयानाइतिदेव-यानाः । अन्तरा । द्यावापृथिवीइतिद्यावा-पृथिवी । वियन्तीतिवि-यन्ति ॥ तेषाम् । यः । अज्यानिम् । अजीतिम् । आवहादित्या-वहात् । तस्मै । नः । देवाः । [६] परीति । दत्त । इह । सर्वे ॥ ग्रीष्मः । हेमन्तः । उत । नः । वसन्तः । शरत् । वर्षाः । सुवितम् । नः । अस्तु ॥ तेषाम् । ऋतूनाम् । शतशारदानामितिशत-शारदानाम् । निवातइतिनि-वाते । एषाम् । अभये । स्याम ॥ इदुवथ्सरायेतीदु-वथ्सराय । परिवथ्सरायेतिपरि-वथ्सराय । सँवथ्सरायेतिसं-वथ्सराय । कृणुत । बृहत् । नमः ॥ तेषाम् । वयम् । सुमताविति सु-मतौ । यज्ञियानाम् । ज्योक् । अजीताः । अहताः । स्याम ॥ भद्रात् । नः । श्रेयः । समिति । अनैष्ट । देवाः । त्वया । अवसेन । समिति । अशीमहि । त्वा ॥ सः । नः । मयोभूरितिमयः-भूः । [१]पितोइति । [७] एति । विशस्व । शम् । तोकाय । तनुवे । स्योनः ॥ अज्यानीः । एताः । उपेति । दधाति । एताः । वै । देवताः । अपराजिताइत्यपरा-जिताः । ताः । एव । प्रेति । वि

(१) 'पितो' इति पदस्थः ओकारः प्रगृह्यो भवति । तथाच प्रातिशाख्ये—(अ-४,सू-७) 'समहदथपितृपूर्वश्च' इति । अस्यार्थः—स, म, ह, द, थ, इत्येतद्व्यञ्जनपूर्वः पितृपूर्वश्च असांहितः ओकारः प्रगृह्यो भवति । उदा—सोएवैषैतस्य । माभेर्माऽरोमोएषाम् । उपहूता (३) हो । इन्दो इत्याह । तथो एवोत्तरे । पितो आविशस्व । एवंपूर्व इति किम् । शविष्ठ वृष्णवागहि । असांहित इति किम् । प्रसो अग्ने ॥

शति । न । एव । जीयते । ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । यत् । अर्धमासा इत्यर्ध-मासाः । मासाः । ऋतवः । सँवथ्सरइतिसं-वथ्सरः । ओषधीः । पचन्ति । अ थ । कस्मात् । अन्याभ्यः । देवताभ्यः । आग्रयणम् । निरिति । उप्यते । इति । एताः । हि । तत् । देवताः । उदजयन्नित्युत्-अजयन्न् । यत् । ऋतुभ्यइत्यृतु-भ्यः । निर्वपेदितिनिः-वपेत् । देवाताभ्यः । समदमितिस-मदम् । दध्यात् । आग्र यणम् । निरुप्येतिनिः-उप्य । एताः । आहुतीरित्या-हुतीः । जुहोति । अर्धमासा नित्यर्ध-मासान् । एव । मासान् । ऋतून् । सँवथ्सरमितिसं-वथ्सरम् । प्रीणाति । न । देवताभ्यः । समदमितिस-मदम् । दधाति । भद्रात् । नः । श्रेयः । समिति । अनैष्ट । देवाः । इति । आह । हुताद्यायेतिहुत-अद्याय । यजमानस्य । अपराभा वायेत्यपरा-भावाय ॥ [८] प्राजापत्याल्ँलोकायदेवाः पितोदध्यादाग्रयणम्पञ्च विꣳशतिश्च ॥ ❀ ❀ ❀ ❀ ॥२॥

इन्द्रस्य । वज्रः । असि । वार्त्रघ्नइतिवार्त्र-घ्नः । तनूपाइतितनू-पाः । नः । प्रतिस्पशइतिप्रति-स्पशः ॥ यः । नः । पुरस्तात् । दक्षिणतः । पश्चात् । उत्तरत इत्युत्-तरतः । अघायुरित्यघ-युः । अभिदासतीत्यभि-दासति । एतम् । सः । अश्मा नम् । ऋच्छतु ॥ देवासुराइतिदेव-असुराः । सय्ँयत्ताइतिसं-यत्ताः । आसन्न् । ते । असुराः । दिग्भ्यइतिदिक्-भ्यः । एति । अबाधन्त । तान् । देवाः । इष्वा । च । वज्रेण । च । अपेति । अनुदन्त । यत् । वज्रिणीः । उपदधातीत्युप-दधाति । इ ष्वा । च । एव । तत् । वज्रेण । च । यजमानः । भ्रातृव्यान् । अपेति । नुदते । दिक्षु । उपेति । [९] दधाति । देवपुराइतिदेव-पुराः । एव । एताः । तनूपानी रितितनू-पानीः । परीति । ऊहते । अग्नाविष्णूइत्यग्ना-विष्णू । सजोषसेतिस-जोष सा । इमाः । वर्धन्तु । वाम् । गिरः ॥ द्युम्नैः । वाजेभिः । एति । गतम् ॥ ब्रह्मवा दिनइतिब्रह्म-वादिनः । वदन्ति । यत् । न । देवतायै । जुह्वति । अथ । किन्देव त्येतिकिं-देवत्या । वसोः । धारा । इति । अग्निः । वसुः । तस्य । एषा । धारा । विष्णुः । वसुः । तस्य । एषा । धारा । आग्नावैष्णव्येत्याग्ना-वैष्णव्या । ऋचा । व सोः । धाराम् । जुहोति । भागधेयेनेतिभाग-धेयेन । एव । एनौ । समिति । अर्ध यति । अथोइति । एताम् । [१०] एव । आहुतिमित्या-हुतिम् । आयतनवतीमि

त्यायतन-वतीम् । करोति । यत्कामइतियत्-कामः । एनाम् । जुहोति । तत् । एव । अवेति । रुन्धे । रुद्रः । वै । एषः । यत् । अग्निः । तस्य । एतेइति । तनुवौ । घोरा । अन्या । शिवा । अन्या । यत् । शतरुद्रीयमितिशत-रुद्रीयम् । जुहोति । या । एव । अस्य । घोरा । तनूः । ताम् । तेन । शमयति । यत् । वसोः । धाराम् । जुहोति । या । एव । अस्य । शिवा । तनूः । ताम् । तेन । प्रीणाति । यः । वै । वसोः । धारायै । [११] प्रतिष्ठामितिप्रति-स्थाम् । वेद । प्रतीति । एव । तिष्ठति । यत् । आज्यम् । उच्छिष्येतेत्युत्-शिष्येत । तस्मिन्न् । ब्रह्मौदनमितिब्रह्म-ओदनम् । पचेत् । तम् । ब्राह्मणाः । चत्वारः । प्रेति । अश्नीयुः । एषः । वै । अग्निः । वैश्वानरः । यत् । ब्राह्मणः । एषा । खलु । वै । अग्नेः । प्रिया । तनूः । यत् । वैश्वानरः । प्रियायाम् । एव । एनाम् । तनुवाम् । प्रतीति । स्थापयति । चतस्रः । धेनूः । दद्यात् । ताभिः । एव । यजमानः । अमुष्मिन्न् । लोके । अग्निम् । दुहे ॥ [१२] उपैतान्धारायै षट्चत्वारिꣳशच्च ॥ ❀ ❀ ॥ ३ ॥

चित्तिम् । जुहोमि । मनसा । घृतेन । इति । आह । अदाभ्या । वै । नाम । एषा । आहुतिरित्या-हुतिः । वैश्वकर्मणीतिवैश्व-कर्मणी । न । एनम् । चिक्यानम् । भ्रातृव्यः । दभ्नोति । अथोइति । देवताः । एव । अवेति । रुन्धे । अग्ने । तम् । अद्य । इति । पङ्क्त्या । जुहोति । पङ्क्त्या । आहुत्येत्या-हुत्या । यज्ञमुखमितियज्ञ-मुखम् । एति । रभते । सप्त । ते । अग्ने । समिधइतिसं-इधः । सप्त । जिह्वाः । इति । आह । होत्राः । एव । अवेति । रुन्धे । अग्निः । देवेभ्यः । अपेति । अक्रामत् । भागधेयमितिभाग-धेयम् । [१३] इच्छमानः । तस्मै । एतत् । भागधेयमितिभाग-धेयम् । प्रेति । अयच्छन्न् । एतत् । वै । अग्नेः । अग्निहोत्रमित्यग्नि-होत्रम् । एतर्हि । खलु । वै । एषः । जातः । यर्हि । सर्वः । चितः । जाताय । एव । अस्मै । अन्नम् । अपीति । दधाति । सः । एनम् । प्रीतः । प्रीणाति । वसीयान् । भवति । ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । यत् । एषः । गार्हपत्यइतिगार्ह-पत्यः । चीयते । अथ । क्व । अस्य । आहवनीयइत्या-हवनीयः । इति । असौ । आदित्यः । इति । ब्रूयात् । एतस्मिन्न् । हि । सर्वाभ्यः । देवताभ्यः । जुह्वति । [१४] यः । एवम् । विद्वान् । अग्निम् । चिनुते । साक्षादितिस-अक्षात् ।

एवं । देवताः । ऋध्नोति । अग्ने । यशस्विन्न् । यशसा । इमम् । अर्पय । इन्द्रावतीमितीन्द्र-वतीम् । अपचितीमित्यप-चितीम् । इह । एति । वह ॥ अयम् । मूर्धा । परमेष्ठी । सुवर्चाइतिसु-वर्चाः । समानानाम् । उत्तमश्लोकइत्युत्तम-श्लोकः । अस्तु ॥ भद्रम् । पश्यन्तः । उपेति । सेदुः । अग्ने । तपः । दीक्षाम् । ऋषयः । सुवर्विदइतिसुवः-विदः ॥ ततः । क्षत्रम् । बलम् । ओजः । च । जातम् । तत् । अस्मै । देवाः । अभि । समिति । नमन्तु ॥ धाता । विधातेतिवि-धाता । परमा । [१५] उत । सन्दृगितिसं-दृक् । प्रजापतिरितिप्रजा-पतिः । परमेष्ठी । विराजेति वि-राजा ॥ स्तोमाः । छन्दाꣳसि । निविदइतिनि-विदः । मे । आहुः । एतस्मै । राष्ट्रम् । अभि । समिति । नमाम ॥ अभ्यावर्तध्वमित्यमि-आवर्तध्वम् । उपेति । मा । एति । इत । साकम् । अयम् । शास्ता । अधिपतिरित्यधि-पतिः । वः । अस्तु ॥ अस्य । विज्ञानमितिवि-ज्ञानम् । अनु । समिति । रभध्वम् । इमम् । पश्चात् । अन्विति । जीवाथ । सर्वे ॥ राष्ट्रभृतइतिराष्ट्र-भृतः । एताः । उपेति । दधाति । एषा । वै । अग्नेः । चितिः । राष्ट्रभृदितिराष्ट्र-भृत् । तया । एव । अस्मिन्न् । राष्ट्रम् । दधाति । राष्ट्रम् । एव । भवति । न । अस्मात् । राष्ट्रम् । भ्रꣳशते ॥ [१६] भागधेयञ्जुहुतिपरमाराष्ट्रन्दधातिसप्तच ॥ ❀ ❀ ॥४॥

यथा । वै । पुत्रः । जातः । म्रियते । एवम् । वै । एषः । म्रियते । यस्य । अग्निः । उख्यः । उद्वायतीत्युत्-वायति । यत् । निर्मन्थ्यमितिनिः-मन्थ्यम् । कुर्यात् । वीति । छिन्द्यात् । भ्रातृव्यम् । अस्मै । जनयेत् । सः । एव । पुनः । परीध्यइतिपरि-इध्यः । स्वात् । एव । एनम् । योनेः । जनयति । न । अस्मै । भ्रातृव्यम् । जनयति । तमः । वै । एतम् । गृह्णाति । यस्य । अग्निः । उख्यः । उद्वायतीत्युत्-वायति । मृत्युः । तमः । कृष्णम् । वासः । कृष्णा । धेनुः । दक्षिणा । तमसा । [१७] एव । तमः । मृत्युम् । अपेति । हते । हिरण्यम् । ददाति । ज्योतिः । वै । हिरण्यम् । ज्योतिषा । एव । तमः । अपेति । हते । अथोइति । तेजः । वै । हिरण्यम् । तेजः । एव । आत्मन्न् । धत्ते । सुवः । न । घर्मः । स्वाहा । सुवः । न । अर्कः । स्वाहा । सुवः । न । शुक्रः । स्वाहा । सुवः । न । ज्योतिः । स्वाहा । सुवः । न । सूर्यः । स्वाहा । अर्कः । वै । एषः । यत् । अग्निः । असौ । आदि

त्यः । [१८] अश्वमेधइत्यश्व-मेधः । यत् । एताः । आहुतीरित्या-हुतीः । जुहोति । अर्काश्वमेधयोरित्यर्क-अश्वमेधयोः । एव । ज्योतीꣳषि । समिति । दधाति । एषः । ह । तु । वै । अर्काश्वमेधीत्यर्क-अश्वमेधी । यस्य । एतत् । अग्नौ । क्रियते । आपः । वै । इदम् । अग्रे । सलिलम् । आसीत् । सः । एताम् । प्रजापतिरितिप्रजा-पतिः । प्रथमाम् । चितिम् । अपश्यत् । ताम् । उपेति । अधत्त । तत् । इयम् । अभवत् । तम् । विश्वकर्मेतिविश्व-कर्मा । अब्रवीत् । उपेति । त्वा । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति । [१९] अब्रवीत् । सः । एताम् । द्वितीयाम् । चितिम् । अपश्यत् । ताम् । उपेति । अधत्त । तत् । अन्तरिक्षम् । अभवत् । सः । यज्ञः । प्रजापतिमितिप्रजा-पतिम् । अब्रवीत् । उपेति । त्वा । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति । अब्रवीत् । सः । विश्वकर्माणमितिविश्व-कर्माणम् । अब्रवीत् । उपेति । त्वा । एति । अयानि । इति । केन । मा । उपैष्यसीत्युप-ऐष्यसि । इति । दिश्याभिः । इति । अब्रवीत् । तम् । दिश्याभिः । उपैदित्युप-ऐत् । ताः । उपेति । अधत्त । ताः । दिशः । [२०] अभवन् । सः । परमेष्ठी । प्रजापतिमितिप्रजा-पतिम् । अब्रवीत् । उपेति । त्वा । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति । अब्रवीत् । सः । विश्वकर्माणमितिविश्व-कर्माणम् । च । यज्ञम् । च । अब्रवीत् । उपेति । वाम् । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति । अब्रूताम् । सः । एताम् । तृतीयाम् । चितिम् । अपश्यत् । ताम् । उपेति । अधत्त । तत् । असौ । अभवत् । सः । आदित्यः । प्रजापतिमितिप्रजा-पतिम् । अब्रवीत् । उपेति । त्वा । [२१] एति । अयानि । इति । न । इह । लोकः । अस्ति । इति । अब्रवीत् । सः । विश्वकर्माणमितिविश्व-कर्माणम् । च । यज्ञम् । च । अब्रवीत् । उपेति । वाम् । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति । अब्रूताम् । सः । परमेष्ठिनम् । अब्रवीत् । उपेति । त्वा । एति । अयानि । इति । केन । मा । उपैष्यसीत्युप-ऐष्यसि । इति । लोकम्पृणयेतिलोकं-पृणया । इति । अब्रवीत् । तम् । लोकंपृणयेतिलोकं-पृणया । उपैदित्युप-ऐत् । तस्मात् । अयातयाम्नीत्ययात-याम्नी । लोकम्पृणेतिलोकं-पृणा । अयातयामेत्ययात-यामा । हि । असौ । [२२] आदित्यः । तान् ।

ऋषयः । अब्रुवन्न् । उपेति । वः । एति । अयाम । इति । केन । नः । उपैष्यथेत्यु
प-ऐष्यथ । इति । भूम्ना । इति । अब्रुवन्न् । तान् । द्वाभ्याम् । चितीभ्यामितिचि
ति-भ्याम् । उपायन्नित्युप-आयन्न् । सः । पञ्चचितीकइतिपञ्च-चितीकः । समिति ।
अपद्यत । यः । एवम् । विद्वान् । अग्निम् । चिनुते । भूयान् । एव । भवति । अ
भीति । इमान् । लोकान् । जयति । विदुः । एनम् । देवाः । अथोइति । एता
साम् । एव । देवतानाम् । सायुज्यम् । गच्छति ॥ [२३] तमसाऽऽदित्योऽस्तीति
दिशं आदित्यः प्रजापतिमब्रवीदुपत्वाऽसौपञ्चचत्वारिꣳशच्च ॥ ❀ ❀ ॥५॥

वयः । वै । अग्निः । यत् । अग्निचिदित्यग्नि-चित् । पक्षिणः । अश्नीयात् ।
तम् । एव । अग्निम् । अद्यात् । आर्तिम् । एति । ऋच्छेत् । सँव्वथ्सरमितिसं-व्वथ्स
रम् । व्रतम् । चरेत् । सँव्वथ्सरमितिसं-व्वथ्सरम् । हि । व्रतम् । न । अतीति । पशुः ।
वै । एषः । यत् । अग्निः । हिनस्ति । खलु । वै । तम् । पशुः । यः । एनम् । पुर
स्तात् । प्रत्यञ्चम् । उपचरतीत्युप-चरति । तस्मात् । पश्चात् । प्राङ् । उपचर्यइत्युप-
चर्यः । आत्मनः । अहिꣳसायै । तेजः । असि । तेजः । मे । यच्छ । पृथिवीम् ।
यच्छ । [२४] पृथिव्यै । मा । पाहि । ज्योतिः । असि । ज्योतिः । मे । यच्छ ।
अन्तरिक्षम् । यच्छ । अन्तरिक्षात् । मा । पाहि । सुवः । असि । सुवः । मे । य
च्छ । दिवम् । यच्छ । दिवः । मा । पाहि । इति । आह । एताभिः । वै । इमे ।
लोकाः । विधृताइतिवि-धृताः । यत् । एताः । उपदधातीत्युप-दधाति । एषाम् ।
लोकानाम् । विधृत्याइतिवि-धृत्यै । स्वयमातृण्णाइतिस्वयं-आतृण्णाः । उपधायेत्युप-
धाय । हिरण्येष्टकाइतिहिरण्य-इष्टकाः । उपेति । दधाति । इमे । वै । लोकाः । स्व
यमातृण्णाइतिस्वयं-आतृण्णाः । ज्योतिः । हिरण्यम् । यत् । स्वयमातृण्णाइतिस्व
यं-आतृण्णाः । उपधायेत्युप-धाय । [२५] हिरण्येष्टकाइतिहिरण्य-इष्टकाः । उपद
धातीत्युप-दधाति । इमान् । एव । एताभिः । लोकान् । ज्योतिष्मतः । कुरुते ।
अथोइति । एताभिः । एव । अस्मै । इमे । लोकाः । प्रेति । भान्ति । याः । ते ।
अग्ने । सूर्ये । रुचः । उद्यतइत्युत्-यतः । दिवम् । आतन्वन्तीत्या-तन्वन्ति । रश्मि
भिरितिरश्मि-भिः ॥ ताभिः । सर्वाभिः । रुचे । जनाय । नः । कृधि ॥ याः । वः ।
देवाः । सूर्ये । रुचः । गोषु । अश्वेषु । याः । रुचः ॥ इन्द्राग्नीइतीन्द्र-अग्नी । ताभिः ।

सर्वाभिः । रुचम् । नः । धत्त । बृहस्पते ॥ रुचम् । नः । धेहि । [२६] ब्राह्मणेषु । रुचम् । राजस्विति राज-सु । नः । कृधि ॥ रुचम् । विश्येषु । शूद्रेषु । मयि । धेहि । रुचा । रुचम् ॥ द्वेधा । वै । अग्निम् । चिक्यानस्य । यशः । इन्द्रियम् । गच्छति । अग्निम् । वा । चितम् । ईजानम् । वा । यत् । एताः । आहुतीरित्या-हुतीः । जुहोति । आत्मन्न् । एव । यशः । इन्द्रियम् । धत्ते । ईश्वरः । वै । एषः । आर्तिम् । आर्तोरित्या-अर्तोः । यः । अग्निम् । चिन्वन्न् । अधिक्रामतीत्यधि-क्रामति । तत् । त्वा । यामि । ब्रह्मणा । वन्दमानः । इति । वारुण्या । ऋचा । [२७] जुहुयात् । शान्तिः । एव । एषा । अग्नेः । गुप्तिः । आत्मनः । हविष्कृतइतिहविः-कृतः । वै । एषः । यः । अग्निम् । चिनुते । यथा । वै । हविः । स्कन्दति । एवम् । वै । एषः । स्कन्दति । यः । अग्निम् । चित्वा । स्त्रियम् । उपैतीत्युप-एति । मैत्रावरुण्येतिमैत्रा-वरुण्या । आमिक्षया । यजेत । मैत्रावरुणतामितिमैत्रा-वरुणताम् । एव । उपैति । एति । आत्मनः । अस्कन्दाय । यः । वै । अग्निम् । ऋतुस्थामित्यृतु-स्थाम् । वेद । ऋतुर् ऋतुरित्यृतुः-ऋतुः । अस्मै । कल्पमानः । एति । प्रतीति । एव । तिष्ठति । सँवथ्सरइतिसं-वथ्सरः । वै । अग्निः । [२८] ऋतुस्थाइत्यृतु-स्थाः । तस्य । वसन्तः । शिरः । ग्रीष्मः । दक्षिणः । पक्षः । वर्षाः । पुच्छम् । शरत् । उत्तरइत्युत्-तरः । पक्षः । हेमन्तः । मध्यम् । पूर्वपक्षाइतिपूर्व-पक्षाः । चितयः । अपरपक्षाइत्यपर-पक्षाः । पुरीषम् । अहोरात्राणीत्यहः-रात्राणि । इष्टकाः । एषः । वै । अग्निः । ऋतुस्थाइत्यृतु-स्थाः । यः । एवम् । वेद । ऋतुर् ऋतुरित्यृतुः-ऋतुः । अस्मै । कल्पमानः । एति । प्रतीति । एव । तिष्ठति । प्रजापतिरितिप्रजा-पतिः । वै । एतम् । ज्यैष्ठ्यकामइतिज्यैष्ठ्य-कामः । नीति । अधत्त । ततः । वै । सः । ज्यैष्ठ्यम् । अगच्छत् । यः । एवम् । विद्वान् । अग्निम् । चिनुते । ज्यैष्ठ्यम् । एव । गच्छति ॥ [२९] पृथिवीयँय्च्छयथ्स्वयमातृण्णा उपधायधेह्यृचाऽग्निश्चिनुतेत्रीणिच ॥६॥

यत् । आकूतादित्या-कूतात् । समसुस्रोदितिसं-असुस्रोत् । हृदः । वा । मनसः । वा । सम्भृतमितिसं-भृतम् । चक्षुषः । वा ॥ तम् । अनु । प्रेति । इहि । सुकृतस्येतिसु-कृतस्य । लोकम् । यत्र । ऋषयः । प्रथमजाइतिप्रथम-जाः । ये । पुराणाः ॥ एतम् । सधस्थेतिसध-स्थ । परीति । ते । ददामि । यम् । आवहादित्या-वहात् ।

शेवधिमितिशेव-धिम् । जातवेदाइतिजात-वेदाः ॥ अन्वागन्तेत्यनु-आगन्ता । यज्ञपतिरितियज्ञ-पतिः । वः । अत्र । तम् । स्म । जानीत । परमे । व्योमन्निितिवि-ओमन् ॥ जानीतात् । एनम् । परमे । व्योमन्निितिवि-ओमन् । देवाः । सधस्थाइतिसध-स्थाः । विद । रूपम् । अस्य ॥ यत् । आगच्छादित्या-गच्छात् । [३०] पथिभिरितिपथि-भिः । देवयानैरितिदेव-यानैः । इष्टापूर्तेइतीष्टा-पूर्ते । कृणुतात् । आविः । अस्मै ॥ सम् । प्रेति । च्यवध्वम् । अन्विति । सम् । प्रेति । यात । अग्ने । पथः । देवयानानितिदेव-यानान् । कृणुध्वम् ॥ अस्मिन्न् । सधस्थइतिसध-स्थे । अधीति । उत्तरस्मिन्नित्युत्-तरस्मिन्न् । विश्वे । देवाः । यजमानः । च । सीदत ॥ प्रस्तरेणेतिप्र-स्तरेण । परिधिनेतिपरि-धिना । स्रुचा । वेद्या । च । बर्हिषा ॥ ऋचा । इमम् । यज्ञम् । नः । वह । सुवः । देवेषु । गन्तवे ॥ यत् । इष्टम् । यत् । परादानमितिपरा-दानम् । यत् । दत्तम् । या । च । दक्षिणा ॥ तत् । [३१] अग्निः । वैश्वकर्मणइतिवैश्व-कर्मणः । सुवः । देवेषु । नः । दधतु ॥ येन । सहस्रम् । वहसि । येन । अग्ने । सर्ववेदसमितिसर्व-वेदसम् ॥ तेन । इमम् । यज्ञम् । नः । वह । सुवः । देवेषु । गन्तवे ॥ येन । अग्ने । दक्षिणाः । युक्ताः । यज्ञम् । वहन्ति । ऋत्विजः ॥ तेन । इमम् । यज्ञम् । नः । वह । सुवः । देवेषु । गन्तवे ॥ येन । अग्ने । सुकृतइतिसु-कृतः । पथा । मधोः । धाराः । व्यानशुरितिवि-आनशुः ॥ तेन । इमम् । यज्ञम् । नः । वह । सुवः । देवेषु । गन्तवे ॥ यत्र । धाराः । अनपेताइत्यनप-इताः । मधोः । घृतस्य । च । याः ॥ तत् । अग्निः । वैश्वकर्मणइतिवैश्व-कर्मणः । सुवः । देवेषु । नः । दधतु ॥ [३२] आगच्छात्तद्व्यानशुस्तेनेमय्यँज्ञन्नोवहसुवर्देवेषुगन्तवेचतुर्दशच ॥ ॥७॥

याः । ते । अग्ने । समिधइतिसं-इधः । यानि । धाम । या । जिह्वा । जातवेदइतिजात-वेदः । यः । अर्चिः ॥ ये । ते । अग्ने । मेडयः । ये । इन्दवः । तेभिः । आत्मानम् । चिनुहि । प्रजानन्नितिप्र-जानन्न् ॥ उध्सन्नयज्ञइत्युध्सन्न-यज्ञः । वै । एषः । यत् । अग्निः । किम् । वा । अह । एतस्य । क्रियते । किम् । वा । न । यत् । वै । अध्वर्युः । अग्नेः । चिन्वन्न् । अन्तरेतीत्यन्तः-एति । आत्मनः । वै । तत् । अन्तः । एति । याः । ते । अग्ने । समिधइतिसं-इधः । यानि । [३३] धाम । इति । आह । एषा । वै । अग्नेः । स्वयञ्चितिरितिस्वयं-चितिः । अग्निः । एव । तत् । अग्निम् । चि

नोति । न । अध्वर्युः । आत्मनः । अन्तः । एति । चतंस्रः । आशाः । प्रेति । चरन्तु । अग्नयः । इमम् । नः । यज्ञम् । नयतु । प्रजाननितिप्र-जानन् ॥ घृतम् । पिन्वन् । अजरम् । सुवीरमितिसु-वीरम् । ब्रह्म । समिदितिसं-इत् । भवति । आहुतीनामित्या-हुतीनाम् ॥ सुवर्गायेतिसुवः-गाय । वै । एषः । लोकाय । उपेति । धीयते । यत् । कूर्मः । चतंस्रः । आशाः । प्रेति । चरन्तु । अग्नयः । इति । आह । [३४] दिशः । एव । एतेन । प्रेति । जानाति । इमम् । नः । यज्ञम् । नयतु । प्रजाननितिप्र-जानन् । इति । आह । सुवर्गस्येतिसुवः-गस्य । लोकस्य । अभिनीत्याइत्यभि-नीत्यै । ब्रह्म । समिदितिसं-इत् । भवति । आहुतीनामित्या-हुतीनाम् । इति । आह । ब्रह्मणा । वै । देवाः । सुवर्गमितिसुवः-गम् । लोकम् । आयन् । यत् । ब्रह्मण्वत्येति ब्रह्मण्-वत्या । उपदधातीत्युप-दधाति । ब्रह्मणा । एव । तत् । यजमानः । सुवर्गमितिसुवः-गम् । लोकम् । एति । प्रजापतिरितिप्रजा-पतिः । वै । एषः । यत् । अग्निः । तस्य । प्रजाइतिप्र-जाः । पशवः । छन्दांसि । रूपम् । सर्वान् । वर्णान् । इष्टकानाम् । कुर्यात् । रूपेण । एव । प्रजामितिप्र-जाम् । पशून् । छन्दांसि । अवेति । रुन्धे । अथोइति । प्रजाभ्यइतिप्र-जाभ्यः । एव । एनम् । पशुभ्यइतिपशु-भ्यः । छन्दोभ्यइतिछन्दः-भ्यः । अवरुध्येत्यव-रुध्य । चिनुते ॥ [३५] यान्यग्नयइत्याहेष्टकानां षोडशच ॥ ❁ ❁ ❁ ❁ ॥८॥

मयि । गृह्णामि । अग्रे । अग्निम् । रायः । पोषाय । सुप्रजास्त्वायेतिसुप्रजाः-त्वाय । सुवीर्यायेतिसु-वीर्याय ॥ मयि । प्रजामितिप्र-जाम् । मयि । वर्चः । दधामि । अरिष्टाः । स्याम । तनुवा । सुवीराइतिसु-वीराः ॥ यः । नः । अग्निः । पितरः । हृत्स्वितिहृत्-सु । अन्तः । अमर्त्यः । मर्त्यान् । आविवेशेत्या-विवेश ॥ तम् । आत्मन् । परीति । गृह्णीमहे । वयम् । मा । सः । अस्मान् । अवहायेत्यव-हाय । परेति । गात् ॥ यत् । अध्वर्युः । आत्मन् । अग्निम् । अगृहीत्वा । अग्निम् । चिनुयात् । यः । अस्य । स्वः । अग्निः । तम् । अपीति । [३६] यजमानाय । चिनुयात् । अग्निम् । खलु । वै । पशवः । अनु । उपेति । तिष्ठन्ते । अपक्रामुकाइत्यप-क्रामुकाः । अस्मात् । पशवः । स्युः । मयि । गृह्णामि । अग्रे । अग्निम् । इति । आह । आत्मन् । एव ।

स्वम् । आग्रम् । दाधार । न । अस्मात् । पशवः । अपेति । क्रामन्ति । ब्रह्मवादि नइतिब्रह्म-वादिनः । वदन्ति । यत् । मृत् । च । आपः । च । अग्नेः । अनाद्यम् । अथ । कस्मात् । मृदा । च । अद्भिरित्यत्-भिः । च । अग्निः । चीयते । इति । यत् । अद्भिरित्यत्-भिः । सय्यौतीतिसं-यौति । [३७] आपः । वै । सर्वाः । देवताः । देवताभिः । एव । एनम् । समिति । सृजति । यत् । मृदा । चिनोति । इयम् । वै । अग्निः । वैश्वानरः । अग्निना । एव । तत् । अग्निम् । चिनोति । ब्रह्मवादिनइतिब्र ह्म-वादिनः । वदन्ति । यत् । मृदा । च । अद्भिरित्यत्-भिः । च । अग्निः । चीयते । अथ । कस्मात् । अग्निः । उच्यते । इति । यत् । छन्दोभिरितिछन्दः-भिः । चिनो ति । अग्नयः । वै । छन्दांसि । तस्मात् । अग्निः । उच्यते । अथोइति । इयम् । वै । अग्निः । वैश्वानरः । यत् । [३८] मृदा । चिनोति । तस्मात् । अग्निः । उच्यते । हिरण्येष्टकाइतिहिरण्य-इष्टकाः । उपेति । दधाति । ज्योतिः । वै । हिरण्यम् । ज्यो तिः । एव । अस्मिन्न् । दधाति । अथोइति । तेजः । वै । हिरण्यम् । तेजः । एव । आत्मन्न् । धत्ते । यः । वै । अग्निम् । सर्वतोमुखमितिसर्वतः-मुखम् । चिनुते । सर्वा सु । प्रजास्वितिप्र-जासु । अन्नम् । अत्ति । सर्वाः । दिशः । अभीति । जयति । गायत्रीम् । पुरस्तात् । उपेति । दधाति । त्रिष्टुभम् । दक्षिणतः । जगतीम् । पश्चात् । अनुष्टुभमित्यनु-स्तुभम् । उत्तरतइत्युत्-तरतः । पङ्क्तिम् । मध्ये । एषः । वै । अग्निः । सर्वतोमुखइतिसर्वतः-मुखः । तम् । यः । एवम् । विद्वान् । चिनुते । सर्वासु । प्रजा स्वितिप्र-जासु । अन्नम् । अत्ति । सर्वाः । दिशः । अभीति । जयति । अथोइति । दिशि । एव । दिशम् । प्रेति । वयति । तस्मात् । दिशि । दिक् । प्रोतेतिप्र-उता ॥ [३९] अपिसय्यौतिवैश्वानरोयदेषवैपञ्चविꣳशतिश्च ॥ ❀ ❀ ॥९॥

प्रजापतिरितिप्रजा-पतिः । अग्निम् । असृजत । सः । अस्मात् । सृष्टः । प्राङ् । प्रेति । अद्रवत् । तस्मै । अश्वम् । प्रतीति । आस्यत् । सः । दक्षिणा । एति । अ वर्तत । तस्मै । वृष्णिम् । प्रतीति । आस्यत् । सः । प्रत्यङ् । एति । अवर्तत । तस्मै । ऋषभम् । प्रतीति । आस्यत् । सः । उदङ् । एति । अवर्तत । तस्मै । बस्तम् । प्रती ति । आस्यत् । सः । ऊर्ध्वः । अद्रवत् । तस्मै । पुरुषम् । प्रतीति । आस्यत् । यत् । पशुशीरु षाणीतिपशु-शीरु षाणि । उपदधातीत्युप-दधाति । सर्वतः । एव । एनम् ।

[४०] अवरुध्येत्यव-रुध्यं । चिनुते । एताः । वै । प्राणभृतइतिप्राण-भृतः । चक्षुष्मतीः । इष्टकाः । यत् । पशुशीर्षाणीतिपशु-शीर्षाणि । यत् । पशुशीर्षाणीतिपशु-शीर्षाणि । उपदधातीत्युप-दधाति । ताभिः । एव । यजमानः । अमुष्मिन्न् । लोके । प्रेति । अनिति । अथोइति । ताभिः । एव । अस्मै । इमे । लोकाः । प्रेति । भान्ति । मृदा । अभिलिप्येत्यभि-लिप्य । उपेति । दधाति । मेध्यत्वायेतिमेध्य-त्वाय । पशुः । वै । एषः । यत् । अग्निः । अन्नम् । पशवः । एषः । खलु । वै । अग्निः । यत् । पशुशीर्षाणीतिपशु-शीर्षाणि । यम् । कामयेत । कनीयः । अस्य । अन्नम् । [४१] स्यात् । इति । सन्तरामितिसं-तराम् । तस्य । पशुशीर्षाणीतिपशु-शीर्षाणि । उपेति । दध्यात् । कनीयः । एव । अस्य । अन्नम् । भवति । यम् । कामयेत । समावत् । अस्य । अन्नम् । स्यात् । इति । मध्यतः । तस्य । उपेति । दध्यात् । समावत् । एव । अस्य । अन्नम् । भवति । यम् । कामयेत । भूयः । अस्य । अन्नम् । स्यात् । इति । अन्तेषु । तस्य । व्युदूह्येतिवि-उदूह्य । उपेति । दध्यात् । अन्ततः । एव । अस्मै । अन्नम् । अवेति । रुन्धे । भूयः । अस्य । अन्नम् । भवति ॥ [४२]

एनमस्यान्नम्भूयोऽस्यान्नम्भवति ॥ ❀ ❀ ❀ ॥१०॥

स्तेगान् । दंष्ट्राभ्याम् । मण्डूकान् । जम्भ्येभिः । आदकाम् । खादेन । ऊर्जम् । संसूदेनेतिसं-सूदेन । अरण्यम् । जाम्बीलेन । मृदम् । बर्स्वेभिः । शर्कराभिः । अवकाम् । अवकाभिः । शर्कराम् । उत्सादेनेत्युत्-सादेन । जिह्वाम् । अवक्रन्देनेत्यव-क्रन्देन । तालुम् । सरस्वतीम् । जिह्वाग्रेणेतिजिह्वा-अग्रेण ॥ [४३]

स्तेगान्द्वाविंशतिः ॥ ❀ ❀ ❀ ❀ ॥११॥

वाजम् । हनूभ्यामितिहनु-भ्याम् । अपः । आस्येन । आदित्यान् । श्मश्रुं

(१) हनू इत्यवगृहस्थितः ऊकारः पदविभागे ह्रस्वमापद्यते । तथाच प्रातिशाख्ये (अ-३,सू-७) 'शक्ती रथी खिषी वाशीरात्र्योषध्याहुती व्याहृती स्वाहाकृती ह्रादुनी शची चिती श्रोणी पृष्टी पूत्यभी चर्षणी पर्यधी पारी शत्रू विषू वसू अनू हनू सू विभू इत्यवग्रहः' इति ॥ अस्यार्थः—'शक्ती' इत्यादिषु अवगृहेषु अन्त्यः स्वरः व्यञ्जनपरः विभागे ह्रस्वमापद्यते । (उदा) शक्तीवन्तोगभीराः । रथीतमोरथीनाम् । खिषीमतेपथीनाम् । वाशीमन्तइष्मिणः । रात्रीभिरसुभन्न् । ओषधीभ्योवेहतम् । आहुतीभिरनूयाजेषु । एताभिर्व्याहृतीभिः । स्वाहाकृतीभ्यः प्रेष्य । ह्रादुनीभ्यस्स्वाहा । चष्टेशचीभिः । चितीभ्यामुपायन्न् । श्रोणीभ्याꣳस्वाहा । पृष्टीभ्यस्स्वाहा । पूतीगन्धस्यापहत्यै । अभीवृतोघृणीवान् । मित्रस्य चर्षणीधृतः । वीरवन्तं परीणसम् । अधीवासंयाहिरण्यानि । पारीणह्यस्येशे । शत्रूयतोहन्ता । विषूवान् विषूवन्तः । अरमतिर्वसूयुः । अनूयाजेष्वन्वविन्दन्न् । 'अन्कारादिच' इति वचनात् 'अननूयाजं' इत्येतदप्युदाहरणम् । हनूभ्याꣳस्वाहा । सूयवसिनीमनवे । वि

भिरितिश्मश्रु-भिः । उपयाममित्युप-याम॑म् । अध॑रेण । ओष्ठेन । सत् । उत्त॑रेणे त्युत्-तरेण । अन्त॑रेण । अनूकाशमित्यनु-काशम् । प्रकाशेनेतिप्र-काशेन॑ । बाह्यम् । स्तनयित्नुम् । निर्बाधेनेतिनिः-बाधेन॑ । सूर्याग्नीइतिसूर्य-अग्नी । चक्षुर्भ्यामितिचक्षुः-भ्याम् । विद्युतावितिवि-द्युतौ । कनीनकाभ्याम् । अशनिम् । मस्तिष्केण । बल॑म् । मज्जभिरितिमज्ज-भिः ॥ [४४] वाजम्पञ्चविंशतिः ॥ ॥१२॥

कूर्मान् । शफैः । अच्छलाभिः । कपिञ्जलान् । साम॑ । कुष्ठिकाभिः । जवम् । जङ्घाभिः । अगदम् । जानुभ्यामितिजानु-भ्याम् । वीर्यम् । कुहाभ्याम् । भयम् । प्रचालाभ्यामितिप्र-चालाभ्याम् । गुहा । उपपक्षाभ्यामित्युप-पक्षाभ्याम् । अश्विनौ । अंसाभ्याम् । अदितिम् । शीर्ष्णा । निरृतिमितिनिः-ऋतिम् । निर्जाल्मकेनेतिनिः-जाल्मकेन । शीर्ष्णा ॥ [४५] कूर्मान्त्रयोविंशतिः ॥ ॥१३॥

योक्त्रम् । गृध्राभिः । युगम् । आनतेनेत्या-नतेन । चित्तम् । मन्याभिः । सङ्क्रोशानितिसं-क्रोशान् । प्राणैरितिप्र-अनैः । प्रकाशेनेतिप्र-काशेन॑ । त्वचम् । पराकाशेनेतिपरा-काशेन॑ । अन्तराम् । मशकान् । केशैः । इन्द्रम् । स्वपसेतिसु-अपसा । वहेन । बृहस्पतिम् । शकुनिसादेनेतिशकुनि-सादेन । रथम् । उष्णिहाभिः ॥ [४६] योक्त्रमेकविंशतिः ॥ ❀ ❀ ❀ ॥१४॥

मित्रावरुणावितिमित्रा-वरुणौ । श्रोणीभ्यामितिश्रोणि-भ्याम् । इन्द्राग्नीइतीन्द्र-अग्नी । शिखण्डाभ्याम् । इन्द्राबृहस्पतीइतीन्द्रा-बृहस्पती । ऊरुभ्यामित्यूरु-भ्याम् । इन्द्राविष्णूइतीन्द्रा-विष्णू । अष्ठीवद्भ्यामित्यष्ठीवत्-भ्याम् । सवितारम् । पुच्छेन । गन्धर्वान् । शेपेन । अप्सरसः । मुष्काभ्याम् । पवमानम् । पायुना । पवित्रम् ।

---

भूदावृन्ले । इत्यवग्रहः । इति अनेन प्रकारेण उक्तः पदसमुदायः अवग्रहो ज्ञेयः ॥

(१) 'अधरेण' इत्यत्र स्थितः अन्त्यः अवर्णः ओष्ठपरः संहितायां लुप्यते । तथाच प्रातिशाख्ये— (अ-१०, सू-१४) 'एष्टरेतनेमन्नोम्नन्नोष्ठेवःपरो लुप्यते' इति ॥ अस्यार्थः—'एष्टः, एतन, एमन्न् , ओम्नन्न् , ओष्ठ, एवः' इत्येवंपरः अवर्णः लुप्यते । अवर्ण इत्यनुवर्तते । (उदा) अशीयेष्टारायः । शमितार उपेतन । अपान्त्वेमन् थ्सादयामि । अपान्त्वोम्नन् थ्सादयामि । स्वाहोष्ठाभ्याम् । 'गृहणस्यच' इतिवचनात् सर्वावस्थस्य ओष्ठशब्दस्य गृहणम् । अधरेणोष्ठेन । निरमिमतेवश्छन्दः । अवर्ण इति किम् । शित्योष्ठस्त्रितिभ्रुः ॥

(२) 'बृहस्पती' इत्यत्र ईकारः प्रगृह्योभवति । तथाच प्रातिशाख्ये— (अ-४, सू-३९) 'पतीश्रुतिः' इति ॥ अस्यार्थः— 'पती' इत्यस्य यत्र यत्र श्रुतिः श्रवणमस्ति तत्र तत्र प्रगृह्यत्वं ज्ञेयम् ॥ (उदा) द्वीपतीविन्दते । शुभस्पती इदम् । श्रुतिरित्युक्त्या 'दंपतीवामम् । इन्द्राबृहस्पती ऊरुभ्याम्' इत्यादिषु पदैकदेशेऽपि प्रगृह्यत्वम् ॥

पोत्राभ्याम् । आक्रमणमित्या-क्रमणम् । स्थूराभ्याम् । प्रतिक्रमणमितिप्रति-क्रमणम् । कुष्ठाभ्याम् ॥ [४७] ❀ ❀ ❀ ॥१५॥

इन्द्रस्य । क्रोडः । अदित्यै । पाजस्यम् । दिशाम् । जत्रवः । जीमूतान् । हृदयौपशाभ्यामितिहृदय-औपशाभ्याम् । अन्तरिक्षम् । पुरितता । नभः । उदर्येण । इन्द्राणीम् । प्लीह्ना । वल्मीकान् । क्लोम्ना । गिरीन् । प्लाशिभिरितिप्लाशि-भिः । समुद्रम् । उदरेण । वैश्वानरम् । भस्मना ॥ [४८] मित्रावरुणाविन्द्रस्यद्वाविꣳशतिर्द्वाविꣳशतिः ॥ ❀ ❀ ❀ ❀ ॥१६॥

पूष्णः । वनिष्ठुः । अन्धाहेरित्यन्ध-अहेः । स्थूरगुदेतिस्थूर-गुदा । सर्पान् । गुदाभिः । ऋतून् । पृष्टीभिरितिपृष्टि-भिः । दिवम् । पृष्ठेन । वसूनाम् । प्रथमा । कीकसा । रुद्राणाम् । द्वितीया । आदित्यानाम् । तृतीया । अङ्गिरसाम् । चतुर्थी । साध्यानाम् । पञ्चमी । विश्वेषाम् । देवानाम् । षष्ठी ॥ [४९] पूष्णश्चतुर्विꣳशतिः ॥१७॥

ओजः । ग्रीवाभिः । निरृतिमितिनिः-ऋतिम् । अस्थभिरित्यस्थ-भिः । इन्द्रम् । स्वपसेतिसु-अपसा । वहेन । रुद्रस्य । विचलइतिवि-चलः । स्कन्धः । अहोरात्रयोरित्यहः-रात्रयोः । द्वितीयः । अर्धमासानामित्यर्ध-मासानाम् । तृतीयः । मासाम् । चतुर्थः । ऋतूनाम् । पञ्चमः । सꣳवथ्सरस्येतिसं-वथ्सरस्य । षष्ठः ॥ [५०] ओजोविꣳशतिः ॥ ॥१८॥

आनन्दमित्या-नन्दम् । नन्दथुना । कामम् । प्रत्यासाभ्यामितिप्रति-आसाभ्याम् । भयम् । शितीमभ्यामितिशितीम-भ्याम् । प्रशिषमितिप्र-शिषम् । प्रशासाभ्यामितिप्र-शासाभ्याम् । सूर्याचन्द्रमसावितिसूर्या-चन्द्रमसौ । वृक्याभ्याम् । श्यामशबलावितिश्याम-शबलौ । मतस्नाभ्याम् । व्युष्टिमितिवि-उष्टिम् । रूपेण । निम्रुक्तिमितिनि-म्रुक्तिम् । अरूपेण ॥ [५१] आनन्दꣳषोडश ॥ ॥१९॥

अहः । माꣳसेन । रात्रिम् । पीवसा । अपः । यूषेण । घृतम् । रसेन । श्याम् । वसया । दूषीकाभिः । ह्रादुनिम् । अश्रुभिरित्यश्रु-भिः । पृष्वाम् । दिवम् । रूपेण । नक्षत्राणि । प्रतिरूपेणेतिप्रति-रूपेण । पृथिवीम् । चर्मणा । छवीम् । छव्या । उपाकृतायेत्युप-आकृताय । स्वाहा । आलब्धायेत्या-लब्धाय । स्वाहा । हुताय । स्वाहा ॥ [५२] अहरष्टाविꣳशतिः ॥ ❀ ❀ ❀ ॥२०॥

अग्नेः । पक्षतिः । सरस्वत्यै । निपक्षतिरितिनि-पक्षतिः । सोमस्य । तृतीया । अपाम् । चतुर्थी । ओषधीनाम् । पञ्चमी । सँवथ्सरस्येतिसं-वथ्सरस्य । षष्ठी । मरुताम् । सप्तमी । बृहस्पतेः । अष्टमी । मित्रस्य । नवमी । वरुणस्य । दशमी । इन्द्रस्य । एकादशी । विश्वेषाम् । देवानाम् । द्वादशी । द्यावापृथिव्योरितिद्यावा-पृथिव्योः । पार्श्वम् । यमस्य । पाटूरः ॥ [५३] अग्नेःपक्षतिरेकान्नत्रिꣳशत् ॥ २१ ॥

वायोः । पक्षतिः । सरस्वतः । निपक्षतिरितिनि-पक्षतिः । चन्द्रमसः । तृतीया । नक्षत्राणाम् । चतुर्थी । सवितुः । पञ्चमी । रुद्रस्य । षष्ठी । सर्पाणाम् । सप्तमी । अर्यम्णः । अष्टमी । त्वष्टुः । नवमी । धातुः । दशमी । इन्द्राण्याः । एकादशी । अदित्यै । द्वादशी । द्यावापृथिव्योरितिद्यावा-पृथिव्योः । पार्श्वम् । यम्यै । पाटूरः ॥ [५४] वायोरष्टाविꣳशतिः ॥ ❀ ❀ ❀ ॥ २२ ॥

पन्थाम् । अनूवृग्भ्यामित्यनूवृक्-भ्याम् । सन्ततिमितिसं-ततिम् । स्नावन्याभ्याम् । शुकान् । पित्तेन । हरिमाणम् । यक्ना । हलीक्ष्णान् । पापवातेनेतिपाप-वातेन । कूश्मान् । शकभिरितिशक-भिः । शवर्तान् । ऊवध्येन । शुनः । विशसनेनेतिवि-शसनेन । सर्पान् । लोहितगन्धेनेतिलोहित-गन्धेन । वयाꣳसि । पक्वगन्धेनेतिपक्व-गन्धेन । पिपीलिकाः । प्रशादेनेतिप्र-शादेन ॥ [५५] पन्थान्द्वाविꣳशतिः ॥ ॥ २३ ॥

क्रमैः । अतीति । अक्रमीत् । वाजी । विश्वैः । देवैः । यज्ञियैः । सव्विँदानइतिसं-विदानः ॥ सः । नः । नय । सुकृतस्येतिसु-कृतस्य । लोकम् । तस्य । ते । वयम् । स्वधयेतिस्व-धया । मदेम ॥ [५६] क्रमैरष्टादश ॥ ॥ २४ ॥

द्यौः । ते । पृष्ठम् । पृथिवी । सधस्थमितिसध-स्थम् । आत्मा । अन्तरिक्षम् । समुद्रः । योनिः । सूर्यः । ते । चक्षुः । वातः । प्राणइतिप्र-अनः । चन्द्रमाः । श्रोत्रम् । मासाः । च । अर्धमासाइत्यर्ध-मासाः । च । पर्वाणि । ऋतवः । अङ्गानि । सँवथ्सरइतिसं-वथ्सरः । महिमा ॥ [५७] द्यौःपञ्चविꣳशतिः ॥ ॥ २५ ॥

अग्निः । पशुः । आसीत् । तेन । अयजन्त । सः । एतम् । लोकम् । अजयत् । यस्मिन्न् । अग्निः । सः । ते । लोकः । तम् । जेष्यसि । अथ । अवेति । जिघ्र । वायुः । पशुः । आसीत् । तेन । अयजन्त । सः । एतम् । लोकम् । अजयत् । य

सिन्न् । वायुः । सः । ते । लोकः । तस्मात् । त्वा । अन्तः । एष्यामि । यदि । न । अवजिघ्रसीत्यव-जिघ्रसि । आदित्यः । पशुः । आसीत् । तेन । अयजन्त । सः । एतम् । लोकम् । अजयत् । यस्मिन्न् । आदित्यः । सः । ते । लोकः । तम् । जेष्यसि । यदि । अवजिघ्रसीत्यव-जिघ्रसि ॥ [५८] यस्मिन्नष्टौच ॥ ❀ ॥ २६ ॥

योवा अयथादेवतन्त्वामग्नइन्द्रस्यचित्तिँय्यथावैवयोवैयदाकूताद्यास्तेंअग्नेमयि गृह्णामिप्रजापतिस्सोऽस्माथ्स्तेगान् वाजङ्कूर्मान् योक्त्रम्मित्रावरुणा विन्द्रस्यपूष्ण ओज आनन्दमहस्मेःपरुषतिर्वायोःपरुषतिःपन्थाङ्क्रमैर्द्यौस्तेऽभिः पशुरासीथ्षड्विँ शतिः ॥२६॥ योवाएवाहुतिमभवन्पथिभिरवरुध्यानन्दमष्टौपञ्चाशत् ॥ [ ५८ ] यो वा अयथादेवतँय्यद्यवजिघ्रसि ॥ ॥

हरिः ओ (३) म् ॥

इति पञ्चमकाण्डे सप्तमः प्रश्नः ॥

तैत्तिरीयसंहितापदपाठे पञ्चमकाण्डस्समाप्तः ॥

---

## —❀ पञ्चमकाण्डस्य प्रश्नादिसङ्ख्यानिर्णयः ❀—

| प्रश्नाः | अनुवाकाः | पञ्चाशतः | पदानि |
|---|---|---|---|
| १ | ११ | ५९ | ३०८१ |
| २ | १२ | ६४ | ३१९५ |
| ३ | १२ | ४८ | २४७७ |
| ४ | १२ | ५८ | २९०६ |
| ५ | २४ | ६२ | २७२७ |
| ६ | २३ | ५४ | २४३६ |
| ७ | २६ | ५८ | २५८२ |

### —❀ संहतसङ्ख्या ❀—

| | | | |
|---|---|---|---|
| ७ | १२० | ४०३ | १९४०४ |

श्रीः॥

# तैत्तिरीयसंहितापदपाठे

## षष्ठकाण्डे प्रथमः प्रश्नः ॥

हरिः ओ (४) म् ॥

प्राचीनवꣳशमितिप्राचीन-वꣳशम् । करोति । देवमनुष्याइतिदेव-मनुष्याः । दिशः । वीति । अभजन्त । प्राचीम् । देवाः । दक्षिणा । पितरः । प्रतीचीम् । मनुष्याः । उदीचीम् । रुद्राः । यत् । प्राचीनवꣳशमितिप्राचीन-वꣳशम् । करोति । देवलोकमितिदेव-लोकम् । एव । तत् । यजमानः । उपावर्ततइत्युप-आवर्तते । परीति । श्रयति । अन्तर्हितइत्यन्तः-हितः । हि । देवलोकइतिदेव-लोकः । मनुष्यलोकादितिमनुष्य-लोकात् । न । अस्मात् । लोकात् । स्वेतव्यमितिसु-एतव्यम् । इव । इति । आहुः । कः । हि । तत् । वेद । यदि । अमुष्मिन्न् । लोके । अस्ति । वा । न । वा । इति । दिक्षु । अतीकाशान् । करोति । [१] उभयोः । लोकयोः । अभिजित्याइत्यभि - जित्यै । केशश्मश्रिवितिकेश-श्मश्रु । वपते । नखानि । नीति । कृन्तते । मृता । वै । एषा । त्वक् । अमेध्या । यत् । केशश्मश्रिवितिकेश-श्मश्रु । मृताम् । एव । त्वचम् । अमेध्याम् । अपहत्येत्यप-हत्य । यज्ञियः । भूत्वा । मेधम् । उपेति । एति । अङ्गिरसः । सुवर्गमितिसुवः-गम् । लोकम् । यन्तः । अफ्स्वित्यप्-सु । दीक्षातपसीइतिदीक्षा-तपसी । प्रेति । अवेशयन्न् । अफ्स्वित्यप्-सु । स्नाति । साक्षादितिस-अक्षात् । एव । दीक्षातपसीइतिदीक्षा-तपसी । अवेति । रुन्धे । तीर्थे । स्नाति । तीर्थे । हि । ते । ताम् । प्रेति । अवेशयन्न् । तीर्थे । स्नाति । [२] तीर्थम् । एव । समानानाम् । भवति । अपः । अश्नाति । अन्तरतः । एव । मेध्यः । भवति । वाससा । दीक्षयति । सौम्यम् । वै । क्षौमम् । देवतया । सोमम् । एषः । देवताम् । उपेति । एति । यः । दीक्षते । सोमस्य । तनूः । असि । तनुवम् । मे । पाहि । इति । आह । स्वाम् । एव । देवताम् । उपेति । एति । अथोइति । आशिषमित्या-शिषम् । एव । एताम् । एति । शास्ते । अग्नेः । तूषाधानमितितूष-आधा

नम् । वायोः । वातपानमितिवात-पानम् । पितृणाम् । नीविः । ओषधीनाम् । प्र घातइतिप्र-घातः । [३] आदित्यानाम् । प्राचीनतानइतिप्राचीन-तानः । विश्वेषाम् । देवानाम् । ओतुः । नक्षत्राणाम् । अतीकाशाः । तत् । वै । एतत् । सर्वदेवत्यमिति सर्व-देवत्यम् । यत् । वासः । यत् । वाससा । दीक्षयति । सर्वाभिः । एव । एनम् । देवताभिः । दीक्षयति । बहिःप्राणइतिबहिः-प्राणः । वै । मनुष्यः । तस्य । अश नम् । प्राणइतिप्र-अनः । अश्नाति । सप्राणइतिस-प्राणः । एव । दीक्षते । आशि तः । भवति । यावान् । एव । अस्य । प्राणइतिप्र-अनः । तेन । सह । मेधम् । उपे ति । एति । घृतम् । देवानाम् । मस्तु । पितृणाम् । निष्पक्वमितिनिः-पक्वम् । मनु ष्याणाम् । तत् । वै । [४] एतत् । सर्वदेवत्यमितिसर्व-देवत्यम् । यत् । नवनीतमि तिनव-नीतम् । यत् । नवनीतेनेतिनव-नीतेन । अभ्यङ्क्तइत्यभि-अङ्क्ते । सर्वाः । एव । देवताः । प्रीणाति । प्रच्युतइतिप्र-च्युतः । वै । एषः । अस्मात् । लोकात् । अगतः । देवलोकमितिदेव-लोकम् । यः । दीक्षितः । अन्तरा । इव । नवनीतमि तिनव-नीतम् । तस्मात् । नवनीतेनेतिनव-नीतेन । अभीति । अङ्क्ते । अनुलो ममित्यनु-लोमम् । यजुषा । व्यावृत्त्याइतिवि-आवृत्त्यै । इन्द्रः । वृत्रम् । अहन् । तस्य । कनीनिका । परेति । अपतत् । तत् । आञ्जनमित्या-अञ्जनम् । अभवत् । यत् । आङ्क्तइत्या-अङ्क्ते । चक्षुः । एव । भ्रातृव्यस्य । वृङ्क्ते । दक्षिणम् । पूर्वम् । एति । अङ्क्ते । [५] सव्यम् । हि । पूर्वम् । मनुष्याः । आञ्जतइत्या-अञ्जते । न । नीति । धावते । नीति । इव । हि । मनुष्याः । धावन्ते । पञ्च । कृत्वः । एति । अङ्क्ते । पञ्चाक्षरेतिपञ्च-अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवे ति । रुन्धे । परिमितमितिपरि-मितम् । एति । अङ्क्ते । अपरिमितमित्यपरि-मि तम् । हि । मनुष्याः । आञ्जतइत्या-अञ्जते । सतूलयेतिस-तूलया । एति । अङ्क्ते । अपतूलयेत्यप-तूलया । हि । मनुष्याः । आञ्जतइत्या-अञ्जते । व्यावृत्त्याइतिवि- आवृत्त्यै । यत् । अपतूलयेत्यप-तूलया । आञ्जीतेत्या-अञ्जीत । वज्रः । इव । स्यात् । सतूलयेतिस-तूलया । एति । अङ्क्ते । मित्रत्वायेतिमित्र-त्वाय । [६] इन्द्रः । वृ त्रम् । अहन् । सः । अपः । अभीति । अम्रियत । तासाम् । यत् । मेध्यम् । यज्ञियम् ।

सदेवमितिस-देवम् । आसीत् । तत् । अपः । उदिति । अक्रामत् । ते । दर्भाः । अभवन्न् । यत् । दर्भपुञ्जीलैरितिदर्भ-पुञ्जीलैः । पवयति । याः । एव । मेध्याः । यज्ञियाः । सदेवाइतिस-देवाः । आपः । ताभिः । एव । एनम् । पवयति । द्वाभ्याम् । पवयति । अहोरात्राभ्यामित्यहः-रात्राभ्याम् । एव । एनम् । पवयति । त्रिभिरितित्रि-भिः । पवयति । त्रयः । इमे । लोकाः । एभिः । एव । एनम् । लोकैः । पवयति । पञ्चभिरितिपञ्च-भिः । [७] पवयति । पञ्चाक्षरेतिपञ्च-अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञाय । एव । एनम् । पवयति । षड्भिरितिषट्-भिः । पवयति । षट् । वै । ऋतवः । ऋतुभिरित्यृतु-भिः । एव । एनम् । पवयति । सप्तभिरितिसप्त-भिः । पवयति । सप्त । छन्दाꣳसि । छन्दोभिरितिछन्दः-भिः । एव । एनम् । पवयति । नवभिरितिनव-भिः । पवयति । नव । वै । पुरुषे । प्राणाइतिप्र-अनाः । सप्राणमितिस-प्राणम् । एव । एनम् । पवयति । एकविꣳशत्येत्येक-विꣳशत्या । पवयति । दश । हस्त्याः । अङ्गुलयः । दश । पद्याः । आत्मा । एकविꣳशइत्येक-विꣳशः । यावान् । एव । पुरुषः । तम् । अपरिवर्गमित्यपरि-वर्गम् । [८] पवयति । चित्पतिरितिचित्-पतिः । त्वा । पुनातु । इति । आह । मनः । वै । चित्पतिरितिचित्-पतिः । मनसा । एव । एनम् । पवयति । वाक्पतिरितिवाक्-पतिः । त्वा । पुनातु । इति । आह । वाचा । एव । एनम् । पवयति । देवः । त्वा । सविता । पुनातु । इति । आह । सवितृप्रसूतइतिसवितृ-प्रसूतः । एव । एनम् । पवयति । तस्य । ते । पवित्रपतइति पवित्र-पते । पवित्रेण । यस्मै । कम् । पुने । तत् । शकेयम् । इति । आह । आशिषमित्या-शिषम् । एव । एताम् । एति । शास्ते ॥ [९] अतीकाशान्करोत्यवैशयन्तीर्थे स्नाति प्रघातो मनुष्याणा न्तद्वा आऽङ्क्ते मित्रत्वाय पञ्चभि रपरिवर्ग मष्टाचत्वारिꣳशच्च ॥ ॥ १ ॥

यावन्तः । वै । देवाः । यज्ञाय । अपुनत । ते । एव । अभवन्न् । यः । एवम् । विद्वान् । यज्ञाय । पुनीते । भवति । एव । बहिः । पवयित्वा । अन्तः । प्रेति । पादयति । मनुष्यलोकइतिमनुष्य-लोके । एव । एनम् । पवयित्वा । पूतम् । देवलोकमितिदेव-लोकम् । प्रेति । नयति । अदीक्षितः । एकया । आहुत्येत्या-हुत्या ।

इति । आहुः । स्रुवेण । चतस्रः । जुहोति । दीक्षितत्वायेतिदीक्षित-त्वाय । स्रुचा । पञ्चमीम् । पञ्चाक्षरेतिपञ्च-अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अ वेति । रुन्धे । आकूत्याइत्या-कूत्यै । प्रयुजइतिप्र-युजे । अग्नये । [१०] स्वाहा । इति । आह । आकूत्येत्या-कूत्या । हि । पुरुषः । यज्ञम् । अभीति । प्रयुङ्क्तइतिप्र-युङ्क्ते । यजेय । इति । मेधायै । मनसे । अग्नये । स्वाहा । इति । आह । मेध या । हि । मनसा । पुरुषः । यज्ञम् । अभिगच्छतीत्यभि-गच्छति । सरस्वत्यै । पूष्णे । अग्नये । स्वाहा । इति । आह । वाक् । वै । सरस्वती । पृथिवी । पूषा । वाचा । एव । पृथिव्या । यज्ञम् । प्रेति । युङ्क्ते । आपः । देवीः । बृहतीः । विश्वशम्भुवइतिविश्व-शम्भुवः । इति । आह । याः । वै । वर्ष्याः । ताः । [११] आपः । देवीः । बृहतीः । विश्वशम्भुवइतिविश्व-शम्भुवः । यत् । एतत् । यजुः । न । ब्रूयात् । दिव्याः । आपः । अशान्ताः । इमम् । लोकम् । एति । गच्छेयुः । आपः । देवीः । बृहतीः । विश्व शम्भुवइतिविश्व-शम्भुवः । इति । आह । अस्मै । एव । एनाः । लोकाय । शमय ति । तस्मात् । शान्ताः । इमम् । लोकम् । एति । गच्छन्ति । द्यावापृथिवीइतिद्या वा-पृथिवी । इति । आह । द्यावापृथिव्योरितिद्यावा-पृथिव्योः । हि । यज्ञः । उरु । अन्तरिक्षम् । इति । आह । अन्तरिक्षे । हि । यज्ञः । बृहस्पतिः । नः । हविषा । वृधातु । [१२] इति । आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । अस्मै । यज्ञम् । अवेति । रुन्धे । यत् । ब्रूयात् । विधेः । इति । यज्ञस्थाणुमितियज्ञ-स्थाणुम् । ऋच्छेत् । वृधातु । इति । आह । यज्ञस्थाणुमितियज्ञ-स्थाणुम् । एव । प रीति । वृणक्ति । प्रजापतिरितिप्रजा-पतिः । यज्ञम् । असृजत । सः । अस्मात् । सृष्टः । पराङ् । ऐत् । सः । प्रेति । यजुः । अव्लीनात् । प्रेति । साम । तम् । ऋक् । उ दिति । अयच्छत् । यत् । ऋक् । उदयच्छदित्युत्-अयच्छत् । तत् । औद्ग्रहणस्येत्यौत्-ग्रहणस्य । औद्ग्रहणत्वमित्यौद्ग्रहण-त्वम् । ऋचा । [१३] जुहोति । यज्ञस्य । उद्यत्या इत्युत्-यत्यै । अनुष्टुबित्यनु-स्तुप् । छन्दसाम् । उदिति । अयच्छत् । इति । आहुः । तस्मात् । अनुष्टुभेत्यनु-स्तुभा । जुहोति । यज्ञस्य । उद्यत्याइत्युत्-यत्यै । द्वादश । वात्सबन्धानीतिवात्स-बन्धानि । उदिति । अयच्छन् । इति । आहुः । तस्मात् ।

द्वादशभिरितिद्वादश-भिः । वाथ्सबन्धविदइतिवाथ्सबन्ध-विदः । दीख्षयन्ति । सा । वै । एषा । ऋक् । अनुष्टुगित्यनु-स्तुक् । वाक् । अनुष्टुगित्यनु-स्तुक् । यत् । एतया । ऋचा । दीख्षयति । वाचा । एव । एनम् । सर्वया । दीख्षयति । विश्वे । देवस्य । नेतुः । इति । आह । सावित्री । एतेन । मर्तः । वृणीत । सख्यम् । [१४] इति । आह । पितृदेवत्येतिपितृ-देवत्या । एतेन । विश्वे । रायः । इषुध्यसि । इति । आह । वैश्वदेवीतिवैश्व-देवी । एतेन । द्युम्नम् । वृणीत । पुष्यसे । इति । आह । पौष्णी । एतेन । सा । वै । एषा । ऋक् । सर्वदेवत्येतिसर्व-देवत्या । यत् । एतया । ऋचा । दीख्षयति । सर्वाभिः । एव । एनम् । देवताभिः । दीख्षयति । सप्ताख्षरमितिसप्त-अख्षरम् । प्रथमम् । पदम् । अष्टाख्षराणीत्यष्टा-अख्षराणि । त्रीणि । यानि । त्रीणि । तानि । अष्टौ । उपेति । यन्ति । यानि । चत्वारि । तानि । अष्टौ । यत् । अष्टाख्षरेत्यष्टा-अख्षरा । तेन । [१५] गायत्री । यत् । एकादशाख्षरेत्येकादश-अख्षरा । तेन । त्रिष्टुक् । यत् । द्वादशाख्षरेतिद्वादश-अख्षरा । तेन । जगती । सा । वै । एषा । ऋक् । सर्वाणि । छन्दाꣳसि । यत् । एतया । ऋचा । दीख्षयति । सर्वैभिः । एव । एनम् । छन्दोभिरितिछन्दः-भिः । दीख्षयति । सप्ताख्षरमितिसप्त-अख्षरम् । प्रथमम् । पदम् । सप्तपदेतिसप्त-पदा । शक्वरी । पशवः । शक्वरी । पशून् । एव । अवेति । रुन्धे । एकस्मात् । अख्षरात् । अनाप्तम् । प्रथमम् । पदम् । तस्मात् । यत् । वाचः । अनाप्तम् । तत् । मनुष्याः । उपेति । जीवन्ति । पूर्णया । जुहोति । पूर्णः । इव । हि । प्रजापतिरितिप्रजा-पतिः । प्रजापतेरितिप्रजा-पतेः । आप्त्यै । न्यूनयेति नि-ऊनया । जुहोति । न्यूनादितिनि-ऊनात् । हि । प्रजापतिरितिप्रजा-पतिः । प्रजाइतिप्र-जाः । असृजत । प्रजानामितिप्र-जानाम् । सृष्ट्यै ॥ [१६] अग्नयेतावृंधात्वृचासख्यन्तेनजुहोतिपञ्चदशच ॥ ❋ ❋ ❋ ॥२॥

ऋख्सामेइत्यृक्-सामे । वै । देवेभ्यः । यज्ञाय । अतिष्ठमानेइति । कृष्णः । रूपम् । कृत्वा । अपक्रम्येत्यप-क्रम्य । अतिष्ठताम् । ते । अमन्यन्त । यम् । वै । इमेइति । उपावर्थ्स्यतइत्युप-आवर्थ्स्यतः । सः । इदम् । भविष्यति । इति । तेइति । उपेति । अमन्त्रयन्त । तेइति । अहोरात्रयोरित्यहः-रात्रयोः । महिमानम् । अपनिधायेत्यप-निधाय । देवान् । उपावर्तेतामित्युप-आवर्तेताम् । एषः । वै । ऋचः । वर्णः ।

यत् । शुक्लम् । कृष्णाजिनस्येतिकृष्ण-अजिनस्य । एषः । साम्नः । यत् । कृष्णम् । ऋक्सामयोरित्यृक्-सामयोः । शिल्पेइति । स्थः । इति । आह । ऋक्सामेइत्यृक्-सामे । एव । अवेति । रुन्धे । एषः । [१७] वै । अह्नः । वर्णः । यत् । शुक्लम् । कृष्णाजिनस्येतिकृष्ण-अजिनस्य । एषः । रात्रियाः । यत् । कृष्णम् । यत् । एव । एनयोः । तत्र । न्यक्तमितिनि-अक्तम् । तत् । एव । अवेति । रुन्धे । कृष्णाजिनेनेतिकृष्ण-अजिनेन । दीक्षयति । ब्रह्मणः । वै । एतत् । रूपम् । यत् । कृष्णाजिनमितिकृष्ण-अजिनम् । ब्रह्मणा । एव । एनम् । दीक्षयति । इमाम् । धियम् । शिक्षमाणस्य । देव । इति । आह । यथायजुरितियथा-यजुः । एव । एतत् । गर्भः । वै । एषः । यत् । दीक्षितः । उल्बम् । वासः । प्रेति । ऊर्णुते । तस्मात् । [१८] गर्भाः । प्रावृताः । जायन्ते । न । पुरा । सोमस्य । क्रयात् । अपेति । ऊर्ण्वीत । यत् । पुरा । सोमस्य । क्रयात् । अपोर्ण्वीतेत्यप-ऊर्ण्वीत । गर्भाः । प्रजानामितिप्र-जानाम् । परापातुकाइतिपरा-पातुकाः । स्युः । क्रीते । सोमे । अपेति । ऊर्णुते । जायते । एव । तत् । अथोइति । यथा । वसीयाꣳसम् । प्रत्यपोर्णुतइतिप्रति-अपोर्णुते । तादृक् । एव । तत् । अङ्गिरसः । सुवर्गमितिसुवः-गम् । लोकम् । यन्तः । ऊर्जम् । वीति । अभजन्त । ततः । यत् । अत्यशिष्यतेत्यति-अशिष्यत । ते । शराः । अभवन्न् । ऊर्क् । वै । शराः । यत् । शरमयीतिशर-मयी । [१९] मेखला । भवति । ऊर्जम् । एव । अवेति । रुन्धे । मध्यतः । समिति । नह्यति । मध्यतः । एव । अस्मै । ऊर्जम् । दधाति । तस्मात् । मध्यतः । ऊर्जा । भुञ्जते । ऊर्ध्वम् । वै । पुरुषस्य । नाभ्यै । मेध्यम् । अवाचीनम् । अमेध्यम् । यत् । मध्यतः । सन्नह्यतीतिसं-नह्यति । मेध्यम् । च । एव । अस्य । अमेध्यम् । च । व्यावर्तयतीतिवि-आवर्तयति । इन्द्रः । वृत्राय । वज्रम् । प्रेति । अहरत् । सः । त्रेधा । वीति । अभवत् । स्फ्यः । तृतीयम् । रथः । तृतीयम् । यूपः । तृतीयम् । [२०] ये । अन्तश्शराइत्यन्तः-शराः । अशीर्यन्त । ते । शराः । अभवन्न् । तत् । शराणाम् । शरत्वमितिशर-त्वम् । वज्रः । वै । शराः । क्षुत् । खलु । वै । मनुष्यस्य । भ्रातृव्यः । यत् । शरमयीतिशर-मयी । मेखला । भवति । वज्रेण । एव । साक्षादितिस-अक्षात् । क्षुधम् । भ्रातृव्यम् । मध्यतः । अपेति । हते । त्रिवृदितित्रि-वृत् । भवति । त्रिवृदितित्रि-वृत् । वै । प्राणइतिप्र-अनः । त्रिवृतमितित्रि-वृतम् ।

एव । प्राणमितिप्र-अनम् । मध्यतः । यजमाने । दधाति । पृथ्वी । भवति । रज्जू नाम् । व्यावृत्त्याइतिवि-आवृत्त्यै । मेखलया । यजमानम् । दीक्षयति । योक्त्रेण । पत्नीम् । मिथुनत्वायेतिमिथुन-त्वाय । [२१] यज्ञः । दक्षिणाम् । अभीति । अध्या यत् । ताम् । समिति । अभवत् । तत् । इन्द्रः । अचायत् । सः । अमन्यत । यः । वै । इतः । जनिष्यते । सः । इदम् । भविष्यति । इति । ताम् । प्रेति । अविशत् । तस्याः । इन्द्रः । एव । अजायत । सः । अमन्यत । यः । वै । मत् । इतः । अपरः । जनिष्यते । सः । इदम् । भविष्यति । इति । तस्याः । अनुमृश्येत्यनु-मृश्य । योनिम् । एति । अच्छिनत् । सा । सूतवशेतिसूत-वशा । अभवत् । तत् । सूतवशायाइतिसू त-वशायै । जन्म । [२२] ताम् । हस्ते । नीति । अवेष्टयत । ताम् । मृगेषु । नीति । अदधात् । सा । कृष्णविषाणेतिकृष्ण-विषाणा । अभवत् । इन्द्रस्य । योनिः । असि । मा । मा । हिंसीः । इति । कृष्णविषाणामितिकृष्ण-विषाणाम् । प्रेति । यच्छति । सयोनिमितिस-योनिम् । एव । यज्ञम् । करोति । सयोनिमितिस-योनिम् । दक्षि णाम् । सयोनिमितिस-योनिम् । इन्द्रम् । सयोनित्वायेतिसयोनि-त्वाय । कृष्यै । त्वा । सुसस्यायाइतिसु-सस्यायै । इति । आह । तस्मात् । अकृष्टपच्याइत्यकृष्ट-पच्याः । ओषधयः । पच्यन्ते । सुपिप्पलाभ्यइतिसु-पिप्पलाभ्यः । त्वा । ओषधीभ्यइत्योषधि-भ्यः । इति । आह । तस्मात् । ओषधयः । फलम् । गृह्णन्ति । यत् । हस्तेन । [२३] कण्डूयेत । पामनम्भावुकाइतिपामनं-भावुकाः । प्रजाइतिप्र-जाः । स्युः । यत् । स्म येत । नग्नम्भावुकाइतिनग्नं-भावुकाः । कृष्णविषाणयेतिकृष्ण-विषाणया । कण्डूयते । अपिगृह्येत्यपि-गृह्य । स्मयते । प्रजानामितिप्र-जानाम् । गोपीथाय । न । पुरा । द क्षिणाभ्यः । नेतोः । कृष्णविषाणामितिकृष्ण-विषाणाम् । अवेति । चृतेत् । यत् । पुरा । दक्षिणाभ्यः । नेतोः । कृष्णविषाणामितिकृष्ण-विषाणाम् । अवचृतेदित्यव-चृतेत् । योनिः । प्रजानामितिप्र-जानाम् । परापातुकेतिपरा-पातुका । स्यात् । नी तासु । दक्षिणासु । चात्वाले । कृष्णविषाणामितिकृष्ण-विषाणाम् । प्रेति । अस्य ति । योनिः । वै । यज्ञस्य । चात्वालम् । योनिः । कृष्णविषाणेतिकृष्ण-विषाणा । योनौ । एव । योनिम् । दधाति । यज्ञस्य । सयोनित्वायेतिसयोनि-त्वाय ॥ [२४]

रुन्धएषतस्माच्छरमयीयूपस्तृतीयम्मिथुनत्वायजन्महस्तेनाष्टाचत्वारिंशच्च ॥ ३ ॥

वाक् । वै । देवेभ्यः । अपेति । अक्रामत् । यज्ञाय । अतिष्ठमाना । सा । वनस्पतीन् । प्रेति । अविशत् । सा । एषा । वाक् । वनस्पतिषु । वदति । या । दुन्दुभौ । या । तूणवे । या । वीणायाम् । यत् । दीक्षितदण्डमितिदीक्षित-दण्डम् । प्रयच्छतीतिप्र-यच्छति । वाचम् । एव । अवेति । रुन्धे । औदुम्बरः । भवति । ऊर्क् । वै । उदुम्बरः । ऊर्जम् । एव । अवेति । रुन्धे । मुखेन । सम्मितइतिसं-मितः । भवति । मुखतः । एव । अस्मै । ऊर्जम् । दधाति । तस्मात् । मुखतः । ऊर्जा । भुञ्जते । [२५] क्रीते । सोमे । मैत्रावरुणायेतिमैत्रा-वरुणाय । दण्डम् । प्रेति । यच्छति । मैत्रावरुणइतिमैत्रा-वरुणः । हि । पुरस्तात् । ऋत्विग्भ्यइत्यृत्विक्-भ्यः । वाचम् । विभजतीतिवि-भजति । ताम् । ऋत्विजः । यजमाने । प्रतीति । स्थापयन्ति । स्वाहा । यज्ञम् । मनसा । इति । आह । मनसा । हि । पुरुषः । यज्ञम् । अभिगच्छतीत्यभि-गच्छति । स्वाहा । द्यावापृथिवीभ्यामितिद्यावा-पृथिवीभ्याम् । इति । आह । द्यावापृथिव्योरितिद्यावा-पृथिव्योः । हि । यज्ञः । स्वाहा । उरोः । अन्तरिक्षात् । इति । आह । अन्तरिक्षे । हि । यज्ञः । स्वाहा । यज्ञम् । वातात् । एति । रभे । इति । आह । अयम् । [२६] वाव । यः । पवते । सः । यज्ञः । तम् । एव । साक्षादितिस-अक्षात् । एति । रभते । मुष्टीइति । करोति । वाचम् । यच्छति । यज्ञस्य । धृत्यै । अदीक्षिष्ट । अयम् । ब्राह्मणः । इति । त्रिः । उपांश्वित्युप-अंशु । आह । देवेभ्यः । एव । एनम् । प्रेति । आह । त्रिः । उच्चैः । उभयेभ्यः । एव । एनम् । देवमनुष्येभ्यइतिदेव-मनुष्येभ्यः । प्रेति । आह । न । पुरा । नक्षत्रेभ्यः । वाचम् । वीति । सृजेत् । यत् । पुरा । नक्षत्रेभ्यः । वाचम् । विसृजेदितिवि-सृजेत् । यज्ञम् । वीति । छिन्द्यात् । [२७] उदितेष्वित्युत्-इतेषु । नक्षत्रेषु । व्रतम् । कृणुत । इति । वाचम् । वीति । सृजति । यज्ञव्रतइतियज्ञ-व्रतः । वै । दीक्षितः । यज्ञम् । एव । अभीति । वाचम् । वीति । सृजति । यदि । विसृजेदितिवि-सृजेत् । वैष्णवीम् । ऋचम् । अन्विति । ब्रूयात् । यज्ञः । वै । विष्णुः । यज्ञेन । एव । यज्ञम् । समिति । तनोति । दैवीम् । धियम् । मनामहे । इति । आह । यज्ञम् । एव । तत् । मृदयति । सुपारेतिसु-पारा । नः । असत् । वशे । इति । आह । व्युष्टिमितिवि-उष्टिम् । एव । अवेति । रुन्धे । [२८] ब्रह्म

वादिनइतिब्रह्म-वादिनः । वदन्ति । होतव्यम् । दीक्षितस्य । गृहा(३)इ । न । होतव्या(३)म् । इति । हविः । वै । दीक्षितः । यत् । जुहुयात् । यजमानस्य । अवदायेत्यव-दाय । जुहुयात् । यत् । न । जुहुयात् । यज्ञपरुरितियज्ञ-परुः । अन्तः । इयात् । ये । देवाः । मनोजाताइतिमनः-जाताः । मनोयुजइतिमनः-युजः । इति । आह । प्राणाइतिप्र-अनाः । वै । देवाः । मनोजाताइतिमनः-जाताः । मनोयुजइतिमनः-युजः । तेषु । एव । परोक्षमितिपरः-अक्षम् । जुहोति । तत् । न । इव । हुतम् । न । इव । अहुतम् । स्वपन्तम् । वै । दीक्षितम् । रक्षांऽसि । जिघांऽसन्ति । अग्निः । [२९] खलु । वै । रक्षोहेतिरक्षः-हा । अग्ने । त्वम् । स्विति । जागृहि । वयम् । स्विति । मन्दिषीमहि । इति । आह । अग्निम् । एव । अधिपामित्यधि-पाम् । कृत्वा । स्वपिति । रक्षसाम् । अपहत्याइत्यप-हत्यै । अव्रत्यम् । इव । वै । एषः । करोति । यः । दीक्षितः । स्वपिति । त्वम् । अग्ने । व्रतपाइतिव्रत-पाः । असि । इति । आह । अग्निः । वै । देवानाम् । व्रतपतिरितिव्रत-पतिः । सः । एव । एनम् । व्रतम् । एति । लम्भयति । देवः । एति । मर्त्येषु । एति । इति । आह । देवः । [३०] हि । एषः । सन्न् । मर्त्येषु । त्वम् । यज्ञेषु । ईड्यः । इति । आह । एतम् । हि । यज्ञेषु । ईडते । अपेति । वै । दीक्षितात् । सुषुपुषः । इन्द्रियम् । देवताः । क्रामन्ति । विश्वे । देवाः । अभीति । माम् । एति । अववृत्रन्न् । इति । आह । इन्द्रियेण । एव । एनम् । देवताभिः । समिति । नयति । यत् । एतत् । यजुः । न । ब्रूयात् । यावतः । एव । पशून् । अभीति । दीक्षेत । तावन्तः । अस्य । पशवः । स्युः । रास्व । इयत् । [३१] सोम । एति । भूयः । भर । इति । आह । अपरिमितानित्यपरि-मितान् । एव । पशून् । अवेति । रुन्धे । चन्द्रम् । असि । मम । भोगाय । भव । इति । आह । यथादेवतमितियथा-देवतम् । एव । एनाः । प्रतीति । गृह्णाति । वायवे । त्वा । वरुणाय । त्वा । इति । यत् । एवम् । एताः । न । अनुदिशेदित्यनु-दिशेत् । अयथादेवतमित्ययथा-देवतम् । दक्षिणाः । गमयेत् । एति । देवताभ्यः । वृश्च्येत । यत् । एवम् । एताः । अनुदिशतीत्यनु-दिशति । यथादेवतमितियथा-देवतम् । एव । दक्षिणाः । गमयति । न । देवताभ्यः । एति । [३२] वृश्च्यते । देवीः । आपः । अपाम् । नपात् । इति । आह । यत् । वः । मेध्यम् । यज्ञियम् । सदेवमितिस-देवम् । तत् ।

अस्मिन्न् । लोके । पशुमानितिपशु-मान् । स्यात् । यत् । आहवनीयइत्या-हवनीये । अमुष्मिन्न् । [१०] लोके । पशुमानितिपशु-मान् । स्यात् । उभयोः । उपेति । सादयति । उभयोः । एव । एनम् । लोकयोः । पशुमन्तमितिपशु-मन्तम् । करोति । सर्वतः । परीति । हरति । रक्षसाम् । अपहत्याइत्यप-हत्यै । इन्द्राग्नियोरितीन्द्र-अग्नियोः । भागधेयीरितिभाग-धेयीः । स्थ । इति । आह । यथायजुरितियथा-यजुः । एव । एतत् । आग्नीध्रइत्याग्नि-इध्रे । उपेति । वासयति । एतत् । वै । यज्ञस्य । अपराजितमित्यपरा-जितम् । यत् । आग्नीध्रमित्याग्नि-इध्रम् । यत् । एव । यज्ञस्य । अपराजितमित्यपरा-जितम् । तत् । एव । एनाः । उपेति । वासयति । यतः । खलु । वै । यज्ञस्य । विततस्येतिवि-ततस्य । न । क्रियते । तत् । अन्विति । यज्ञम् । रक्षाꣳसि । अवेति । चरन्ति । यत् । वहन्तीनाम् । गृह्णाति । क्रियमाणम् । एव । तत् । यज्ञस्य । शये । रक्षसाम् । अनन्ववचारायेत्यनन्नु-अवचाराय । न । हि । एताः । ईलयन्ति । एति । तृतीयसवनादितितृतीय-सवनात् । परीति । शेरे । यज्ञस्य । सन्तत्याइतिसं-तत्यै ॥ [११] स्यादिन्द्राग्नियोर्यदस्त्वमुष्मिन् क्रियतेषड्विꣳशतिश्च ॥ ❀ ❀ ❀ ❀ ॥२॥

ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । सः । तु । वै । अध्वर्युः । स्यात् । यः । सोमम् । उपावहरन्नित्युप-अवहरन्न् । सर्वाभ्यः । देवताभ्यः । उपावहरेदित्युप-अवहरेत् । इति । हृदे । त्वा । इति । आह । मनुष्येभ्यः । एव । एतेन । करोति । मनसे । त्वा । इति । आह । पितृभ्यइतिपितृ-भ्यः । एव । एतेन । करोति । दिवे । त्वा । सूर्याय । त्वा । इति । आह । देवेभ्यः । एव । एतेन । करोति । एतावतीः । वै । देवताः । ताभ्यः । एव । एनम् । सर्वाभ्यः । उपावहरतीत्युप-अवहरति । पुरा । वाचः । [१२] प्रवदितोरितिप्र-वदितोः । प्रातरनुवाकमितिप्रातः-अनुवाकम् । उपाकरोतीत्युप-आकरोति । यावती । एव । वाक् । ताम् । अवेति । रुन्धे । अपः । अग्रे । अभिव्याहरतीत्यभि-व्याहरति । यज्ञः । वै । आपः । यज्ञम् । एव । अभीति । वाचम् । वीति । सृजति । सर्वाणि । छन्दाꣳसि । अन्विति । आह । पशवः । वै । छन्दाꣳसि । पशून् । एव । अवेति । रुन्धे । गायत्रिया । तेजस्कामस्येतितेजः-कामस्य । परीति । दध्यात् । त्रिष्टुभा । इन्द्रियकामस्येतीन्द्रिय-काम

स्य । जगत्या । पशुकामस्येतिपशु-कामस्य । अनुष्टुभेत्यनु-स्तुभा । प्रतिष्ठाकामस्ये
तिप्रतिष्ठा-कामस्य । पङ्क्त्या । यज्ञकामस्येतियज्ञ-कामस्य । विराजेतिवि-राजा ।
अन्नकामस्येत्यन्न-कामस्य । शृणोतु । अग्निः । समिधेतिसं-इधा । हवम् । [ १३ ]
मे । इति । आह । सवितृप्रसूतइतिसवितृ-प्रसूतः । एव । देवताभ्यः । निवेद्येतिनि-
वेद्य । अपः । अच्छ । एति । अपः । इष्य । होतः । इति । आह । इषितम् । हि ।
कर्म । क्रियते । मैत्रावरुणस्येतिमैत्रा-वरुणस्य । चमसाध्वर्यवितिचमस-अध्वर्यो । ए
ति । द्रव । इति । आह । मित्रावरुणावितिमित्रा-वरुणौ । वै । अपाम् । नेतारौ । ताभ्याम् ।
एव । एनाः । अच्छ । एति । देवीः । आपः । अपाम् । नपात् । इति । आह ।
आहुत्येत्या-हुत्या । एव । एनाः । निष्क्रीयेति निः-क्रीय । गृह्णाति । अथोइति ।
हविष्कृतानामितिहविः-कृतानाम् । एव । अभिघृतानामित्यभि-घृतानाम् । गृह्णा
ति । [ १४ ] कार्षिः । असि । इति । आह । शमलम् । एव । आसाम् । अपेति ।
प्लावयति । समुद्रस्य । वः । अक्षित्यै । उदिति । नये । इति । आह । तस्मात् ।
अद्यमानाः । पीयमानाः । आपः । न । क्षीयन्ते । योनिः । वै । यज्ञस्य । चा
त्वालम् । यज्ञः । वसतीवरीः । होतृचमसमितिहोतृ-चमसम् । च । मैत्रावरुणचम
समितिमैत्रावरुण-चमसम् । च । सꣳस्पर्श्येतिसं-स्पर्श्य । वसतीवरीः । व्यानयती
तिवि-आनयति । यज्ञस्य । सयोनित्वायेतिसयोनि-त्वाय । अथोइति । स्वात् । ए
व । एनाः । योनेः । प्रेति । जनयति । अध्वर्योइति । अवेः । अपा(३)ः । इ
ति । आह । उत । ईम् । अनन्नमुः । उत । इमाः । पश्य । इति । वाव । एतत् ।
आह । यदि । अग्निष्टोमइत्यग्नि-स्तोमः । जुहोति । यदि । उक्थ्यः । परिधाविति
परि-धौ । नीति । मार्ष्टि । यदि । अतिरात्रइत्यति-रात्रः । यजुः । वदन् । प्रेति ।
पद्यते । यज्ञक्रतूनामितियज्ञ-क्रतूनाम् । व्यावृत्त्याइतिवि-आवृत्त्यै ॥ [ १५ ] वाचो
हवमभिघृतानाङ्गृह्णात्युतपञ्चविꣳशतिश्च ॥ ❀ ❀ ॥ ३ ॥

देवस्य । त्वा । सवितुः । प्रसवइतिप्र-सवे । इति । ग्रावाणम् । एति । दत्ते ।
प्रसूत्याइतिप्र-सूत्यै । अश्विनोः । बाहुभ्यामितिबाहु-भ्याम् । इति । आह । अश्वि
नौ । हि । देवानाम् । अध्वर्यूइति । आस्ताम् । पूष्णः । हस्ताभ्याम् । इति । आह ।
यत्यै । पशवः । वै । सोमः । व्यानइतिवि-अनः । उपांशुसवनइत्युपांशु-सवन

नः । यत् । उपांशुसवनमित्युपांशु-सवनम् । अभीति । मिमीते । व्यानमितिवि-अनम् । एव । पशुषु । दधाति । इन्द्राय । त्वा । इन्द्राय । त्वा । इति । मिमीते । इन्द्राय । हि । सोमः । आह्रियतइत्या-ह्रियते । पञ्च । कृत्वः । यजुषा । मिमीते । [१६] पञ्चाक्षरेतिपञ्च-अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे । पञ्च । कृत्वः । तूष्णीम् । दश । समिति । पद्यन्ते । दशाक्षरेतिदश-अक्षरा । विराडितिवि-राट् । अन्नम् । विराडितिवि-राट् । विराजेतिवि-राजा । एव । अन्नाद्य मित्यन्न-अद्यम् । अवेति । रुन्धे । श्वात्राः । स्थ । वृत्रतुरइतिवृत्र-तुरः । इति । आह । एषः । वै । अपाम् । सोमपीथइतिसोम-पीथः । यः । एवम् । वेद । न । अप्स्वित्यप्-सु । आर्तिम् । एति । ऋच्छति । यत् । ते । सोम । दिवि । ज्योतिः । इति । आह । एभ्यः । एव । एनम् । [१७] लोकेभ्यः । समिति । भरति । सोमः । वै । राजा । दिशः । अभीति । अध्यायन् । सः । दिशः । अनु । प्रेति । अविशत् । प्राक् । अपाक् । उदक् । अधराक् । इति । आह । दिग्भ्यइतिदिक्-भ्यः । एव । एनम् । समिति । भरति । अथोइति । दिशः । एव । अस्मै । अवेति । रुन्धे । अम्ब । नीति । स्वर । इति । आह । कामुकाः । एनम् । स्त्रियः । भवन्ति । यः । एवम् । वेद । यत् । ते । सोम । अदाभ्यम् । नाम । जागृवि । इति । [१८] आह । एषः । वै । सोमस्य । सोमपीथइतिसोम-पीथः । यः । एवम् । वेद । न । सौम्याम् । आर्तिम् । एति । ऋच्छति । घ्नन्ति । वै । एतत् । सोमम् । यत् । अभिषुण्वन्तीत्यभि-सुन्वन्ति । अंशून् । अपेति । गृह्णाति । त्रायते । एव । एनम् । प्राणाइतिप्र-अनाः । वै । अंशवः । पशवः । सोमः । अंशून् । पुनः । अपीति । सृजति । प्राणानितिप्र-अनान् । एव । पशुषु । दधाति । द्वौद्वावितिद्वौ-द्वौ । अपीति । सृजति । तस्मात् । द्वौद्वावितिद्वौ-द्वौ । प्राणाइतिप्र-अनाः ॥ [१९] यजुषा मिमीत एनञ्जागृवीति चतुश्चत्वारिंशच्च ॥ ❀ ❀ ❀ ❀ ॥ ४ ॥

प्राणइतिप्र-अनः । वै । एषः । यत् । उपांशुरित्युप-अंशुः । यत् । उपांशुग्राइत्युपांशु-अग्राः । ग्रहाः । गृह्यन्ते । प्राणमितिप्र-अनम् । एव । अनु । प्रेति । यन्ति । अरुणः । ह । स्म । आह । औपवेशिरित्यौप-वेशिः । प्रातस्सवनइतिप्रातः-सवने । एव । अहम् । यज्ञम् । समिति । स्थापयामि । तेन । ततः । संस्थितेनेति

सं-स्थितेन । चरामि । इति । अष्टौ । कृत्वः । अग्रे । अभीति । सुनोति । अष्टाक्षरेत्यष्टा-अक्षरा । गायत्री । गायत्रम् । प्रातस्सवनमितिप्रातः-सवनम् । प्रातस्सवनमितिप्रातः-सवनम् । एव । तेन । आप्नोति । एकादश । कृत्वः । द्वितीयम् । एकादशाक्षरेत्येकादश-अक्षरा । त्रिष्टुप् । त्रैष्टुभम् । माध्यंन्दिनम् । [२०] सवनम् । माध्यंन्दिनम् । एव । सवनम् । तेन । आप्नोति । द्वादश । कृत्वः । तृतीयम् । द्वादशाक्षरेतिद्वादश-अक्षरा । जगती । जागतम् । तृतीयसवनमितितृतीय-सवनम् । तृतीयसवनमितितृतीय-सवनम् । एव । तेन । आप्नोति । एताम् । ह । वाव । सः । यज्ञस्य । सꣳस्थितिमितिसं-स्थितिम् । उवाच । अस्कन्दाय । अस्कन्नम् । हि । तत् । यत् । यज्ञस्य । सꣳस्थितस्येतिसं-स्थितस्य । स्कन्दति । अथोइति । खलु । आहुः । गायत्री । वाव । प्रातस्सवनइतिप्रातः-सवने । न । अतिवादइत्यति-वादे । इति । अनतिवादुकइत्यनति-वादुकः । एनम् । भ्रातृव्यः । भवति । यः । एवम् । वेद । तस्मात् । अष्टावष्टावित्यष्टौ-अष्टौ । [२१] कृत्वः । अभिषुत्यमित्यभि-सुत्यम् । ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । पवित्रवन्तइतिपवित्र-वन्तः । अन्ये । ग्रहाः । गृह्यन्ते । किम्पवित्रइतिकिं-पवित्रः । उपाꣳशुरित्युप-अꣳशुः । इति । वाक्पवित्रइतिवाक्-पवित्रः । इति । ब्रूयात् । वाचः । पतये । पवस्व । वाजिन्न् । इति । आह । वाचा । एव । एनम् । पवयति । वृष्णः । अꣳशुभ्यामित्यꣳशु-भ्याम् । इति । आह । वृष्णः । हि । एतौ । अꣳशूइति । यौ । सोमस्य । गभस्तिपूतइतिगभस्ति-पूतः । इति । आह । गभस्तिना । हि । एनम् । पवयति । देवः । देवानाम् । पवित्रम् । असि । इति । आह । देवः । हि । एषः । [२२] सन्न् । देवानाम् । पवित्रम् । येषाम् । भागः । असि । तेभ्यः । त्वा । इति । आह । येषाम् । हि । एषः । भागः । तेभ्यः । एनम् । गृह्णाति । स्वाङ्कृतः । असि । इति । आह । प्राणमितिप्र-अनम् । एव । स्वम् । अकृत । मधुमतीरितिमधु-मतीः । नः । इषः । कृधि । इति । आह । सर्वम् । एव । अस्मै । इदम् । स्वदयति । विश्वेभ्यः । त्वा । इन्द्रियेभ्यः । दिव्येभ्यः । पार्थिवेभ्यः । इति । आह । उभयेषु । एव । देवमनुष्येष्वितिदेव-मनुष्येषु । प्राणानितिप्र-अनान् । दधाति । मनः । त्वा । [२३] अष्टु । इति । आह । मनः । एव । अश्नुते । उरु । अन्तरिक्षम् । अन्विहि । इति । आह । अन्तरिक्षदेवत्यइत्यन्तरिक्ष-देवत्यः । हि । प्राणः

इतिप्र-अनः। स्वाहा। त्वा। सुभवइतिसु-भवः। सूर्याय। इति। आह। प्राणाइति प्र-अनाः। वै। स्वभवसइतिस्व-भवसः। देवाः। तेषु। एव। परोक्षमितिपरः-अ क्षम्। जुहोति। देवेभ्यः। त्वा। मरीचिपेभ्यइतिमरीचि-पेभ्यः। इति। आह। आ दित्यस्य। वै। रश्मयः। देवाः। मरीचिपाइतिमरीचि-पाः। तेषाम्। तत्। भागधेय मितिभाग-धेयम्। तान्। एव। तेन। प्रीणाति। यदि। कामयेत। वर्षुकः। प जन्यः। [२४] स्यात्। इति। नीचा। हस्तेन। नीति। मृज्यात्। वृष्टिम्। एव। नीति। यच्छति। यदि। कामयेत। अवर्षुकः। स्यात्। इति। उत्तानेत्युत्-ता नेन। नीति। मृज्यात्। वृष्टिम्। एव। उदिति। यच्छति। यदि। अभिचरेदित्य भि-चरेत्। अमुम्। जहि। अथ। त्वा। होष्यामि। इति। ब्रूयात्। आहुतिमि त्या-हुतिम्। एव। एनम्। प्रेप्सन्नितिप्र-ईप्सन्। हन्ति। यदि। दूरे। स्यात्। एति। तमितोः। तिष्ठतु। प्राणमितिप्र-अनम्। एव। अस्य। अनुगत्येत्यनु-गत्य। हन्ति। यदि। अभिचरेदित्यभि-चरेत्। अमुष्य। [२५] त्वा। प्राणइतिप्र-अने। सादयामि। इति। सादयेत्। असन्नः। वै। प्राणइतिप्र-अनः। प्राणमितिप्र-अ नम्। एव। अस्य। सादयति। षड्भिरितिषट्-भिः। अꣳशुभिरित्यꣳशु-भिः। पव यति। षट्। वै। ऋतवः। ऋतुभिरित्यृतु-भिः। एव। एनम्। पवयति। त्रिः। पवयति। त्रयः। इमे। लोकाः। एभिः। एव। एनम्। लोकैः। पवयति। ब्रह्म वादिनइतिब्रह्म-वादिनः। वदन्ति। कस्मात्। सत्यात्। त्रयः। पशूनाम्। हस्ता दानाइतिहस्त-आदानाः। इति। यत्। त्रिः। उपाꣳशुमित्युप-अꣳशुम्। हस्तेन। विगृह्णातीतिवि-गृह्णाति। तस्मात्। त्रयः। पशूनाम्। हस्तादानाइतिहस्त-आदा नाः। पुरुषः। हस्ती। मर्कटः॥ [२६] माध्यन्दिनमष्टावष्टावेषमनस्त्वापर्जन्योऽ मुष्यपुरुषोद्वे च॥ ❁ ❁ ❁ ❁ ॥५॥

देवाः। वै। यत्। यज्ञे। अकुर्वत। तत्। असुराः। अकुर्वत। ते। देवाः। उपाꣳशावित्युप-अꣳशौ। यज्ञम्। सꣳस्थाप्यमितिसं-स्थाप्यम्। अपश्यन्। तम्। उपाꣳशावित्युप-अꣳशौ। समिति। अस्थापयन्। ते। असुराः। वज्रम्। उद्य त्येत्युत्-यत्य। देवान्। अभीति। आयन्त। ते। देवाः। बिभ्यतः। इन्द्रम्। उपे ति। अधावन्। तान्। इन्द्रः। अन्तर्यामेणेत्यन्तः-यामेन। अन्तः। अधत्त।

तत् । अन्तर्यामस्येत्यन्तः-यामस्य । अन्तर्यामत्वमित्यन्तर्याम-त्वम् । यत् । अन्तर्यामइत्यन्तः-यामः । गृह्यते । भ्रातृव्यान् । एव । तत् । यजमानः । अन्तः । धत्ते । अन्तः । ते । [२७] दधामि । द्यावापृथिवीइतिद्यावा-पृथिवी । अन्तः । उरु । अन्तरीक्षम् । इति । आह । एभिः । एव । लोकैः । यजमानः । भ्रातृव्यान् । अन्तः । धत्ते । ते । देवाः । अमन्यन्त । इन्द्रः । वै । इदम् । अभूत् । यत् । वयम् । स्मः । इति । ते । अब्रुवन् । मघवन्नितिमघ-वन्न् । अन्विति । नः । एति । भज । इति । सजोषाइतिस-जोषाः । देवैः । अवरैः । परैः । च । इति । अब्रवीत् । ये । च । एव । देवाः । परे । ये । च । अवरे । तान् । उभयान् । [२८] अन्वाभजदित्यनु-आभजत् । सजोषाइतिस-जोषाः । देवैः । अवरैः । परैः । च । इति । आह । ये । च । एव । देवाः । परे । ये । च । अवरे । तान् । उभयान् । अन्वाभजतीत्यनु-आभजति । अन्तर्यामइत्यन्तः-यामे । मघवन्नितिमघ-वन्न् । मादयस्व । इति । आह । यज्ञात् । एव । यजमानम् । न । अन्तः । एति । उपयामगृहीतइत्युपयाम-गृहीतः । असि । इति । आह । अपानस्येत्यप-अनस्य । धृत्यै । यत् । उभौ । अपवित्रौ । गृह्येयाताम् । प्राणमितिप्र-अनम् । अपानइत्यप-अनः । अनु । नीति । ऋच्छेत् । प्रमायुकइतिप्र-मायुकः । स्यात् । पवित्रवानितिपवित्र-वान् । अन्तर्यामइत्यन्तः-यामः । गृह्यते । [२९] प्राणापानयोरितिप्राण-अपानयोः । विधृत्याइतिवि-धृत्यै । प्राणापानावितिप्राण-अपानौ । वै । एतौ । यत् । उपाꣳश्वन्तर्यामावित्युपाꣳशु-अन्तर्यामौ । व्यानइतिवि-अनः । उपाꣳशुसवनइत्युपाꣳशु-सवनः । यम् । कामयेत । प्रमायुकइतिप्र-मायुकः । स्यात् । इति । असꣳस्पृष्टावित्यसं-स्पृष्टौ । तस्य । सादयेत् । व्यानेनेतिवि-अनेन । एव । अस्य । प्राणापानावितिप्राण-अपानौ । वीति । छिनत्ति । ताजक् । प्रेति । मीयते । यम् । कामयेत । सर्वम् । आयुः । इयात् । इति । सꣳस्पृष्टावितिसं-स्पृष्टौ । तस्य । सादयेत् । व्यानेनेतिवि-अनेन । एव । अस्य । प्राणापानावितिप्राण-अपानौ । समिति । तनोति । सर्वम् । आयुः । एति ॥ [३०] तउभयान् गृह्यतेचतुश्चत्वारिꣳशच्च ॥ ६॥

वाक् । वै । एषा । यत् । ऐन्द्रवायवइत्यैन्द्र-वायवः । यत् । ऐन्द्रवायवाग्रा इत्यैन्द्रवायव-अग्राः । ग्रहाः । गृह्यन्ते । वाचम् । एव । अनु । प्रेति । यन्ति । वा

युधम् । देवाः । अब्रुवन्न् । सोमम् । राजानम् । हनाम । इति । सः । अब्रवीत् । वरम् । वृणै । मदग्राइतिमत्-अग्राः । एव । वः । ग्रहाः । गृह्यान्तै । इति । तस्मात् । ऐन्द्रवायवाग्राइत्यैन्द्रवायव-अग्राः । ग्रहाः । गृह्यन्ते । तम् । अघ्नन् । सः । अपूयत् । तम् । देवाः । न । उपेति । अधृष्णुवन्न् । ते । वायुम् । अब्रुवन् । इमम् । नः । स्वदय । [३१] इति । सः । अब्रवीत् । वरम् । वृणै । मद्देवत्यानीति मत्-देवत्यानि । एव । वः । पात्राणि । उच्यान्तै । इति । तस्मात् । नानादेवत्यानीतिनाना-देवत्यानि । सन्ति । वायव्यानि । उच्यन्ते । तम् । एभ्यः । वायुः । एव । अस्वदयत् । तस्मात् । यत् । पूयति । तत् । प्रवातइतिप्र-वाते । वीति । सजन्ति । वायुः । हि । तस्य । पवयिता । स्वदयिता । तस्य । विग्रहणमितिवि-ग्रहणम् । न । अविन्दन्न् । सा । अदितिः । अब्रवीत् । वरम् । वृणै । अथ । मया । वीति । गृह्णीध्वम् । मद्देवत्याइतिमत्-देवत्याः । एव । वः । सोमाः । [३२] सन्नाः । असन्न् । इति । उपयामगृहीतइत्युपयाम-गृहीतः । असि । इति । आह । अदितिदेवत्याइत्यदिति-देवत्याः । तेन । यानि । हि । दारुमयाणीतिदारु-मयानि । पात्राणि । अस्यै । तानि । योनेः । सम्भूतानीतिसं-भूतानि । यानि । मृन्मयानीतिमृत्-मयानि । सारूषादितिस-अरूषात् । तानि । अस्यै । तस्मात् । एवम् । आह । वाक् । वै । पराची । अव्याकृतेत्यवि-आकृता । अवदत् । ते । देवाः । इन्द्रम् । अब्रुवन्न् । इमाम् । नः । वाचम् । व्याकुर्वितिवि-आकुरु । इति । सः । अब्रवीत् । वरम् । वृणै । मह्यम् । च । एव । एषः । वायवे । च । सह । गृह्यातै । इति । तस्मात् । ऐन्द्रवायवइत्यैन्द्र-वायवः । सह । गृह्यते । ताम् । इन्द्रः । मध्यतः । अवक्रम्येत्यव-क्रम्य । व्याकरोदितिवि-आकरोत् । तस्मात् । इयम् । व्याकृतेतिवि-आकृता । वाक् । उद्यते । तस्मात् । सकृत् । इन्द्राय । मध्यतः । गृह्यते । द्विः । वायवे । द्वौ । हि । सः । वरौ । अवृणीत ॥ [३३] स्वदयसोमास्सहाष्टाविꣳशतिश्च ॥ ❀ ❀ ❀ ॥७॥

मित्रम् । देवाः । अब्रुवन्न् । सोमम् । राजानम् । हनाम । इति । सः । अब्रवीत् । न । अहम् । सर्वस्य । वै । अहम् । मित्रम् । अस्मि । इति । तम् । अब्रुवन् । हनाम । एव । इति । सः । अब्रवीत् । वरम् । वृणै । पयसा । एव । मे । सोमम् । श्रीणन्न् । इति । तस्मात् । मैत्रावरुणमितिमैत्रा-वरुणम् । पयसा । श्रीणन्ति । तस्मात् ।

पशवः । अपेति । अक्रामन्न् । मित्रः । सन् । क्रूरम् । अकः । इति । क्रूरम् । इव । खलु । वै । एषः । [३४] करोति । यः । सोमेन । यजते । तस्मात् । पशवः । अपेति । क्रामन्ति । यत् । मैत्रावरुणमितिमैत्रा-वरुणम् । पयसा । श्रीणाति । पशुभिरितिप शु-भिः । एव । तत् । मित्रम् । समर्धयतीतिसं-अर्धयति । पशुभिरितिपशु - भिः । यजमानम् । पुरा । खलु । वाव । एवम् । मित्रः । अवेत् । अपेति । मत् । क्रूरम् । चक्रुषः । पशवः । क्रमिष्यन्ति । इति । तस्मात् । एवम् । अवृणीत । वरुणम् । देवाः । अब्रुवन्न् । त्वया । अंशभुवेत्यंश-भुवा । सोमम् । राजानम् । हनाम । इति । सः । अब्रवीत् । वरम् । वृणै । मह्यम् । च । [३५] एव । एषः । मित्राय । च । सह । गृह्यातै । इति । तस्मात् । मैत्रावरुणइतिमैत्रा - वरुणः । सह । गृह्यते । तस्मात् । राज्ञा । राजानम् । अंशभुवेत्यंश-भुवा । घ्नन्ति । वैश्येन । वैश्यम् । शूद्रेण । शूद्रम् । न । वै । इदम् । दिवा । न । नक्तम् । आसीत् । अव्यावृत्तमित्यवि-आवृत्तम् । ते । देवाः । मित्रावरुणावितिमित्रा-वरुणौ । अब्रुवन्न् । इदम् । नः । वीति । वासयतम् । इति । तौ । अब्रूताम् । वरम् । वृणावहै । एकः । एव । आवत् । पूर्वः । ग्रहः । गृह्यातै । इति । तस्मात् । ऐन्द्रवायवइत्यैन्द्र-वायवः । पूर्वः । मैत्रावरुणादितिमैत्रा-वरुणात् । गृह्यते । प्राणापानावितिप्राण-अपानौ । हि । एतौ । यत् । उपांश्वन्तर्यामावित्युपांशु - अन्तर्यामौ । मित्रः । अहः । अजनयत् । वरुणः । रात्रिम् । ततः । वै । इदम् । वीति । औच्छत् । यत् । मैत्रावरुणइतिमैत्रा-वरुणः । गृह्यते । व्युष्ट्याइतिवि-उष्ट्यै । [३६] एषचैन्द्रवायवोद्वाविंशतिश्च ॥ ॥ ८ ॥

यज्ञस्य । शिरः । अच्छिद्यत । ते । देवाः । अश्विनौ । अब्रुवन्न् । भिषजौ । वै । स्थः । इदम् । यज्ञस्य । शिरः । प्रतीति । धत्तम् । इति । तौ । अब्रूताम् । वरम् । वृणावहै । ग्रहः । एव । नौ । अत्र । अपीति । गृह्यताम् । इति । ताभ्याम् । एतम् । आश्विनम् । अगृह्णन्न् । ततः । वै । तौ । यज्ञस्य । शिरः । प्रतीति । अधत्ताम् । यत् । आश्विनः । गृह्यते । यज्ञस्य । निष्कृत्याइतिनिः-कृत्यै । तौ । देवाः । अब्रुवन्न् । अपूतौ । वै । इमौ । मनुष्यचरावितिमनुष्य-चरौ । [३७] भिषजौ । इति । तस्मात् । ब्राह्मणेन । भेषजम् । न । कार्यम् । अपूतः । हि । एषः । अमेध्यः । यः । भिषक् । तौ । बहिष्पवमानेनेतिबहिः-पवमानेन । पवयित्वा । ताभ्याम् । एतम् । आश्विनम् ।

अगृह्णन्न् । तस्मात् । बहिष्पवमानइतिबहिः-पवमाने । स्तुते । आश्विनः । गृह्यते । तस्मात् । एवम् । विदुषा । बहिष्पवमानइतिबहिः-पवमानः । उपसद्यइत्युप-सद्यः । पवित्रम् । वै । बहिष्पवमानइतिबहिः-पवमानः । आत्मानम् । एव । पवयते । तयोः । त्रेधा । भैषज्यम् । वि । नीति । अदधुः । अग्नौ । तृतीयम् । अप्स्वित्यप्-सु । तृतीयम् । ब्राह्मणे । तृतीयम् । तस्मात् । उदपात्रमित्युद-पात्रम् । [३८] उपनिधायेत्युप-निधाय । ब्राह्मणम् । दक्षिणतः । निषाद्येतिनि-साद्य । भेषजम् । कुर्यात् । यावत् । एव । भेषजम् । तेन । करोति । समर्धुकमितिसं-अर्धुकम् । अस्य । कृतम् । भवति । ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । कस्मात् । सत्यात् । एकपात्राइत्येक-पात्राः । द्विदेवत्याइतिद्वि-देवत्याः । गृह्यन्ते । द्विपात्राइतिद्वि-पात्राः । हूयन्ते । इति । यत् । एकपात्राइत्येक-पात्राः । गृह्यन्ते । तस्मात् । एकः । अन्तरतः । प्राणइतिप्र-अनः । द्विपात्राइतिद्वि-पात्राः । हूयन्ते । तस्मात् । द्वौद्वावितिद्वौ-द्वौ । बहिष्टात् । प्राणाइतिप्र-अनाः । प्राणाइतिप्र-अनाः । वै । एते । यत् । द्विदेवत्याइतिद्वि-देवत्याः । पशवः । इडा । यत् । इडाम् । पूर्वाम् । द्विदेवत्येभ्यइतिद्वि-देवत्येभ्यः । उपह्वयेतेत्युप-ह्वयेत । [३९] पशुभिरितिपशु-भिः । प्राणानितिप्र-अनान् । अन्तः । दधीत । प्रमायुकइतिप्र-मायुकः । स्यात् । द्विदेवत्यानितिद्वि-देवत्यान् । भक्षयित्वा । इडाम् । उपेति । ह्वयते । प्राणानितिप्र-अनान् । एव । आत्मन्न् । धित्वा । पशून् । उपेति । ह्वयते । वाक् । वै । ऐन्द्रवायवइत्यैन्द्र-वायवः । चक्षुः । मैत्रावरुणइतिमैत्रा-वरुणः । श्रोत्रम् । आश्विनः । पुरस्तात् । ऐन्द्रवायवमित्यैन्द्र-वायवम् । भक्षयति । तस्मात् । पुरस्तात् । वाचा । वदति । पुरस्तात् । मैत्रावरुणमितिमैत्रा-वरुणम् । तस्मात् । पुरस्तात् । चक्षुषा । पश्यति । सर्वतः । परिहारमितिपरि-हारम् । आश्विनम् । तस्मात् । सर्वतः । श्रोत्रेण । शृणोति । प्राणाइतिप्र-अनाः । वै । एते । यत् । द्विदेवत्याइतिद्वि-देवत्याः । [४०] अरिक्तानि । पात्राणि । सादयन्ति । तस्मात् । अरिक्ताः । अन्तरतः । प्राणाइतिप्र-अनाः । यतः । खलु । वै । यज्ञस्य । विततस्येतिवि-ततस्य । न । क्रियते । तत् । अन्विति । यज्ञम् । रक्षाँसि । अवेति । चरन्ति । यत् । अरिक्तानि । पात्राणि । सादयति । क्रियमाणम् । एव । तत् । यज्ञस्य । शये । रक्षसाम् । अनन्ववचारयेत्यनन्‌-अवचारय । दक्षिणस्य । हविर्धानस्येतिहविः-धानस्य । उत्तरस्या

मित्युत्-तरस्याम् । वर्तन्याम् । सादयति । वाचि । एव । वाचम् । दधाति । एति । तृतीयसवनादितितृतीय-सवनात् । परीति । शेरे । यज्ञस्य । सन्तत्याइतिसं-तत्यै ॥ [४१] मनुष्यचरावुदपात्रमुपह्वयेतद्विदेवत्याषट् चत्वारिंशच्च ॥ ❀ ॥९॥

बृहस्पतिः । देवानाम् । पुरोहितइतिपुरः-हितः । आसीत् । शण्डामर्काविति शण्डा-मर्कौ । असुराणाम् । ब्रह्मण्वन्तइतिब्रह्मण्-वन्तः । देवाः । आसन् । ब्रह्मण्वन्त इतिब्रह्मण्-वन्तः । असुराः । ते । अन्यः । अन्यम् । न । अशक्नुवन् । अभिभवितु मित्यभि-भवितुम् । ते । देवाः । शण्डामर्काविति शण्डा-मर्कौ । उपेति । अमन्त्रयन्त । तौ । अब्रूताम् । वरम् । वृणावहै । ग्रहौ । एव । नौ । अत्र । अपीति । गृह्येताम् । इति । ताभ्याम् । एतौ । शुक्रामन्थिनाविति शुक्रा - मन्थिनौ । अगृह्णन् । ततः । देवाः । अभवन् । परेति । असुराः । यस्य । एवम् । विदुषः । शुक्रामन्थिनाविति शु क्रा-मन्थिनौ । गृह्येतेइति । भवति । आत्मना । परेति । [४२] अस्य । भ्रातृव्यः । भवति । तौ । देवाः । अपनुद्येत्यप-नुद्य । आत्मने । इन्द्राय । अजुहवुः । अपनुत्ता वित्यप-नुत्तौ । शण्डामर्काविति शण्डा-मर्कौ । सह । अमुना । इति । ब्रूयात् । यम् । द्विष्यात् । यम् । एव । द्वेष्टि । तेन । एनौ । सह । अपेति । नुदते । सः । प्रथमः । सङ्कृ तिरितिसं-कृतिः । विश्वकर्मेतिविश्व-कर्मा । इति । एव । एनौ । आत्मने । इन्द्राय । अजुहवुः । इन्द्रः । हि । एतानि । रूपाणि । करिक्रत् । अचरत् । असौ । वै । आदि त्यः । शुक्रः । चन्द्रमाः । मन्थी । अपिगृह्येत्यपि-गृह्य । प्राञ्चौ । निरिति । [४३] क्राम तः । तस्मात् । प्राञ्चौ । यन्तौ । न । पश्यन्ति । प्रत्यञ्चौ । आवृत्येत्या-वृत्य । जुहुतः । तस्मात् । प्रत्यञ्चौ । यन्तौ । पश्यन्ति । चक्षुषीइति । वै । एतेइति । यज्ञस्य । यत् । शुक्रामन्थिनाविति शुक्रा-मन्थिनौ । नासिका । उत्तरवेदिरित्युत्तर-वेदिः । अभितः । परिक्रम्येतिपरि-क्रम्य । जुहुतः । तस्मात् । अभितः । नासिकाम् । चक्षुषीइति । त स्मात् । नासिकया । चक्षुषीइति । विधृतेइतिवि-धृते । सर्वतः । परीति । क्रामतः । रक्षसाम् । अपहत्याइत्यप-हत्यै । देवाः । वै । याः । प्राचीः । आहुतीरित्या-हुतीः । अजुहवुः । ये । पुरस्तात् । असुराः । आसन् । तान् । ताभिः । प्रेति । [४४] अ नुदन्त । याः । प्रतीचीः । ये । पश्चात् । असुराः । आसन् । तान् । ताभिः । अपे

ति । अनुदन्त । प्राचीः । अन्याः । आहुतयइत्या-हुतयः । हूयन्ते । प्रत्यञ्चौ । शुक्रा मन्थिनाविति॑शुक्रा-मन्थिनौ । पश्चात् । च । एव । पुरस्तात् । च । यजमानः । भ्रातृव्यान् । प्रेति । नुदते । तस्मात् । पराचीः । प्रजाइतिप्र-जाः । प्रेति । वीयन्ते । प्रतीचीः । जायन्ते । शुक्रामन्थिनाविति॑शुक्रा-मन्थिनौ । वै । अन्विति । प्रजाइति प्र-जाः । प्रेति । जायन्ते । अत्रीः । च । आद्याः । च । सुवीराइतिसु-वीराः । प्रजा इतिप्र-जाः । प्रजनयन्नितिप्र-जनयन् । परीति । इहि । शुक्रः । शुक्रशोचिषेतिशुक्र-शोचिषा । [४५] सुप्रजाइतिसु-प्रजाः । प्रजाइतिप्र-जाः । प्रजनयन्नितिप्र-जनयन् । परीति । इहि । मन्थी । मन्थिशोचिषेतिमन्थि - शोचिषा । इति । आह । एताः । वै । सुवीराइतिसु-वीराः । याः । अत्रीः । एताः । सुप्रजाइतिसु-प्रजाः । याः । आ द्याः । यः । एवम् । वेद । अत्री । अस्य । प्रजेतिप्र-जा । जायते । न । आद्या । प्रजापतेरितिप्रजा-पतेः । अक्षि । अश्वयत् । तत् । परेति । अपतत् । तत् । विकङ्कत मितिवि-कङ्कतम् । प्रेति । अविशत् । तत् । विकङ्कतइतिवि-कङ्कते । न । अरमत । तत् । यवम् । प्रेति । अविशत् । तत् । यवे । अरमत । तत् । यवस्य । [४६] यवत्व मितियव-त्वम् । यत् । वैकङ्कतम् । मन्थिपात्रमितिमन्थि-पात्रम् । भवति । सक्तुभि रितिसक्तु-भिः । श्रीणाति । प्रजापतेरितिप्रजा-पतेः । एव । तत् । चक्षुः । समिति । भरति । ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । कस्मात् । सत्यात् । मन्थिपात्रमिति मन्थि-पात्रम् । सदः । न । अश्नुते । इति । आर्तपात्रमित्यार्त-पात्रम् । हि । इति । ब्रूयात् । यत् । अश्नुवीत । अन्धः । अध्वर्युः । स्यात् । आर्तिम् । एति । ऋच्छेत् । तस्मात् । न । अश्नुते ॥ [४७] आत्मनापरा निष्प्रशुक्रशोचिषायवस्यसप्तत्रिंश च्च ॥ ❀ ❀ ❀ ❀ ॥ १० ॥

देवाः । वै । यत । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । आग्रयणाग्रानित्याग्रयण-अग्रान् । ग्रहान् । अपश्यन् । तान् । अगृह्णत । ततः । वै । ते । अग्रम् । परीति । आयन् । यस्य । एवम् । विदुषः । आग्रयणाग्राइत्याग्रयण-अग्राः । ग्रहाः । गृह्यन्ते । अग्रम् । एव । समानानाम् । परीति । एति । रुग्णवत्ये तिरुग्ण-वत्या । ऋचा । भ्रातृव्यवतइतिभ्रातृव्य-वतः । गृह्णीयात् । भ्रातृव्यस्य । एव । रुक्त्वा । अग्रम् । समानानाम् । परीति । एति । ये । देवाः । दिवि । एकादश । स्थ ।

इति । आह । [४८] एतावतीः । वै । देवताः । ताभ्यः । एव । एनम् । सर्वाभ्यः । गृह्णा ति । एषः । ते । योनिः । विश्वेभ्यः । त्वा । देवेभ्यः । इति । आह । वैश्वदेवइतिवैश्व-देवः । हि । एषः । देवतया । वाक् । वै । देवेभ्यः । अपेति । अक्रामत् । यज्ञाय । अतिष्ठमा ना । ते । देवाः । वाचि । अपक्रान्तायामित्यप-क्रान्तायाम् । तूष्णीम् । ग्रहान् । अगृह्णत । सा । अमन्यत । वाक् । अन्तः । यन्ति । वै । मा । इति । सा । आग्रयणम् । प्रति । एति । अगच्छत् । तत् । आग्रयणस्य । आग्रयणत्वमित्याग्रयण-त्वम् । [४९] तस्मात् । आग्रयणे । वाक् । वीति । सृज्यते । यत् । तूष्णीम् । पूर्वे । ग्रहाः । गृह्यन्ते । यथा । त्सारी । इयति । मे । आखः । इयति । न । अपेति । राथ्स्यामि । इति । उपावसृ जतीत्युप-अवसृजति । एवम् । एव । तत् । अध्वर्युः । आग्रयणम् । गृहीत्वा । यज्ञम् । आरभ्येत्या-रभ्य । वाचम् । वीति । सृजते । त्रिः । हिम् । करोति । उद्गातॄनित्युत्- गातॄन् । एव । तत् । वृणीते । प्रजापतिरितिप्रजा-पतिः । वै । एषः । यत् । आग्र यणः । यत् । आग्रयणम् । गृहीत्वा । हिङ्करोतीतिहिं-करोति । प्रजापतिरितिप्रजा- पतिः । एव । [५०] तत् । प्रजाइतिप्र-जाः । अभीति । जिघ्रति । तस्मात् । वथ्सम् । जातम् । गौः । अभीति । जिघ्रति । आत्मा । वै । एषः । यज्ञस्य । यत् । आग्रय णः । सवनेसवनइतिसवने-सवने । अभीति । गृह्णाति । आत्मन् । एव । यज्ञम् । समिति । तनोति । उपरिष्टात् । एति । नयति । रेतः । एव । तत् । दधाति । अ धस्तात् । उपेति । गृह्णाति । प्रेति । जनयति । एव । तत् । ब्रह्मवादिनइतिब्रह्म-वा दिनः । वदन्ति । कस्मात् । सत्यात् । गायत्री । कनिष्ठा । छन्दसाम् । सती । सर्वा णि । सवनानि । वहति । इति । एषः । वै । गायत्रियै । वथ्सः । यत् । आग्रयणः । तम् । एव । तत् । अभिनिवर्तमित्यभि-निवर्तम् । सर्वाणि । सवनानि । वहति । तस्मात् । वथ्सम् । अपाकृतमित्यप-आकृतम् । गौः । अभि । नीति । वर्तते ॥ [५१] आहाग्रयणत्वम्प्रजापतिरेवेतिविꣳशतिश्च ॥ ❀ ❀ ॥ ११ ॥

यज्ञेनताउंपयद्धिर्देवावैयज्ञमाग्नींध्रेब्रह्मवादिनस्सत्वंदेवस्यग्रावाणम्प्राणोवाउंपाꣳ श्वग्रादेवावाउंपाꣳशौवाग्वैमित्रꣳयंयज्ञस्यबृहस्पतिर्देवावाआग्रयणाग्रानेकादश ॥ ११ ॥ यज्ञेन लोके पंशुमान्थ्स्याथ्सवनम्माध्यन्दिनꣳवाग्वाअरिक्तानि तत्प्रजा एकपञ्चा

शत् ॥ [५१] यज्ञेननिर्वर्तते ॥ ❀ ❀ ❀ ॥

हरिः ओ (३) म् ॥

इति षष्ठकाण्डे चतुर्थः प्रश्नः ॥

## षष्ठकाण्डे पञ्चमः प्रश्नः ॥

हरिः ओ (४) म् ॥

इन्द्रः । वृत्राय । वज्रम् । उदिति । अयच्छत् । सः । वृत्रः । वज्रात् । उद्यता दित्युत्-यतात् । अबिभेत् । सः । अब्रवीत् । मा । मे । प्रेति । हाः । अस्ति । वै । इदम् । मयि । वीर्यम् । तत् । ते । प्रेति । दास्यामि । इति । तस्मै । उक्थ्यम् । प्रेति । अयच्छत् । तस्मै । द्वितीयम् । उदिति । अयच्छत् । सः । अब्रवीत् । मा । मे । प्रेति । हाः । अस्ति । वै । इदम् । मयि । वीर्यम् । तत् । ते । प्रेति । दास्यामि । इति । [१] तस्मै । उक्थ्यम् । एव । प्रेति । अयच्छत् । तस्मै । तृतीयम् । उदिति । अयच्छत् । तम् । विष्णुः । अन्विति । अतिष्ठत । जहि । इति । सः । अब्रवीत् । मा । मे । प्रेति । हाः । अस्ति । वै । इदम् । मयि । वीर्यम् । तत् । ते । प्रेति । दास्यामि । इति । तस्मै । उक्थ्यम् । एव । प्रेति । अयच्छत् । तम् । निर्मायमितिनिः-मायम् । भूतम् । अहन् । यज्ञः । हि । तस्य । माया । आसीत् । यत् । उक्थ्यः । गृह्यते । इन्द्रियम् । एव । [२] तत् । वीर्यम् । यजमानः । भ्रातृव्यस्य । वृङ्क्ते । इन्द्राय । त्वा । बृहद्वतइतिबृहत्-वते । वयस्वते । इति । आह । इन्द्राय । हि । सः । तम् । प्रेति । अयच्छत् । तस्मै । त्वा । विष्णवे । त्वा । इति । आह । यत् । एव । विष्णुः । अन्वतिष्ठतेत्यनु-अतिष्ठत । जहि । इति । तस्मात् । विष्णुम् । अन्वाभजतीत्यनु-आभजति । त्रिः । निरिति । गृह्णाति । त्रिः । हि । सः । तम् । तस्मै । प्रेति । अयच्छत् । एषः । ते । योनिः । पुनर्हविरितिपुनः-हविः । असि । इति । आह । पुनःपुनरितिपुनः-पुनः । [३] हि । अस्मात् । निर्गृह्णातीतिनिः-गृह्णाति । चक्षुः । वै । एतत् । यज्ञस्य । यत् । उक्थ्यः । तस्मात् । उक्थ्यम् । हुतम् । सोमाः । अन्वायन्तीत्यनु-आयन्ति । तस्मात् । आत्मा । चक्षुः । अन्विति । एति । तस्मात् । ए

कम् । यन्तम् । बहवः । अन्विति । यन्ति । तस्मात् । एकः । बहूनाम् । भद्रः । भव
ति । तस्मात् । एकः । बह्वीः । जायाः । विन्दते । यदि । कामयेत । अध्वर्युः ।
आत्मानम् । यज्ञयशसेनेतियज्ञ-यशसेन । अर्पयेयम् । इति । अन्तरा । आहवनीय
मित्याहवनीयम् । च । हविर्धानमितिहविः-धानम् । च । तिष्ठन् । अवेति । नयेत् ।
[४] आत्मानम् । एव । यज्ञयशसेनेतियज्ञ-यशसेन । अर्पयति । यदि । कामयेत ।
यजमानम् । यज्ञयशसेनेतियज्ञ-यशसेन । अर्पयेयम् । इति । अन्तरा । सदोहविर्धा
नेइतिसदः-हविर्धाने । तिष्ठन् । अवेति । नयेत् । यजमानम् । एव । यज्ञयशसेनेति
यज्ञ-यशसेन । अर्पयति । यदि । कामयेत । सदस्यान् । यज्ञयशसेनेतियज्ञ-यशसेन ।
अर्पयेयम् । इति । सदः । आलभ्येत्या-लभ्य । अवेति । नयेत् । सदस्यान् । एव ।
यज्ञयशसेनेतियज्ञ-यशसेन । अर्पयति ॥ [५] इतीन्द्रियमेवपुनःपुनर्नयेत्त्रयंस्त्रिंऽ
शच्च ॥ ❀ ❀ ❀ ❀ ॥१॥

आयुः । वै । एतत् । यज्ञस्य । यत् । ध्रुवः । उत्तमइत्युत्-तमः । ग्रहाणाम् ।
गृह्यते । तस्मात् । आयुः । प्राणानामितिप्र-अनानाम् । उत्तममित्युत्-तमम् । मूर्धा
नम् । दिवः । अरतिम् । पृथिव्याः । इति । आह । मूर्धानम् । एव । एनम् । समाना
नाम् । करोति । वैश्वानरम् । ऋताय । जातम् । अग्निम् । इति । आह । वैश्वानरम् ।
हि । देवतया । आयुः । उभयतोवैश्वानरइत्युभयतः-वैश्वानरः । गृह्यते । तस्मात् ।
उभयतः । प्राणाइतिप्र-अनाः । अधस्तात् । च । उपरिष्टात् । च । अर्धिनः । अन्ये ।
ग्रहाः । गृह्यन्ते । अर्धी । ध्रुवः । तस्मात् [६] अर्धी । अवाङ् । प्राणइतिप्र-अनः ।
अन्येषाम् । प्राणानामितिप्र-अनानाम् । उपोप्तइत्युप-उप्ते । अन्ये । ग्रहाः । साद्य
न्ते । अनुपोप्तइत्यनुप-उप्ते । ध्रुवः । तस्मात् । अस्थ्ना । अन्याः । प्रजाइतिप्र-जाः ।
प्रतितिष्ठन्तीतिप्रति-तिष्ठन्ति । मांऽसेन । अन्याः । असुराः । वै । उत्तरतइत्युत्-त
रतः । पृथिवीम् । पर्याचिकीर्षन्नितिपरि-आचिकीर्षन् । ताम् । देवाः । ध्रुवेण ।
अदृंऽहन् । तत् । ध्रुवस्य । ध्रुवत्वमितिध्रुव-त्वम् । यत् । ध्रुवः । उत्तरतइत्युत्-तरतः ।
साद्यते । धृत्यै । आयुः । वै । एतत् । यज्ञस्य । यत् । ध्रुवः । आत्मा । होता । यत् । होतृ
चमसइतिहोतृ-चमसे । ध्रुवम् । अवनयतीत्यव-नयति । आत्मन् । एव । यज्ञस्य ।
[७] आयुः । दधाति । पुरस्तात् । उक्थस्य । अवनीयइत्यव-नीयः । इति । आहुः ।

पुरस्तात् । हि । आयुषः । भुङ्क्ते । मध्यतः । अवनीयइत्यव-नीयः । इति । आहुः । मध्यमेन । हि । आयुषः । भुङ्क्ते । उत्तरार्धइत्युत्तर-अर्धे । अवनीयइत्यव-नीयः । इति । आहुः । उत्तमेनेत्युत्-तमेन । हि । आयुषः । भुङ्क्ते । वैश्वदेव्यामितिवैश्व-देव्याम् । ऋचि । शस्यमानायाम् । अवेति । नयति । वैश्वदेव्यइतिवैश्व-देव्यः । वै । प्रजाइतिप्र-जाः । प्रजास्वितिप्र-जासु । एव । आयुः । दधाति ॥ [८] ध्रुवस्तस्मा देवयज्ञस्यैकान्नचत्वारिꣳशच्च ॥ ❀ ❀ ❀ ॥२॥

यज्ञेन । वै । देवाः । सुवर्गमितिसुवः-गम् । लोकम् । आयन्न् । ते । अमन्यन्त । मनुष्याः । नः । अन्वाभविष्यन्तीत्यनु-आभविष्यन्ति । इति । ते । सꣳवथ्सरेणेतिसं-वथ्सरेण । योपयित्वा । सुवर्गमितिसुवः-गम् । लोकम् । आयन्न् । तम् । ऋषयः । ऋतुग्रहैरित्यृतु-ग्रहैः । एव । अनु । प्रेति । अजानन्न् । यत् । ऋतुग्रहाइत्यृतु-ग्रहाः । गृह्यन्ते । सुवर्गस्येतिसुवः-गस्य । लोकस्य । प्रज्ञात्याइतिप्र ज्ञात्यै । द्वादश । गृह्यन्ते । द्वादश । मासाः । सꣳवथ्सरइतिसं-वथ्सरः । सꣳवथ्सरस्येतिसं-वथ्सरस्य । प्रज्ञात्याइतिप्र-ज्ञात्यै । सह । प्रथमौ । गृह्येतेइति । सह । उत्तमावित्युत्-तमौ । तस्मात् । द्वौद्वावितिद्वौ-द्वौ । ऋतूइति । उभयतोमुखमित्युभयतः-मुखम् । ऋतुपात्रमित्यृतु-पात्रम् । भवति । कः । [९] हि । तत् । वेद । यतः । ऋतूनाम् । मुखम् । ऋतुना । प्रेति । इष्य । इति । षट् । कृत्वः । आह । षट् । वै । ऋतवः । ऋतून् । एव । प्रीणाति । ऋतुभिरित्यृतु-भिः । इति । चतुः । चतुष्पदइतिचतुः-पदः । एव । पशून् । प्रीणाति । द्विः । पुनः । ऋतुना । आह । द्विपदइतिद्वि-पदः । एव । प्रीणाति । ऋतुना । प्रेति । इष्य । इति । षट् । कृत्वः । आह । ऋतुभिरित्यृतु-भिः । इति । चतुः । तस्मात् । चतुष्पादइतिचतुः-पादः । पशवः । ऋतून् । उपेति । जीवन्ति । द्विः । [१०] पुनः । ऋतुना । आह । तस्मात् । द्विपादइतिद्वि-पादः । चतुष्पदइति चतुः-पदः । पशून् । उपेति । जीवन्ति । ऋतुना । प्रेति । इष्य । इति । षट् । कृत्वः । आह । ऋतुभिरित्यृतु-भिः । इति । चतुः । द्विः । पुनः । ऋतुना । आह । आक्रमणमित्या-क्रमणम् । एव । तत् । सेतुम् । यजमानः । कुरुते । सुवर्गस्येतिसुवः-गस्य । लोकस्य । समष्ट्याइतिसं-अष्ट्यै । न । अन्यः । अन्यम् । अनु । प्रेति । पद्येत । यत् । अन्यः । अन्यम् । अनुप्रपद्येतेत्यनु-प्रपद्येत । ऋतुः । ऋतुम् । अनु ।

प्रेति । पद्येन । ऋतवंः । मोहुंकाः । स्युः । [११] प्रसिद्धमितिप्र-सिद्धम् । एव । अ ध्वर्युः । दक्षिणेन । प्रेति । पद्यते । प्रसिद्धमितिप्र-सिद्धम् । प्रतिप्रस्थातेतिंप्रति-प्र स्थाता । उत्तरेणेत्युत्-तरेण । तस्मात् । आदित्यः । षट् । मासः । दक्षिणेन । एति । षट् । उत्तरेणेत्युत्-तरेण । उपयामगृहीतइत्युपयाम-गृहीतः । असि । सँसर्पइति सं-सर्पः । असि । अँहस्पत्यायेत्यंँहः-पत्याय । त्वा । इति । आह । अस्ति । त्रयोदशइतित्रयः दशः । मासः । इति । आहुः । तम् । एव । तत् । प्रीणाति ॥ [१२] कोजीवन्तिद्विस्स्युश्चत्वारिँशच्च ॥ ❀ ❀ ❀ ॥ ३ ॥

सुवर्गायेतिसुवः-गाय । वै । एते । लोकाय । गृह्यन्ते । यत् । ऋतुग्रहाइत्यृतु-ग्रहाः । ज्योतिः । इन्द्राग्नीइतीन्द्र-अग्नी । यत् । ऐन्द्राग्नमित्यैन्द्र-अग्नम् । ऋतुपात्रेणेत्यृतु-पात्रेण । गृह्णाति । ज्योतिः । एव । अस्मै । उपरिष्टात् । दधाति । सुवर्गस्येतिसुवः-गस्य । लोकस्य । अनुख्यात्याइत्यनु-ख्यात्यै । ओजोभृतावित्योजः-भृतौ । वै । एतौ । देवानाम् । यत् । इन्द्राग्नीइतीन्द्र-अग्नी । यत् । ऐन्द्राग्नइत्यैन्द्र-अग्नः । गृह्यते । ओजः । एव । अवेति । रुन्धे । वैश्वदेवमितिवैश्व-देवम् । शुक्रपात्रेणेतिशुक्र-पात्रेण । गृह्णाति । वैश्वदेव्यंइतिवैश्व-देव्यः । वै । प्रजाइतिप्र-जाः । असौ । आदित्यः । शुक्रः । यत् । वैश्वदेवमितिवैश्व-देवम् । शुक्रपात्रेणेतिशुक्र-पात्रेण । गृह्णाति । तस्मात् । असौ । आदित्यः । [१३] सर्वाः । प्रजाइतिप्र-जाः । प्रत्यङ् । उदिति । एति । तस्मात् । सर्वः । एव । मन्यते । माम् । प्रति । उदित । अगात् । इति । वैश्वदेवमितिवैश्व-देवम् । शुक्रपात्रेणेतिशुक्र-पात्रेण । गृह्णाति । वैश्वदेव्यंइतिवैश्व-देव्यः । वै । प्रजाइतिप्र-जाः । तेजः । शुक्रः । यत् । वैश्वदेवमितिवैश्व-देवम् । शुक्रपात्रेणेतिशुक्र-पात्रेण । गृह्णाति । प्रजास्वितिप्र-जासु । एव । तेजः । दधाति ॥ [१४] तस्मादसावादित्यास्त्रिँशच्च ॥ ❀ ❀ ❀ ॥ ४ ॥

इन्द्रः । मरुद्भिरितिमरुत्-भिः । साँविद्येनेतिसां-विद्येन । माध्यन्दिने । सवने । वृत्रम् । अहन् । यत् । माध्यन्दिने । सवने । मरुत्वतीयाः । गृह्यन्ते । वार्त्रघ्ना इतिवार्त्र-घ्नाः । एव । ते । यजमानस्य । गृह्यन्ते । तस्य । वृत्रम् । जघ्नुषः । ऋतवः । अमुह्यन् । सः । ऋतुपात्रेणेत्यृतु-पात्रेण । मरुत्वतीयान् । अगृह्णात् । ततः । वै ।

सः । ऋतून् । प्रेति । अजानात् । यत् । ऋतुपात्रेणेत्यृतु-पात्रेण । मरुत्वतीयाः । गृह्यन्ते । ऋतूनाम् । प्रज्ञात्याइतिप्र-ज्ञात्यै । वज्रम् । वै । एतम् । यजमानः । भ्रातृव्याय । प्रेति । हरति । यत् । मरुत्वतीयाः । उदिति । एव । प्रथमेन । [१५] यच्छति । प्रेति । हरति । द्वितीयेन । स्तृणुते । तृतीयेन । आयुधम् । वै । एतत् । यजमानः । समिति । कुरुते । यत् । मरुत्वतीयाः । धनुः । एव । प्रथमः । ज्या । द्वितीयः । इषुः । तृतीयः । प्रतीति । एव । प्रथमेन । धत्ते । वीति । सृजति । द्वितीयेन । विध्यति । तृतीयेन । इन्द्रः । वृत्रम् । हत्वा । पराम् । परावतमितिपरा-वतम् । अगच्छत् । अपेति । अराधम् । इति । मन्यमानः । सः । हरितः । अभवत् । सः । एतान् । मरुत्वतीयान् । आत्मस्परणानित्यात्म-स्परणान् । अपश्यत् । तान् । अगृह्णीत । [१६] प्राणमितिप्र-अनम् । एव । प्रथमेन । अस्पृणुत । अपानमित्यप-अनम् । द्वितीयेन । आत्मानम् । तृतीयेन । आत्मस्परणाइत्यात्म-स्परणाः । वै । एते । यजमानस्य । गृह्यन्ते । यत् । मरुत्वतीयाः । प्राणमितिप्र-अनम् । एव । प्रथमेन । स्पृणुते । अपानमित्यप-अनम् । द्वितीयेन । आत्मानम् । तृतीयेन । इन्द्रः । वृत्रम् । अहन्न् । तम् । देवाः । अब्रुवन्न् । महान् । वै । अयम् । अभूत् । यः । वृत्रम् । अवधीत् । इति । तत् । महेन्द्रस्येतिमहा-इन्द्रस्य । महेन्द्रत्वमितिमहेन्द्र-त्वम् । सः । एतम् । माहेन्द्रमितिमाहा-इन्द्रम् । उद्धारमित्युत्-हारम् । उदिति । अहरत । वृत्रम् । हत्वा । अन्यासु । देवतासु । अधीति । यत् । माहेन्द्रइतिमाहा-इन्द्रः । गृह्यते । उद्धारमित्युत्-हारम् । एव । तम् । यजमानः । उदिति । हरते । अन्यासु । प्रजास्विति प्र-जासु । अधीति । शुक्रपात्रेणेतिशुक्र-पात्रेण । गृह्णाति । यजमानदेवत्यइतियजमान-देवत्यः । वै । माहेन्द्रइतिमाहा-इन्द्रः । तेजः । शुक्रः । यत् । माहेन्द्रमितिमाहा-इन्द्रम् । शुक्रपात्रेणेतिशुक्र-पात्रेण । गृह्णाति । यजमाने । एव । तेजः । दधाति । [१७] प्रथमेनागृह्णीतदेवतास्त्वष्टाविँशतिश्च ॥ ❀ ❀ ॥५॥

अदितिः । पुत्रकामेति पुत्र-कामा । साध्येभ्यः । देवेभ्यः । ब्रह्मौदनमिति ब्रह्म-ओदनम् । अपचत् । तस्यै । उच्छेषणमित्युत्-शेषणम् । अददुः । तत् । प्रेति । आश्नात् । सा । रेतः । अधत्त । तस्यै । चत्वारः । आदित्याः । अजायन्त । सा । द्वितीयम् । अपचत् । सा । अमन्यत । उच्छेषणादित्युत्-शेषणात् । मे । इमे । अ

न्नत । यत् । अग्रे । प्राशिष्यामीतिप्र-अशिष्यामि । इतः । मे । वसीयाꣳसः । ज
निष्यन्ते । इति । सा । अग्रे । प्रेति । आश्नात् । सा । रेतः । अधत्त । तस्यै ।
व्यृद्धमितिवि-ऋद्धम् । आण्डम् । अजायत । सा । आदित्येभ्यः । एव । [१८] तृ
तीयम् । अपचत् । भोगाय । मे । इदम् । श्रान्तम् । अस्तु । इति । ते । अब्रुवन्न् ।
वरम् । वृणामहै । यः । अतः । जायातै । अस्माकम् । सः । एकः । असत् । यः ।
अस्य । प्रजायामितिप्र-जायाम् । ऋध्यातै । अस्माकम् । भोगाय । भवात् । इति ।
ततः । विवस्वान् । आदित्यः । अजायत । तस्य । वै । इयम् । प्रजेतिप्र-जा ।
यत् । मनुष्याः । तासु । एकः । एव । ऋद्धः । यः । यजते । सः । देवानाम् । भो
गाय । भवति । देवाः । वै । यज्ञात् । [१९] रुद्रम् । अन्तः । आयन्न् । सः । आ
दित्यान् । अन्वाक्रमतेत्यनु-आक्रमत । ते । द्विदेवत्यानितिद्वि-देवत्यान् । प्रेति ।
अपद्यन्त । तान् । न । प्रति । प्रेति । अयच्छन्न् । तस्मात् । अपीति । वध्यम् ।
प्रपन्नमितिप्र-पन्नम् । न । प्रति । प्रेति । यच्छन्ति । तस्मात् । द्विदेवत्येभ्यइतिद्वि-दे
वत्येभ्यः । आदित्यः । निरिति । गृह्यते । यत् । उच्छेषणादित्युत्-शेषणात् । अ
जायन्त । तस्मात् । उच्छेषणादित्युत्-शेषणात् । गृह्यते । तिसृभिरितितिसृ-भिः । ऋ
ग्भिरित्यृक्-भिः । गृह्णाति । माता । पिता । पुत्रः । तत् । एव । तत् । मिथुनम् ।
उल्बम् । गर्भः । जरायु । तत् । एव । तत् । [२०] मिथुनम् । पशवः । वै । एते ।
यत् । आदित्यः । ऊर्क् । दधि । दध्ना । मध्यतः । श्रीणाति । ऊर्जम् । एव । पशू
नाम् । मध्यतः । दधाति । शृतातङ्क्येनेतिशृत-आतङ्क्येन । मेध्यत्वायेतिमेध्य-त्वाय ।
तस्मात् । आमा । पक्वम् । दुहे । पशवः । वै । एते । यत् । आदित्यः । परिश्रि
त्येतिपरि-श्रित्य । गृह्णाति । प्रतिरुध्येतिप्रति-रुध्य । एव । अस्मै । पशून् । गृह्णा
ति । पशवः । वै । एते । यत् । आदित्यः । एषः । रुद्रः । यत् । अग्निः । परिश्रि
त्येतिपरि-श्रित्य । गृह्णाति । रुद्रात् । एव । पशून् । अन्तः । दधाति । [२१] एषः ।
वै । विवस्वान् । आदित्यः । यत् । उपाꣳशुसवनइत्युपाꣳशु-सवनः । सः । एतम् ।
एव । सोमपीथमितिसोम-पीथम् । परीति । शये । एति । तृतीयसवनादितितृती
य-सवनात् । विवस्वः । आदित्य । एषः । ते । सोमपीथइतिसोम-पीथः । इति ।

आह । विवस्वन्तम् । एव । आदित्यम् । सोमपीथेनेतिसोम-पीथेन । समिति । अर्धयति । या । दिव्या । वृष्टिः । तया । त्वा । श्रीणामि । इति । वृष्टिकामस्येतिवृष्टि-कामस्य । श्रीणीयात् । वृष्टिम् । एव । अवेति । रुन्धे । यदि । ताजक् । प्रस्कन्देदितिप्र-स्कन्देत् । वर्षुकः । पर्जन्यः । स्यात् । यदि । चिरम् । अवर्षुकः । न । सादयति । असन्नात् । हि । प्रजाइतिप्र-जाः । प्रजायन्तइतिप्र-जायन्ते । न । अन्विति । वषट् । करोति । यत् । अनुवषट्कुर्यादित्यनु-वषट्कुर्यात् । रुद्रम् । प्रजाइतिप्र-जाः । अन्ववसृजेदित्यनु-अवसृजेत् । न । हुत्वा । अन्विति । ईक्षेत । यत् । अन्वीक्षेतेत्यनु-ईक्षेत । चक्षुः । अस्य । प्रमायुकमितिप्र-मायुकम् । स्यात् । तस्मात् । न । अन्वीक्ष्यइत्यनु-ईक्ष्यः ॥ [२२] एवयज्ञाज्जरायुतदेवतदन्तदधातिनसप्तविꣳशतिश्च ॥ ❁ ❁ ❁ ❁ ॥६॥

अन्तर्यामपात्रेणेत्यन्तर्याम-पात्रेण । सावित्रम् । आग्रयणात् । गृह्णाति । प्रजापतिरितिप्रजा-पतिः । वै । एषः । यत् । आग्रयणः । प्रजानामितिप्र-जानाम् । प्रजननायेतिप्र-जननाय । न । सादयति । असन्नात् । हि । प्रजाइतिप्र-जाः । प्रजायन्तइतिप्र-जायन्ते । न । अन्विति । वषट् । करोति । यत् । अनुवषट्कुर्यादित्यनु-वषट्कुर्यात् । रुद्रम् । प्रजाइतिप्र-जाः । अन्ववसृजेदित्यनु-अवसृजेत् । एषः । वै । गायत्रः । देवानाम् । यत् । सविता । एषः । गायत्रियै । लोके । गृह्यते । यत् । आग्रयणः । यत् । अन्तर्यामपात्रेणेत्यन्तर्याम-पात्रेण । सावित्रम् । आग्रयणात् । गृह्णाति । स्वात् । एव । एनम् । योनेः । निरिति । गृह्णाति । विश्वे । [२३] देवाः । तृतीयम् । सवनम् । न । उदिति । अयच्छन्न् । ते । सवितारम् । प्रातस्सवनभागमितिप्रातस्सवन-भागम् । सन्तम् । तृतीयसवनमितितृतीय-सवनम् । अभि । परीति । अनयन्न् । ततः । वै । ते । तृतीयम् । सवनम् । उदिति । अयच्छन्न् । यत् । तृतीयसवनइतितृतीय-सवने । सावित्रः । गृह्यते । तृतीयस्य । सवनस्य । उद्यत्याइत्युत्-यत्यै । सवितृपात्रेणेतिसवितृ-पात्रेण । वैश्वदेवमितिवैश्व-देवम् । कलशात् । गृह्णाति । वैश्वदेव्यइतिवैश्व-देव्यः । वै । प्रजाइतिप्र-जाः । वैश्वदेवइतिवैश्व-देवः । कलशः । सविता । प्रसवानामितिप्र-सवानाम् । ईशे । यत् । सवितृपात्रेणेतिसवितृ-

पात्रेण । वैश्वदेवमितिवैश्व-देवम् । कलशात् । गृह्णाति । सवितृप्रसूत-इतिसवितृ-प्रसूतः । एव । अस्मै । प्रजाइतिप्र-जाः । प्रेति । [२४] जनयति । सोमे । सोमम् । अभीति । गृह्णाति । रेतः । एव । तत् । दधाति । सुशर्मेतिसु-शर्मा । असि । सुप्रतिष्ठानइतिसु-प्रतिष्ठानः । इति । आह । सोमे । हि । सोमम् । अभिगृह्णातीत्यभि-गृह्णाति । प्रतिष्ठित्याइतिप्रति-स्थित्यै । एतस्मिन्न् । वै । अपीति । ग्रहे । मनुष्येभ्यः । देवेभ्यः । पितृभ्यइतिपितृ-भ्यः । क्रियते । सुशर्मेतिसु-शर्मा । असि । सुप्रतिष्ठानइतिसु-प्रतिष्ठानः । इति । आह । मनुष्येभ्यः । एव । एतेन । करोति । बृहत् । इति । आह । देवेभ्यः । एव । एतेन । करोति । नमः । इति । आह । पितृभ्यइतिपितृ-भ्यः । एव । एतेन । करोति । एतावतीः । वै । देवताः । ताभ्यः । एव । एनम् । सर्वाभ्यः । गृह्णाति । एषः । ते । योनिः । विश्वेभ्यः । त्वा । देवेभ्यः । इति । आह । वैश्वदेवइतिवैश्व-देवः । हि । एषः ॥ [२५] विश्वेप्रपितृभ्यएवैतेनकरोत्येकान्नविꣳशतिश्च ॥ ❀ ❀ ❀ ❀ ॥७॥

प्राणइतिप्र-अनः । वै । एषः । यत् । उपाꣳशुरित्युप-अꣳशुः । यत् । उपाꣳशुपात्रेणेत्युपाꣳशु-पात्रेण । प्रथमः । च । उत्तमइत्युत्-तमः । च । ग्रहौ । गृह्येतेइति । प्राणमितिप्र-अनम् । एव । अन्विति । प्रयन्तीतिप्र-यन्ति । प्राणमितिप्र-अनम् । अनु । उदिति । यन्ति । प्रजापतिरितिप्रजा-पतिः । वै । एषः । यत् । आग्रयणः । प्राणइतिप्र-अनः । उपाꣳशुरित्युप-अꣳशुः । पत्नीः । प्रजाइतिप्र-जाः । प्रेति । जनयन्ति । यत् । उपाꣳशुपात्रेणेत्युपाꣳशु-पात्रेण । पात्नीवतमितिपात्नी-वतम् । आग्रयणात् । गृह्णाति । प्रजानामितिप्र-जानाम् । प्रजननायेतिप्र-जननाय । तस्मात् । प्राणमितिप्र-अनम् । प्रजाइतिप्र-जाः । अनु । प्रेति । जायन्ते । देवाः । वै । इतइतइतीतः-इतः । पत्नीः । सुवर्गमितिसुवः-गम् । [२६] लोकम् । अजिगाꣳसन्न् । ते । सुवर्गमितिसुवः-गम् । लोकम् । न । प्रेति । अजानन्न् । ते । एतम् । पात्नीवतमितिपात्नी-वतम् । अपश्यन्न् । तम् । अगृह्णत । ततः । वै । ते । सुवर्गमितिसुवः-गम् । लोकम् । प्रेति । अजानन्न् । यत् । पात्नीवतइतिपात्नी-वतः । गृह्यते । सुवर्गस्येतिसुवः-गस्य । लोकस्य । प्रज्ञात्याइतिप्र-ज्ञात्यै । सः । सोमः ।

न । अतिष्ठत । स्त्रीभ्यः । गृह्यमाणः । तम् । घृतम् । वज्रम् । कृत्वा । अघ्नन् । तम् । निरिन्द्रियमिति निः-इन्द्रियम् । भूतम् । अगृह्णन् । तस्मात् । स्त्रियः । निरिन्द्रिया इति निः-इन्द्रियाः । अदायादीरित्यदाय-अदीः । अपीति । पापात् । पुंसः । उपस्तितरमित्युपस्ति-तरम् । [२७] वदन्ति । यत् । घृतेन । पात्नीवतमिति पात्नी-वतम् । श्रीणाति । वज्रेण । एव । एनम् । वशे । कृत्वा । गृह्णाति । उपयामगृहीत इत्युपयाम-गृहीतः । असि । इति । आह । इयम् । वै । उपयाम इत्युप-यामः । तस्मात् । इमाम् । प्रजा इति प्र-जाः । अनु । प्रेति । जायन्ते । बृहस्पतिसुतस्येति बृहस्पति-सुतस्य । ते । इति । आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । अस्मै । प्रजा इति प्र-जाः । प्रेति । जनयति । इन्दो इति । इति । आह । रेतः । वै । इन्दुः । रेतः । एव । तत् । दधाति । इन्द्रियाव इतीन्द्रिय-वः । इति । [२८] आह । प्रजा इति प्र-जाः । वै । इन्द्रियम् । प्रजा इति प्र-जाः । एव । अस्मै । प्रेति । जनयति । अग्ना(३)इ । इति । आह । अग्निः । वै । रेतोधा इति रेतः-धाः । पत्नीव इति पत्नी-वः । इति । आह । मिथुनत्वायेति मिथुन-त्वाय । सजूरिति स-जूः । देवेन । त्वष्ट्रा । सोमम् । पिब । इति । आह । त्वष्टा । वै । पशूनाम् । मिथुनानाम् । रूपकृदिति रूप-कृत् । रूपम् । एव । पशुषु । दधाति । देवाः । वै । त्वष्टारम् । अजिघांसन् । सः । पत्नीः । प्रेति । अपद्यत । तम् । न । प्रति । प्रेति । अयच्छन् । तस्मात् । अपीति । [२९] वध्यम् । प्रपन्नमिति प्र-पन्नम् । न । प्रति । प्रेति । यच्छन्ति । तस्मात् । पात्नीवत इति पात्नी-वते । त्वष्ट्रे । अपीति । गृह्यते । न । सादयति । असन्नात् । हि । प्रजा इति प्र-जाः । प्रजायन्त इति प्र-जायन्ते । न । अन्विति । वषट् । करोति । यत् । अनुवषट्कुर्यादित्यनु-वषट्कुर्यात् । रुद्रम् । प्रजा इति प्र-जाः । अन्ववसृजेदित्यनु-अवसृजेत् । यत् । न । अनुवषट्कुर्यादित्यनु-वषट्कुर्यात् । अशान्तम् । अग्नीदित्यग्नि-इत् । सोमम् । भक्षयेत् । उपांश्वित्युप-अंशु । अन्विति । वषट् । करोति । न । रुद्रम् । प्रजा इति प्र-जाः । अन्ववसृजतीत्यनु-अवसृजति । शान्तम् । अग्नीदित्यग्नि-इत् । सोमम् । भक्षयति । अग्नीदित्यग्नि-इत् । नेष्टः । उपस्थमित्युप-स्थम् । एति । सीद । [३०] नेष्टः । पत्नीम् । उदानयेत्युत्-आनय । इति । आह । अग्नीदित्यग्नि-इत् । एव । नेष्टरि । रेतः । दधाति ।

नेष्टा । पत्नियाम् । उद्गात्रेत्युत्-गात्रा । समिति । ख्यापयति । प्रजापतिरितिप्रजा-पतिः । वै । एषः । यत् । उद्गातेत्युत्-गाता । प्रजानामितिप्र-जानाम् । प्रजननायेतिप्र-जननाय । अपः । उप । प्रेति । वर्तयति । रेतः । एव । तत् । सिञ्चति । ऊरुणा । उप । प्रेति । वर्तयति । ऊरुणा । हि । रेतः । सिच्यते । नग्नङ्कृत्येतिनग्नं-कृत्य । ऊरुम् । उप । प्रेति । वर्तयति । यदा । हि । नग्नः । ऊरुः । भवति । अथ । मिथुनी । भवतः । अथ । रेतः । सिच्यते । अथ । प्रजाइतिप्र-जाः । प्रेति । जायन्ते ॥ [ ३१ ] पत्नीस्सुवर्गमुपस्तितरमिन्द्रियावइत्यपिसीदमिथुन्यंष्टौच ॥ ८ ॥

इन्द्रः । वृत्रम् । अहन् । तस्य । शीर्षकपालमितिशीर्ष-कपालम् । उदिति । औब्जत् । सः । द्रोणकलशइतिद्रोण-कलशः । अभवत् । तस्मात् । सोमः । समिति । अस्रवत् । सः । हारियोजनइतिहारि-योजनः । अभवत् । तम् । वीति । अचिकित्सत् । जुहवानी(३) । मा । हौषा (३) म् । इति । सः । अमन्यत । यत् । होष्यामि । आमम् । होष्यामि । यत् । न । होष्यामि । यज्ञवेशसमितियज्ञ-वेशसम् । करिष्यामि । इति । तम् । अध्रियत । होतुम् । सः । अग्निः । अब्रवीत् । न । मयि । आमम् । होष्यसि । इति । तम् । धानाभिः । अश्रीणात् । [ ३२ ] तम् । शृतम् । भूतम् । अजुहोत् । यत् । धानाभिः । हारियोजनमितिहारि-योजनम् । श्रीणाति । शृतत्वायेतिशृत-त्वाय । शृतम् । एव । एनम् । भूतम् । जुहोति । बह्वीभिः । श्रीणाति । एतावतीः । एव । अस्य । अमुष्मिन्न् । लोके । कामदुघाइतिकाम-दुघाः । भवन्ति । अथोइति । खलु । आहुः । एताः । वै । इन्द्रस्य । पृश्नयः । कामदुघाइतिकाम-दुघाः । यत् । हारियोजनीरितिहारि-योजनीः । इति । तस्मात् । बह्वीभिः । श्रीणीयात् । ऋक्सामेइत्यृक्-सामे । वै । इन्द्रस्य । हरीइति । सोमपानावितिसोम-पानौ । तयोः । परिधयइतिपरि-धयः । आधानमित्या-धानम् । यत् । अप्रहृत्येत्यप्र-हृत्य । परिधीनितिपरि-धीन् । जुहुयात् । अन्तराधानाभ्यामित्यन्तः-आधानाभ्याम् । [ ३३ ] घासम् । प्रेति । यच्छेत् । प्रहृत्येतिप्र-हृत्य । परिधीनितिपरि-धीन् । जुहोति । निराधानाभ्यामितिनिः-आधानाभ्याम् । एव । घासम् । प्रेति । यच्छति । उन्नेतेत्युत्-नेता । जुहोति । यातयामेतियात-यामा । इव । हि । एतर्हि । अध्वर्युः । स्वगाकृतइतिस्वगा-कृतः । यत् । अध्वर्युः । जुहुयात् । यथा । विमुक्तमितिवि-मु

क्तम् । पुनः । युनक्ति । ताहक् । एव । तत् । शीर्षन्न् । अधिनिधायेत्यधि-नि धाय । जुहोति । शीर्षतः । हि । सः । समभवदितिसं-अभवत् । विक्रम्येतिवि-क्रम्य । जुहोति । विक्रम्येतिवि-क्रम्य । हि । इन्द्रः । वृत्रम् । अहन्न् । समृध्याइतिसं-ऋध्यै । पशवः । वै । हारियोजनीरितिहारि-योजनीः । यत् । सम्भिन्द्यादितिसं-भिन्द्यात् । अल्पाः । [ ३४ ] एनम् । पशवः । भुञ्जन्तः । उपेति । तिष्ठेरन्न् । यत् । न । सम्भि न्द्यादितिसं-भिन्द्यात् । बहवः । एनम् । पशवः । अभुञ्जन्तः । उपेति । तिष्ठेरन्न् । मनसा । समिति । बाधते । उभयम् । करोति । बहवः । एव । एनम् । पशवः । भुञ्जन्तः । उपेति । तिष्ठन्ते । उन्नेतरीत्युत्-नेतरि । उपहवमित्युप-हवम् । इच्छन्ते । यः । एव । तत्र । सोमपीथइतिसोम-पीथः । तम् । एव । अवेति । रुन्धते । उत्तर वेद्यामित्युत्तर-वेद्याम् । नीति । वपति । पशवः । वै । उत्तरवेदिरित्युत्तर-वेदिः । पश वः । हारियोजनीरितिहारि-योजनीः । पशुषु । एव । पशून् । प्रतीति । स्थापयन्ति ॥ [३५] अश्रीणादन्तरधानाभ्यामल्पास्स्थापयन्ति ॥ ❀ ❀ ॥९॥

ग्रहान् । वै । अन्विति । प्रजाइतिप्र-जाः । पशवः । प्रेति । जायन्ते । उपांश्वन्तर्या मावित्युपांशु-अन्तर्यामौ । अजावयइत्यजा-अवयः । शुक्रामन्थिनावितिशुक्रा-मन्थिनौ । पुरुषाः । ऋतुग्रहानित्यृतु-ग्रहान् । एकशफाइत्येक-शफाः । आदित्य ग्रहमित्यादित्य-ग्रहम् । गावः । आदित्यग्रहइत्यादित्य-ग्रहः । भूयिष्ठाभिः । ऋग्भि रित्यृक्-भिः । गृह्यते । तस्मात् । गावः । पशूनाम् । भूयिष्ठाः । यत् । त्रिः । उपां शुमित्युप-अंशुम् । हस्तेन । विगृह्णातीतिवि-गृह्णाति । तस्मात् । द्वौ । त्रीन् । अजा । जनयति । अथ । अवयः । भूयसीः । पिता । वै । एषः । यत् । आग्रयणः । पुत्रः । कलशः । यत् । आग्रयणः । उपदस्येदित्युप-दस्येत् । कलशात् । गृह्णीयात् । यथा । पिता । [३६] पुत्रम् । क्षितः । उपधावतीत्युप-धावति । ताहक् । एव । तत् । यत् । कलशः । उपदस्येदित्युप-दस्येत् । आग्रयणात् । गृह्णीयात् । यथा । पुत्रः । पित रम् । क्षितः । उपधावतीत्युप-धावति । ताहक् । एव । तत् । आत्मा । वै । एषः । यज्ञस्य । यत् । आग्रयणः । यत् । ग्रहः । वा । कलशः । वा । उपदस्येदित्युप-द स्येत् । आग्रयणात् । गृह्णीयात् । आत्मनः । एव । अधीति । यज्ञम् । निरिति ।

करोति । अविज्ञातइत्यवि-ज्ञातः । वै । एषः । गृह्यते । यत् । आग्रयणः । स्थाल्या । गृह्णाति । वायव्येन । जुहोति । तस्मात् । [३७] गर्भेण । अविज्ञातेनेत्यवि-ज्ञातेन । ब्रह्महेतिब्रह्म-हा । अवभृथमित्यव-भृथम् । अवेति । यन्ति । परेति । स्थालीः । अस्यन्ति । उदिति । वायव्यानि । हरन्ति । तस्मात् । स्त्रियम् । जाताम् । परेति । अस्यन्ति । उदिति । पुमाꣳसम् । हरन्ति । यत् । पुरोरुचमितिपुरः-रुचम् । आह । यथा । वस्यसे । आहरतीत्या-हरति । तादृक् । एव । तत् । यत् । ग्रहम् । गृह्णाति । यथा । वस्यसे । आहृत्येत्या-हृत्य । प्रेति । आह । तादृक् । एव । तत् । यत् । सादयति । यथा । वस्यसे । उपनिधायेत्युप-निधाय । अपक्रामतीत्यप-क्रामति । तादृक् । एव । तत् । यत् । वै । यज्ञस्य । साम्ना । यजुषा । क्रियते । शिथिलम् । तत् । यत् । ऋचा । तत् । दृढम् । पुरस्तादुपयामाइतिपुरस्तात्-उपयामाः । यजुषा । गृह्यन्ते । उपरिष्टादुपयामाइत्युपरिष्टात्-उपयामाः । ऋचा । यज्ञस्य । धृत्यै ॥ [३८] यथापितातस्मादपक्रामतितादृगेवतद्यदष्टादशच ॥ ❀ ❀ ॥१०॥

प्रेति । अन्यानि । पात्राणि । युज्यन्ते । न । अन्यानि । यानि । पराचीनानि । प्रयुज्यन्तइतिप्र-युज्यन्ते । असुम् । एव । तैः । लोकम् । अभीति । जयति । पराङ् । इव । हि । असौ । लोकः । यानि । पुनः । प्रयुज्यन्तइतिप्र-युज्यन्ते । इमम् । एव । तैः । लोकम् । अभीति । जयति । पुनःपुनरितिपुनः-पुनः । इव । हि । अयम् । लोकः । प्रेति । अन्यानि । पात्राणि । युज्यन्ते । न । अन्यानि । यानि । पराचीनानि । प्रयुज्यन्तइतिप्र-युज्यन्ते । तानि । अन्विति । ओषधयः । परेति । भवन्ति । यानि । पुनः [३९] प्रयुज्यन्तइतिप्र-युज्यन्ते । तानि । अन्विति । ओषधयः । पुनः । एति । भवन्ति । प्रेति । अन्यानि । पात्राणि । युज्यन्ते । न । अन्यानि । यानि । पराचीनानि । प्रयुज्यन्तइतिप्र-युज्यन्ते । तानि । अन्विति । आरण्याः । पशवः । अरण्यम् । अपेति । यन्ति । यानि । पुनः । प्रयुज्यन्तइतिप्र-युज्यन्ते । तानि । अन्विति । ग्राम्याः । पशवः । ग्रामम् । उपावयन्तीत्युप-अवयन्ति । यः । वै । ग्रहाणाम् । निदानमितिनि-दानम् । वेद । निदानवानितिनिदान-वान् । भवति । आज्यम् । इति । उक्थम् । तत् । वै । ग्रहाणाम् । निदानमितिनि-दानम् । यत् । उपांश्वित्युप-अꣳशु । शꣳसति । तत् । [४०] उपांश्वन्त

र्यामयोरित्युंपा॑ᳲशु-अन्तर्यामयोः । यत् । उच्चैः । तत् । इतरेषाम् । ग्रहाणाम् । एतत् । वै । ग्रहाणाम् । निदानमितिनि-दानम् । यः । एवम् । वेद । निदानवानितिनिदानं-वान् । भवति । यः । वै । ग्रहाणाम् । मिथुनम् । वेद । प्रेति । प्रजयेति प्र-जया । पशुभिरितिपशु-भिः । मिथुनैः । जायते । स्थालीभिः । अन्ये । ग्रहाः । गृह्यन्ते । वायव्यैः । अन्ये । एतत् । वै । ग्रहाणाम् । मिथुनम् । यः । एवम् । वेद । प्रेति । प्रजयेतिप्र-जया । पशुभिरितिपशु-भिः । मिथुनैः । जायते । इन्द्रः । त्वष्टुः । सोमम् । अभीषहेत्यभि-सहा । अपिबत् । सः । विष्वङ् । [४१] वीति । आर्च्छत् । सः । आत्मन्न् । आरमणमित्या-रमणम् । न । अविन्दत् । सः । एतान् । अनुसवनमित्यनु-सवनम् । पुरोडाशान् । अपश्यत् । तान् । निरिति । अवपत् । तैः । वै । सः । आत्मन्न् । आरमणमित्या-रमणम् । अकुरुत । तस्मात् । अनुसवनमित्यनु-सवनम् । पुरोडाशाः । निरिति । उप्यन्ते । तस्मात् । अनुसवनमित्यनु-सवनम् । पुरोडाशानाम् । प्रेति । अश्नीयात् । आत्मन्न् । एव । आरमणमित्या-रमणम् । कुरुते । न । एनम् । सोमः । अतीति । पवते । ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । न । ऋचा । न । यजुषा । पङ्क्तिः । आप्यते । अथ । किम् । यज्ञस्य । पाङ्क्तत्वमितिपाङ्क्त-त्वम् । इति । धानाः । करम्भः । परिवापइतिपरि-वापः । पुरोडाशः । पयस्या । तेन । पङ्क्तिः । आप्यते । तत् । यज्ञस्य । पाङ्क्तत्वमितिपाङ्क्त-त्वम् ॥
[४२] भवन्तियानिपुनश्शᳲसंतितद्विष्वङ्क्चतुर्दशच ॥ ❀ ॥ ११ ॥

इन्द्रोवृत्रायायुवैयज्ञेनसुवर्गा येन्द्रोमरुद्भिरदितिरन्तर्यामपात्रेणप्राणउपांᳲशुपात्रेणेन्द्रोवृत्रमहन्तस्यग्रहान्प्रान्यान्येकादश ॥ ११ ॥ इन्द्रोवृत्रायपुनर् ऋतुनाऽऽहमिथुनम्पशवोनेष्टःपत्नीमुपांᳲश्वन्तर्यामयोर्द्विचत्वारिᳲशत् ॥ ४२ ॥ इन्द्रोवृत्रायपाङ्क्तत्वम् ॥ ❀ ❀ ❀ ❀ ❀

हरिः ओ (३) म् ॥

इति षष्ठकाण्डे पञ्चमः प्रश्नः ॥

## षष्ठकाण्डे षष्ठः प्रश्नः ॥

### हरिः ओ (४) म् ॥

सुवर्गायेतिसुवः-गाय । वै । एतानि । लोकाय । हूयन्ते । यत् । दाक्षिणानि । द्वाभ्याम् । गार्हपत्यइतिगार्ह-पत्ये । जुहोति । द्विपादितिद्वि-पात् । यजमानः । प्रतिष्ठित्याइतिप्रति-स्थित्यै । आग्नीध्रइत्याग्नि-इध्रे । जुहोति । अन्तरिक्षे । एव । एति । क्रमते । सदः । अभि । एति । एति । सुवर्गमितिसुवः-गम् । एव । एनम् । लोकम् । गमयति । सौरीभ्याम् । ऋग्भ्यामित्यृक्-भ्याम् । गार्हपत्यइतिगार्ह-पत्ये । जुहोति । अमुम् । एव । एनम् । लोकम् । समारोहयतीतिसं-आरोहयति । नयवत्येतिनय-वत्या । ऋचा । आग्नीध्रइत्याग्नि-इध्रे । जुहोति । सुवर्गस्येतिसुवः-गस्य । लोकस्य । अभिनीत्याइत्यभि-नीत्यै । दिवम् । गच्छ । सुवः । पत । इति । हिरण्यम् । [१] हुत्वा । उदिति । गृह्णाति । सुवर्गमितिसुवः-गम् । एव । एनम् । लोकम् । गमयति । रूपेण । वः । रूपम् । अभि । एति । एमि । इति । आह । रूपेण । हि । आसाम् । रूपम् । अभि । एति । एति । यत् । हिरण्येन । तुथः । वः । विश्ववेदाइतिविश्व-वेदाः । वीति । भजतु । इति । आह । तुथः । ह । स्म । वै । विश्ववेदाइतिविश्व-वेदाः । देवानाम् । दक्षिणाः । वीति । भजति । तेन । एव । एनाः । वीति । भजति । एतत् । ते । अग्ने । राधः । [२] एति । एति । सोमच्युतमितिसोम-च्युतम् । इति । आह । सोमच्युतमितिसोम-च्युतम् । हि । अस्य । राधः । एति । एति । तत् । मित्रस्य । पथा । नय । इति । आह । शान्त्यै । ऋतस्य । पथा । प्रेति । इत । चन्द्रदक्षिणाइतिचन्द्र-दक्षिणाः । इति । आह । सत्यम् । वै । ऋतम् । सत्येन । एव । एनाः । ऋतेन । वीति । भजति । यज्ञस्य । पथा । सुविता । नयन्तीः । इति । आह । यज्ञस्य । हि । एताः । पथा । यन्ति । यत् । दक्षिणाः । ब्राह्मणम् । अद्य । राध्यासम् । [३] ऋषिम् । आर्षेयम् । इति । आह । एषः । वै । ब्राह्मणः । ऋषिः । आर्षेयः । यः । शुश्रुवान् । तस्मात् । एवम् । आह । वीति । सुवः । पश्य । वीति । अन्तरिक्षम् । इति । आह । सुवर्गमितिसुवः-गम् । एव । एनम् । लोकम् । गमयति । यतस्व । सदस्यैः । इति । आह । मित्रत्वायेति

मित्र-त्वायं । अस्मद्दात्राइत्यस्मत्-दात्राः । देवत्रेतिदेव-त्रा । गच्छत । मधुमतीरितिमधुं-मतीः । प्रदातारमितिप्र-दातारम् । एतिं । विशत । इतिं । आह । वयम् । इह । प्रदातारइतिप्र-दातारः । स्मः । अस्मान् । अमुत्र । मधुमतीरितिमधु-मतीः । एतिं । विशत । इतिं । [४] वाव । एतत् । आह । हिरण्यम् । ददाति । ज्योतिः । वै । हिरण्यम् । ज्योतिः । एव । पुरस्तात् । धत्ते । सुवर्गस्येतिसुवः-गस्यं । लोकस्यं । अनुख्यात्याइत्यनु-ख्यात्यै । अग्नीधइत्यग्नि-इधे । ददाति । अभिमुखानित्यभि-मुखान् । एव । ऋतून् । प्रीणाति । ब्रह्मणे । ददाति । प्रसूत्याइतिप्र-सूत्यै । होत्रे । ददाति । आत्मा । वै । एषः । यज्ञस्यं । यत् । होता । आत्मानम् । एव । यज्ञस्यं । दक्षिणाभिः । समिति । अर्धयति ॥ [५] हिरण्यꣳराधोराध्यासममुत्रमधुमतीरावितशतेत्यष्टात्रिꣳशच्च ॥ ❀ ❀ ❀ ❀ ॥ १ ॥

समिष्टयजूꣳषीतिसमिष्ट-यजूꣳषिं । जुहोति । यज्ञस्यं । समिष्ट्याइतिसं-इष्ट्यै । यत् । वै । यज्ञस्यं । क्रूरम् । यत् । विलिष्टमितिवि-लिष्टम् । यत् । अत्येतीत्यति-एतिं । यत् । न । अत्येतीत्यति-एतिं । यत् । अतिकरोतीत्यति-करोति । यत् । न । अपीतिं । करोति । तत् । एव । तैः । प्रीणाति । नवं । जुहोति । नवं । वै । पुरुषे । प्राणाइतिप्र अनाः । पुरुषेण । यज्ञः । सम्मितइतिसं-मितः । यावान् । एव । यज्ञः । तम् । प्रीणाति । षट् । ऋग्मियाणि । जुहोति । षट् । वै । ऋतवः । ऋतून् । एव । प्रीणाति । त्रीणि । यजूꣳषि । [६] त्रयः । इमे । लोकाः । इमान् । एव । लोकान् । प्रीणाति । यज्ञं । यज्ञम् । गच्छ । यज्ञपतिमितियज्ञ-पतिम् । गच्छ । इतिं । आह । यज्ञपतिमितियज्ञ पतिम् । एव । एनम् । गमयति । स्वाम् । योनिम् । गच्छ । इतिं । आह । स्वाम् । एव । एनम् । योनिम् । गमयति । एषः । ते । यज्ञः । यज्ञपतइतियज्ञ-पते । सहसूक्तवाकइतिसहसूक्त-वाकः । सुवीरइतिसु-वीरः । इतिं । आह । यजमाने । एव । वीर्यम् । दधाति । वासिष्ठः । ह । सात्यहव्यइतिसात्य-हव्यः । देवभागमितिदेव-भागम् । पप्रच्छ । यत् । सृञ्जयान् । बहुयाजिनइतिबहु-याजिनः । अयीयजः । यज्ञे । [७] यज्ञम् । प्रतीति । अतिष्ठिपा(३)ः । यज्ञपता(३)विति यज्ञ-पता(३)उ । इतिं । सः । ह । उवाच । यज्ञपतावितियज्ञ-पतौ । इतिं । सत्यात् । वै । सृञ्जयाः । परेति । बभूवुः । इतिं । ह । उवा

च । यज्ञे । वाव । यज्ञः । प्रतिष्ठाप्यइतिप्रति-स्थाप्यः । आसीत् । यजमानस्य । अपराभावायेत्यपरा-भावाय । इति । देवाः । गातुविदइतिगातु-विदः । गातुम् । वित्वा । गातुम् । इत । इति । आह । यज्ञे । एव । यज्ञम् । प्रति । स्थापयति । यजमानस्य । अपराभावायेत्यपरा-भावाय ॥ [८] यजूंषियज्ञएकचत्वारिंशच्च ॥२॥

अवभृथयजूंषीत्यवभृथ-यजूंषि । जुहोति । यत् । एव । अर्वाचीनम् । एकहायनादित्येक-हायनात् । एनः । करोति । तत् । एव । तैः । अवेति । यजते । अपः । अवभृथमित्यव-भृथम् । अवेति । एति । अफ्स्वित्यप्-सु । वै । वरुणः । साक्षादितिस-अक्षात् । एव । वरुणम् । अवेति । यजते । वर्त्मना । वै । अन्वित्येत्यनु-इत्य । यज्ञम् । रक्षांसि । जिघांसन्ति । साम्ना । प्रस्तोतेतिप्र-स्तोता । अन्ववैतीत्यनु-अवैति । साम । वै । रक्षोहेतिरक्षः-हा । रक्षसाम् । अपहत्याइत्यप-हत्यै । त्रिः । निधनमितिनि-धनम् । उपेति । एति । त्रयः । इमे । लोकाः । एभ्यः । एव । लोकेभ्यः । रक्षांसि । [९] अपेति । हन्ति । पुरुषःपुरुषइतिपुरुषः-पुरुषः । निधनमितिनि-धनम् । उपेति । एति । पुरुषःपुरुषइतिपुरुषः-पुरुषः । हि । रक्षस्वी । रक्षसाम् । अपहत्याइत्यप-हत्यै । उरुम् । हि । राजा । वरुणः । चकार । इति । आह । प्रतिष्ठित्याइतिप्रति-स्थित्यै । शतम् । ते । राजन्न् । भिषजः । सहस्रम् । इति । आह । भेषजम् । एव । अस्मै । करोति । अभिष्ठितइत्यभि-स्थितः । वरुणस्य । पाशः । इति । आह । वरुणपाशमितिवरुण-पाशम् । एव । अभीति । तिष्ठति । बर्हिः । अभीति । जुहोति । आहुतीनामित्या-हुतीनाम् । प्रतिष्ठित्याइतिप्रति-स्थित्यै । अथोइति । अग्निवतीत्यग्नि-वति । एव । जुहोति । अपबर्हिषइत्यप-बर्हिषः । प्रयाजानितिप्र-याजान् । [१०] यजति । प्रजाइतिप्र-जाः । वै । बर्हिः । प्रजाइतिप्र-जाः । एव । वरुणपाशादितिवरुण-पाशात् । मुञ्चति । आज्यभागावित्याज्य-भागौ । यजति । यज्ञस्य । एव । चक्षुषीइति । न । अन्तः । एति । वरुणम् । यजति । वरुणपाशादितिवरुण-पाशात् । एव । एनम् । मुञ्चति । अग्नीवरुणावित्यग्नी-वरुणौ । यजति । साक्षादितिस-अक्षात् । एव । एनम् । वरुणपाशादितिवरुण-पाशात् । मुञ्चति । अपबर्हिषावित्यप-बर्हिषौ । अ

नू याजावित्यनु-याजौ । यजति । प्रजाइतिप्र-जाः । वै । बर्हिः । प्रजाइतिप्र-जाः । एव । वरुणपाशादितिवरुण-पाशात् । मुञ्चति । चतुरः । प्रयाजानितिप्र-याजान् । यजति । द्वौ । अनूयाजावित्यनु-याजौ । षट् । समिति । पद्यन्ते । षट् । वै । ऋतवः । [११] ऋतुषु । एव । प्रतीति । तिष्ठति । अवभृथेत्यव-भृथ । निचङ्कुणेतिनि-चङ्कुण । इति । आह । यथोदितमितियथा-उदितम् । एव । वरुणम् । अवेति । यजते । समुद्रे । ते । हृदयम् । अफ्स्वित्यप्-सु । अन्तः । इति । आह । समुद्रे । हि । अन्तः । वरुणः । समिति । त्वा । विशन्तु । ओषधीः । उत । आपः । इति । आह । अद्भिरित्यत्-भिः । एव । एनम् । ओषधीभिरित्योषधि-भिः । सम्यञ्चम् । दधाति । देवीः । आपः । एषः । वः । गर्भः । इति । आह । यथायजुरितियथा यजुः । एव । एतत् । पशवः । वै । [१२] सोमः । यत् । भिन्दूनाम् । भक्षयेत् । पशुमानितिपशु-मान् । स्यात् । वरुणः । तु । एनम् । गृह्णीयात् । यत् । न । भक्षयेत् । अपशुः । स्यात् । न । एनम् । वरुणः । गृह्णीयात् । उपस्पृश्यमित्युप-स्पृश्यम् । एव । पशुमानितिपशु-मान् । भवति । न । एनम् । वरुणः । गृह्णाति । प्रतियुतइतिप्रति-युतः । वरुणस्य । पाशः । इति । आह । वरुणपाशादितिवरुण-पाशात् । एव । निरिति । मुच्यते । अप्रतीक्षमित्यप्रति-ईक्षम् । एति । यन्ति । वरुणस्य । अन्तर्हित्याइत्यन्तः-हित्यै । एधः । असि । एधिषीमहि । इति । आह । समिधेतिसं-इधा । एव । अग्निम् । नमस्यन्तः । उपायन्तीत्युप-आयन्ति । तेजः । असि । तेजः । मयि । धेहि । इति । आह । तेजः । एव । आत्मन् । धत्ते ॥ [१३] रक्षाꣳसि प्रयाजानृतवो वैनंमस्यन्तोद्वादशच ॥ ❀ ❀ ❀ ॥ २ ॥

स्फ्येन । वेदिम् । उदिति । हन्ति । रथाक्षेणेतिरथ-अक्षेण । वीति । मिमीते । यूपम् । मिनोति । त्रिवृतमितित्रि-वृतम् । एव । वज्रम् । सम्भृत्येतिसं-भृत्य । भ्रातृव्याय । प्रेति । हरति । स्तृत्यै । यत् । अन्तर्वेदीत्यन्तः-वेदि । मिनुयात् । देवलोकमितिदेव-लोकम् । अभीति । जयेत् । यत् । बहिर्वेदीतिबहिः-वेदि । मनुष्यलोकमितिमनुष्य-लोकम् । वेद्यन्तस्येतिवेदि-अन्तस्य । सन्धावितिसं-धौ । मिनोति । उभयोः । लोकयोः । अभिजित्याइत्यभि-जित्यै । उपरसम्मितामित्युपर-स

म्मिताम् । मिनुयात् । पितृलोककामस्येतिपितृलोक-कामस्य । रशनसम्मिताम्मि तिरशन-सम्मिताम् । मनुष्यलोककामस्येतिमनुष्यलोक-कामस्य । चषालसम्मि तामितिचषाल-सम्मिताम् । इन्द्रियकामस्येतीन्द्रिय-कामस्य । सर्वान् । समान् । प्रतिष्ठाकामस्येतिप्रतिष्ठा-कामस्य । ये । त्रयः । मध्यमाः । तान् । समान् । पशुका मस्येतिपशु-कामस्य । एतान् । वै । [१४] अन्विति । पशवः । उपेति । तिष्ठ न्ते । पशुमानितिपशु-मान् । एव । भवति । व्यतिषजेदितिवि-अतिषजेत् । इत रान् । प्रजयेतिप्र-जया । एव । एनम् । पशुभिरितिपशु-भिः । व्यतिषजतीतिवि-अतिषजति । यम् । कामयेत । प्रमायुकइतिप्र-मायुकः । स्यात् । इति । गर्तमि तमितिगर्त-मितम् । तस्य । मिनुयात् । उत्तरार्ध्यमित्युत्तर-अर्ध्यम् । वर्षिष्ठम् । अथ । ह्रसीयाꣳसम् । एषा । वै । गर्तमिदितिगर्त-मित् । यस्य । एवम् । मि नोति । ताजक् । प्रेति । मीयते । दक्षिणार्ध्यमितिदक्षिण-अर्ध्यम् । वर्षिष्ठम् । मिनुयात् । सुवर्गकामस्येतिसुवर्ग-कामस्य । अथ । ह्रसीयाꣳसम् । आक्रमणमित्या-क्रमणम् । एव । तत् । सेतुम् । यजमानः । कुरुते । सुवर्गस्येतिसुवः गस्य । लोक स्य । समष्ट्याइतिसं-अष्ट्यै । [१५] यत् । एकस्मिन् । यूपे । द्वेइति । रशनेइति । परिव्ययतीतिपरि-व्ययति । तस्मात् । एकः । द्वेइति । जायेइति । विन्दते । यत् । न । एकाम् । रशनाम् । द्वयोः । यूपयोः । परिव्ययतीतिपरि-व्ययति । तस्मात् । न । एका । द्वौ । पतीइति । विन्दते । यम् । कामयेत । स्त्री । अस्य । जायेत । इति । उपान्तइत्युप-अन्ते । तस्य । व्यतिषजेदितिवि-अतिषजेत् । स्त्री । एव । अ स्य । जायते । यम् । कामयेत । पुमान् । अस्य । जायेत । इति । आन्तमित्या-अन्तम् । तस्य । प्रेति । वेष्टयेत् । पुमान् । एव । अस्य । [१६] जायते । असुराः । वै । देवान् । द क्षिणतः । उपेति । अनयन्न् । तान् । देवाः । उपशयेनेत्युप-शयेन । एव । अपेति । अ नुदन्त । तत् । उपशयस्येत्युप-शयस्य । उपशयत्वमित्युपशय-त्वम् । यत् । दक्षिण तः । उपशयइत्युप-शयः । उपशयइत्युप-शये । भ्रातृव्यापनुत्त्याइतिभ्रातृव्य-अपनु त्त्यै । सर्वे । वै । अन्ये । यूपाः । पशुमन्तइतिपशु-मन्तः । अथ । उपशयइत्युप-शयः । ए व । अपशुः । तस्य । यजमानः । पशुः । यत् । न । निर्दिशेदितिनिः-दिशेत् । आर्तिम् । एति । ऋच्छेत् । यजमानः । असौ । ते । पशुः । इति । निरिति । दिशेत् । यम् ।

द्विष्यात् । यम् । एव । [१७] द्वेष्टि । तम् । अस्मै । पशुम् । निरिति । दिशति । यदि । न । द्विष्यात् । आखुः । ते । पशुः । इति । ब्रूयात् । न । ग्राम्यान् । पशून् । हिनस्ति । न । आरण्यान् । प्रजापतिरितिप्रजा-पतिः । प्रजाइतिप्र-जाः । असृजत । सः । अन्नाद्येनेत्यन्न-अद्येन । वीति । आर्ध्यत । सः । एताम् । एकादशिनीम् । अपश्यत् । तया । वै । सः । अन्नाद्यमित्यन्न-अद्यम् । अवेति । अरुन्ध । यत् । दश । यूपाः । भवन्ति । दशाक्षरेतिदश-अक्षरा । विराडितिवि-राट् । अन्नम् । विराडितिवि-राट् । विराजेतिवि-राजा । एव । अन्नाद्यमित्यन्न-अद्यम् । अवेति । रुन्धे । [१८] यः । एकादशः । स्तनः । एव । अस्यै । सः । दुहे । एव । एनाम् । तेन । वज्रः । वै । एषा । समिति । मीयते । यत् । एकादशिनी । सा । ईश्वरा । पुरस्तात् । प्रत्यञ्चम् । यज्ञम् । सम्मर्दितोरितिसं-मर्दितोः । यत् । पात्नीवतमितिपात्नी-वतम् । मिनोति । यज्ञस्य । प्रतीति । उत्तब्ध्याइत्युत्-स्तब्ध्यै । सयत्वायेतिसय-त्वाय ॥ [१९] वैसमष्ट्यैपुमानेवास्ययमेवरुन्धेत्रिꣳशच्च ॥ ❀ ॥४॥

प्रजापतिरितिप्रजा-पतिः । प्रजाइतिप्र-जाः । असृजत । सः । रिरिचानः । अमन्यत । सः । एताम् । एकादशिनीम् । अपश्यत् । तया । वै । सः । आयुः । इन्द्रियम् । वीर्यम् । आत्मन्न् । अधत्त । प्रजाइतिप्र-जाः । इव । खलु । वै । एषः । सृजते । यः । यजते । सः । एतर्हि । रिरिचानः । इव । यत् । एषा । एकादशिनी । भवति । आयुः । एव । तया । इन्द्रियम् । वीर्यम् । यजमानः । आत्मन्न् । धत्ते । प्रेति । एव । आग्नेयेन । वापयति । मिथुनम् । सारस्वत्या । करोति । रेतः । [२०] सौम्येन । दधाति । प्रेति । जनयति । पौष्णेन । बार्हस्पत्यः । भवति । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । अस्मै । प्रजाइतिप्र-जाः । प्रेति । जनयति । वैश्वदेवइतिवैश्व-देवः । भवति । वैश्वदेव्यइतिवैश्व-देव्यः । वै । प्रजाइतिप्र-जाः । प्रजाइतिप्र-जाः । एव । अस्मै । प्रेति । जनयति । इन्द्रियम् । एव । ऐन्द्रेण । अवेति । रुन्धे । विशम् । मारुतेन । ओजः । बलम् । ऐन्द्राग्नेनेत्यैन्द्र अग्नेन । प्रसवायेतिप्र-सवाय । सावित्रः । निर्वरुणत्वायेतिनिर्वरुण-त्वाय । वारुणः । मध्यतः । ऐन्द्रम् । एति । लभते । मध्यतः । एव । इन्द्रियम् । यजमाने ।

दधाति । [ २१ ] पुरस्तात् । ऐन्द्रस्य । वैश्वदेवमितिवैश्व-देवम् । एति । लभते । वैश्वदेवमितिवैश्व-देवम् । वै । अन्नम् । अन्नम् । एव । पुरस्तात् । धत्ते । तस्मात् । पुरस्तात् । अन्नम् । अद्यते । ऐन्द्रम् । आलभ्येत्या-लभ्य । मारुतम् । एति । लभते । विट् । वै । मरुतः । विशम् । एव । अस्मै । अन्विति । बध्नाति । यदि । कामयेत । यः । अवगतइत्यव-गतः । सः । अपेति । रुध्यताम् । यः । अपरुद्धइत्यप-रुद्धः । सः । अवेति । गच्छतु । इति । ऐन्द्रस्य । लोके । वारुणम् । एति । लभेत । वारुणस्य । लोके । ऐन्द्रम् । [२२] यः । एव । अवगतइत्यव-गतः । सः । अपेति । रुध्यते । यः । अपरुद्धइत्यप-रुद्धः । सः । अवेति । गच्छति । यदि । कामयेत । प्रजाइतिप्र-जाः । मुह्येयुः । इति । पशून् । व्यतिषजेदितिवि-अतिषजेत् । प्रजाइति प्र-जाः । एव । मोहयति । यत् । अभिवाहतइत्यभि-वाहतः । अपाम् । वारुणम् । आलभेतेत्या-लभेत । प्रजाइतिप्र-जाः । वरुणः । गृह्णीयात् । दक्षिणतः । उदञ्चम् । एति । लभते । अपवाहतइत्यप-वाहतः । अपाम् । प्रजानामितिप्र-जानाम् । अवरुणग्राहायेत्यवरुण-ग्राहाय ॥ [ २३ ] रेतोयजमाने दधाति लोकऐन्द्रꣳसप्तत्रिꣳशच्च ॥ ❀ ❀ ❀ ❀ ❀ ❀ ॥५॥

इन्द्रः । पत्निया । मनुम् । अयाजयत् । ताम् । पर्यग्निकृतामितिपर्यग्नि-कृताम् । उदिति । असृजत् । तया । मनुः । आर्ध्नोत् । यत् । पर्यग्निकृतमितिपर्यग्नि-कृतम् । पात्नीवतमितिपात्नी-वतम् । उत्सृजतीत्युत्-सृजति । याम् । एव । मनुः । ऋद्धिम् । आर्ध्नोत् । ताम् । एव । यजमानः । ऋध्नोति । यज्ञस्य । वै । अप्रतिष्ठितादित्यप्रति-स्थितात् । यज्ञः । परेति । भवति । यज्ञम् । पराभवन्तमितिपरा-भवन्तम् । यजमानः । अनु । परेति । भवति । यत् । आज्येन । पात्नीवतमितिपात्नी-वतम् । सꣳस्थापयतीतिसं-स्थापयति । यज्ञस्य । प्रतिष्ठित्याइतिप्रति-स्थित्यै । यज्ञम् । प्रतितिष्ठन्तमितिप्रति-तिष्ठन्तम् । यजमानः । अनु । प्रतीति । तिष्ठति । इष्टम् । वपया । [ २४ ] भवति । अनिष्टम् । वशया । अथ । पात्नीवतेनेतिपात्नी-वतेन । प्रेति । चरति । तीर्थे । एव । प्रेति । चरति । अथोइति । एतर्हि । एव । अस्य । यामः । त्वाष्ट्रः । भवति । त्वष्टा । वै । रेतसः । सिक्तस्य । रूपाणि । वीति । करोति । तम् । एव । वृषाणम् । पत्नीषु । अपीति । सृजति । सः ।

अस्मै । रूपाणि । वीति । करोति ॥ [२५] वपयाषट् त्रिꣳशच्च ॥ ❀ ॥ ६ ॥

घ्नन्ति । वै । एतत् । सोमम् । यत् । अभिषुण्वन्तीत्यभि-सुन्वन्ति । यत् । सौम्यः । भवति । यथा । मृताय । अनुस्तरणीमित्यनु-स्तरणीम् । घ्नन्ति । तादृक् । एव । तत् । यत् । उत्तरार्धइत्युत्तर-अर्धे । वा । मध्ये । वा । जुहुयात् । देवताभ्यः । समर्दमितिस-मर्दम् । दध्यात् । दक्षिणार्धइतिदक्षिण-अर्धे । जुहोति । एषा । वै । पितृणाम् । दिक् । स्वायाम् । एव । दिशि । पितॄन् । निरवदयतइतिनिः-अवदयते । उद्गातृभ्यइत्युद्गातृ-भ्यः । हरन्ति । सामदेवत्यइतिसाम-देवत्यः । वै । सौम्यः । यत् । एव । साम्नः । छम्बट्कुर्वन्तीतिछम्बट्-कुर्वन्ति । तस्य । एव । सः । शान्तिः । अवेति । [२६] ईक्षन्ते । पवित्रम् । वै । सौम्यः । आत्मानम् । एव । पवयन्ते । यः । आत्मानम् । न । परिपश्येदितिपरि-पश्येत् । इतासुरितीत-असुः । स्यात् । अभिदद्दिमित्यभि-दद्दिम् । कृत्वा । अवेति । ईक्षेत । तस्मिन् । हि । आत्मानम् । परिपश्यतीतिपरि-पश्यति । अथोइति । आत्मानम् । एव । पवयते । यः । गतमनाइतिगत-मनाः । स्यात् । सः । अवेति । ईक्षेत । यत् । मे । मनः । परागतमितिपरा-गतम् । यत् । वा । मे । अपरागतमित्यपरा-गतम् ॥ राज्ञा । सोमेन । तत् । वयम् । अस्मासु । धारयामसि । इति । मनः । एव । आत्मन् । दाधार । [२७] न । गतमनाइतिगत-मनाः । भवति । अपेति । वै । तृतीयसवनइतितृतीय सवने । यज्ञः । क्रामति । ईजानात् । अनीजानम् । अभीति । आग्नावैष्णव्येत्याग्ना-वैष्णव्या । ऋचा । घृतस्य । यजति । अग्निः । सर्वाः । देवताः । विष्णुः । यज्ञः । देवताः । च । एव । यज्ञम् । च । दाधार । उपांꣳश्वित्युप-अꣳशु । यजति । मिथुनत्वायेतिमिथुन-त्वाय । ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । मित्रः । यज्ञस्य । स्विष्टमितिसु-इष्टम् । युवते । वरुणः । दुरिष्टमितिदुः-इष्टम् । क्व । तर्हि । यज्ञः । क्व । यजमानः । भवति । इति । यत् । मैत्रावरुणीमितिमैत्रा-वरुणीम् । वशाम् । आलभतइत्या-लभते । मित्रेण । एव । [२८] यज्ञस्य । स्विष्टमितिसु-इष्टम् । शमयति । वरुणेन । दुरिष्टमितिदुः-इष्टम् । न । आर्तिम् । एति । ऋच्छति । यजमानः । यथा । वै । लाङ्गलेन । उर्वराम् । प्रभिन्दन्तीतिप्र-भिन्दन्ति । एवम् । ऋक्सामेइत्यृक्-सामे । यज्ञम् । प्रेति । भिन्तः । यत् । मैत्रावरुणी

मितिमैत्रा-वरुणीम् । वशाम् । आलभंतइत्यां-लभंते । यज्ञायं । एव । प्रभिन्नाये तिप्र-भिन्नाय । मत्यंम् । अन्ववंास्यतीत्यंनु-अवांस्यति । शान्त्यै । यातयांमानी तियात-यामानि । वै । एतस्यं । छन्दाꣳसि । यः । ईजानः । छन्दंसाम् । एषः । रसंः । यत् । वशा । यत् । मैत्रावरुणीमितिमैत्रा-वरुणीम् । वशाम् । आलभंतइ त्यां-लभंते । छन्दाꣳसि । एव । पुनंः । एति । प्रीणाति । अयांतयामत्वायेत्य यांतयाम-त्वाय । अथोइति । छन्दस्स्वितिछन्दंः-सु । एव । रसंम् । दधाति ॥२९॥

अवंदाधारमित्रेणैव प्रींणातिषट्चं ॥ ❀ ❀ ❀ ॥७॥

देवाः । वै । इन्द्रियम् । वीर्यम् । वीति । अभजन्त । ततंः । यत् । अत्य शिष्यतेत्यंति-अशिंष्यत । तत् । अतिग्राह्याइत्यंति-ग्राह्यांः । अभवन्न् । तत् । अ तिग्राह्यांणामित्यंति-ग्राह्यांणाम् । अतिग्राह्यत्वमित्यंतिग्राह्य-त्वम् । यत् । अतिग्रा ह्याइत्यंति-ग्राह्यांः । गृह्यन्ते । इन्द्रियम् । एव । तत् । वीर्यम् । यजंमानः । आ त्मन्न् । धत्ते । तेजंः । आग्नेयेनं । इन्द्रियम् । ऐन्द्रेणं । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । सौर्येणं । उपस्तम्भंनमित्युंप-स्तम्भंनम् । वै । एतत् । यज्ञस्यं । यत् । अतिग्राह्याइ त्यंति-ग्राह्यांः । चक्रेइति । पृष्ठानि । यत् । पृष्ठ्ये । न । गृह्णीयात् । प्राञ्चम् । यज्ञम् । पृष्ठानि । समिति । शृणीयुः । यत् । उक्थ्ये । [३०] गृह्णीयात् । प्रत्यञ्चम् । यज्ञम् । अतिग्राह्याइत्यंति-ग्राह्यांः । समिति । शृणीयुः । विश्वजितीतिविश्व-जिति । सर्वपृ ष्ठइतिसर्व-पृष्ठे । ग्रहीतव्यांः । यज्ञस्यं । सवीर्यत्वायेतिसवीर्य-त्वायं । प्रजापंतिरिति प्रजा-पतिः । देवेभ्यंः । यज्ञान् । व्यादिशदितिवि-आदिशत् । सः । प्रियाः । त नूः । अपं । नीति । अधत्त । तत् । अतिग्राह्याइत्यंति-ग्राह्यांः । अभवन्न् । वितंनु रितिवि-तनुः । तस्य । यज्ञः । इति । आहुः । यस्यं । अतिग्राह्याइत्यंति-ग्राह्यांः । न । गृह्यन्ते । इति । अपीति । अग्निष्टोमइत्यंग्नि-स्तोमे । ग्रहीतव्यांः । यज्ञस्यं । स तनुत्वायेतिसतनु-त्वायं । देवतांः । वै । सर्वांः । सदृशीः । आसन्न् । ताः । न । व्यावृतमितिवि-आवृतम् । अगच्छन्न् । ते । देवाः । [३१] एते । एतान् । ग्र हान् । अपश्यन्न् । तान् । अगृह्णत । आग्नेयम् । अग्निः । ऐन्द्रम् । इन्द्रः । सौर्यम् । सूर्यः । ततंः । वै । ते । अन्याभिः । देवताभिः । व्यावृतमितिवि-आवृतम् । अग

च्छन्न् । यस्य॑ । एवम् । वि॒दुषः॑ । ए॒ते । ग्रहाः॑ । गृ॒ह्यन्ते॑ । व्यावृ॑तमितिवि-आवृ॑तम् । ए॒व । पा॒प्मना॑ । भ्रातृ॑व्येण । ग॒च्छ॒ति॒ । इ॒मे । लो॒काः । ज्योति॑ष्मन्तः । स॒मावद्वीर्या॒इति॑स॒मावत्-वी॒र्याः । का॒र्याः॑ । इति॑ । आ॒हुः॒ । आ॒ग्ने॒येन॑ । अ॒स्मिन्न् । लो॒के । ज्योतिः॑ । ध॒त्ते॒ । ऐ॒न्द्रेण॑ । अ॒न्तरि॑क्षे । इ॒न्द्र॒वा॒यूइती॑न्द्र-वा॒यू । हि । स॒युजा॒वितिस-युजौ॑ । सौ॒र्येण॑ । अ॒मुष्मि॑न्न् । लो॒के । [३२] ज्योतिः॑ । ध॒त्ते॒ । ज्योति॑ष्मन्तः । अ॒स्मै॒ । इ॒मे । लो॒काः । भ॒व॒न्ति॒ । स॒माव॑द्वीर्यानिति॑स॒मावत्-वी॒र्या॑न् । ए॒ता॒न् । कु॒रु॒ते॒ । ए॒तान् । वै । ग्रहा॑न् । बु॒म्बावि॒श्ववय॑सा॒विति॑बु॒म्बा-वि॒श्ववय॑सौ । अ॒वि॒त्ता॒म् । ताभ्या॑म् । इ॒मे । लो॒काः । परा॑ञ्चः । च॒ । अ॒र्वाञ्चः॑ । च॒ । प्रेति॑ । अ॒भुः॒ । यस्य॑ । एवम् । वि॒दुषः॑ । ए॒ते । ग्रहाः॑ । गृ॒ह्यन्ते॑ । प्रेति॑ । अ॒स्मै॒ । इ॒मे । लो॒काः । परा॑ञ्चः । च॒ । अ॒र्वाञ्चः॑ । च॒ । भा॒न्ति॒ ॥ [३३] उ॒क्थ्यैदे॒वाअ॒मुष्मि॑ँल्लो॒कए॒का॒न्नच॑त्वारि॒ꣳशच्च॑ ॥ ❀ ❀ ❀ ❀ ❀ ॥८॥

दे॒वाः । वै । यत् । य॒ज्ञे । अकु॑र्वत । तत् । असु॑राः । अ॒कु॒र्व॒त॒ । ते । दे॒वाः । अदा॑भ्ये । छन्दाꣳ॑सि । सव॑नानि । समि॑ति । अ॒स्था॒प॒य॒न्न् । ततः॑ । दे॒वाः । अभ॑वन्न् । परेति॑ । असु॑राः । यस्य॑ । एवम् । वि॒दुषः॑ । अदा॑भ्यः । गृ॒ह्यते॑ । भव॑ति । आ॒त्मना॑ । परेति॑ । अ॒स्य॒ । भ्रातृ॑व्यः । भ॒व॒ति॒ । यत् । वै । दे॒वाः । असु॑रान् । अदा॑भ्येन । अद॑भ्नुवन्न् । तत् । अदा॑भ्यस्य । अ॒दा॒भ्य॒त्वमित्य॑दाभ्य-त्वम् । यः । ए॒वम् । वेद॑ । द॒भ्नोति॑ । ए॒व । भ्रातृ॑व्यम् । न । ए॒न॒म् । भ्रातृ॑व्यः । द॒भ्नो॒ति॒ । [३४] ए॒षा । वै । प्र॒जाप॑ते॒रिति॑प्र॒जा-प॒तेः । अ॒ति॒मो॒क्षि॒णीत्य॑ति-मो॒क्षि॒णी । नाम॑ । त॒नूः । यत् । अदा॑भ्यः । उप॑नद्धस्येत्युप॑-न॒द्धस्य॒ । गृ॒ह्णा॒ति॒ । अति॑मुक्त्या॒इत्यति॑-मु॒क्त्यै॒ । अतीति॑ । पा॒प्मान॑म् । भ्रातृ॑व्यम् । मु॒च्य॒ते॒ । यः । ए॒वम् । वेद॑ । घ्नन्ति॑ । वै । ए॒तत् । सोम॑म् । यत् । अ॒भि॒षुण्वन्तीत्य॑भि-सु॒न्वन्ति॑ । सोमे॑ । ह॒न्यमा॑ने । य॒ज्ञः । ह॒न्य॒ते॒ । य॒ज्ञे । यज॑मानः । ब्र॒ह्म॒वा॒दि॒नइति॑ब्रह्म-वा॒दिनः॑ । व॒द॒न्ति॒ । किम् । तत् । य॒ज्ञे । यज॑मानः । कु॒रु॒ते॒ । येन॑ । जीव॑न्न् । सु॒व॒र्गमिति॑सुवः-गम् । लो॒कम् । एति॑ । इति॑ । जी॒व॒ग्र॒हइति॑जीव-ग्र॒हः । वै । ए॒षः । यत् । अदा॑भ्यः । अन॑भिषु॒तस्येत्यन॑भि-सु॒तस्य॒ । गृ॒ह्णा॒ति॒ । जीव॑न्तम् । ए॒व । ए॒न॒म् । सु॒व॒र्गं

मितिसुवः-गम् । लोकम् । गमयति । वीति । वै । एतत् । यज्ञम् । छिन्दन्ति । यत् । अदाभ्ये । सꣳस्थापयन्तीतिसं-स्थापयन्ति । अꣳशून् । अपीति । सृजति । यज्ञ स्य । सन्तत्याइतिसं-तत्यै ॥ [३५] दभ्नोत्यनभिषुतस्यगृह्णात्येकान्नविꣳशतिश्च ॥९॥

देवाः । वै । प्रबाहुगितिप्र-बाहुक् । ग्रहान् । अगृह्णत । सः । एतम् । प्रजा पतिरितिप्रजा-पतिः । अꣳशुम् । अपश्यत् । तम् । अगृह्णीत । तेन । वै । सः । आर्ध्नोत् । यस्य । एवम् । विदुषः । अꣳशुः । गृह्यते । ऋध्नोति । एव । सकृद भिषुतस्येतिसकृत्-अभिषुतस्य । गृह्णाति । सकृत् । हि । सः । तेन । आर्ध्नोत् । म नसा । गृह्णाति । मनः । इव । हि । प्रजापतिरितिप्रजा-पतिः । प्रजापतेरितिप्रजा-पतेः । आप्त्यै । औदुम्बरेण । गृह्णाति । ऊर्क् । वै । उदुम्बरः । ऊर्जम् । एव । अवेति । रुन्धे । चतुस्स्रक्तीतिचतुः-स्रक्ति । भवति । दिक्षु । [३६] एव । प्रतीति । तिष्ठति । यः । वै । अꣳशोः । आयतनमित्या-यतनम् । वेद । आयतनवानित्यायतन-वान् । भवति । वामदेव्यमितिवाम-देव्यम् । इति । साम । तत् । वै । अस्य । आयतनमि त्या-यतनम् । मनसा । गायमानः । गृह्णाति । आयतनवानित्यायतन-वान् । एव । भवति । यत् । अध्वर्युः । अꣳशुम् । गृह्णन् । न । अर्धयेत् । उभाभ्याम् । न । ऋध्ये त । अध्वर्यवे । च । यजमानाय । च । यत् । अर्धयेत् । उभाभ्याम् । ऋध्येत । अ नवानमित्यनव-अनम् । गृह्णाति । सा । एव । अस्य । ऋद्धिः । हिरण्यम् । अभि । वीति । अनिति । अमृतम् । वै । हिरण्यम् । आयुः । प्राणइतिप्र-अनः । आयुषा । एव । अमृतम् । अभीति । धिनोति । शतमानमितिशत-मानम् । भवति । शतायु रितिशत-आयुः । पुरुषः । शतेन्द्रियइतिशत-इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति ॥ [३७] दिक्ष्वनितिविꣳशतिश्च ॥ ❀ ❀ ॥१०॥

प्रजापतिरितिप्रजा-पतिः । देवेभ्यः । यज्ञान् । व्यादिशदितिवि-आदिशत् । सः । रिरिचानः । अमन्यत । सः । यज्ञानाम् । षोडशधेतिषोडश-धा । इन्द्रियम् । वीर्यम् । आत्मानम् । अभि । समिति । अक्खिदत् । तत् । षोडशी । अभवत् । न । वै । षोडशी । नाम । यज्ञः । अस्ति । यत् । वाव । षोडशम् । स्तोत्रम् । षोड शम् । शस्त्रम् । तेन । षोडशी । तत् । षोडशिनः । षोडशित्वमितिषोडशि-त्वम् ।

यत् । षोडशी । गृह्यते । इन्द्रियम् । एव । तत् । वीर्यम् । यजमानः । आत्मन् । धत्ते । देवेभ्यः । वै । सुवर्गइतिसुवः-गः । लोकः । [३८] न । प्रेति । अभवत् । ते । एतम् । षोडशिनम् । अपश्यन् । तम् । अगृह्णत । ततः । वै । तेभ्यः । सुवर्गइतिसुवः-गः । लोकः । प्रेति । अभवत् । यत् । षोडशी । गृह्यते । सुवर्गस्येति सुवः-गस्य । लोकस्य । अभिजित्याइत्यभि-जित्यै । इन्द्रः । वै । देवानाम् । आनुजावरइत्यानु-जावरः । आसीत् । सः । प्रजापतिमितिप्रजा-पतिम् । उपेति । अधावत् । तस्मै । एतम् । षोडशिनम् । प्रेति । अयच्छत् । तम् । अगृह्णीत । ततः । वै । सः । अग्रम् । देवतानाम् । परीति । ऐत् । यस्य । एवम् । विदुषः । षोडशी । गृह्यते । [३९] अग्रम् । एव । समानानाम् । परीति । एति । प्रातस्सवनइतिप्रातः-सवने । गृह्णाति । वज्रः । वै । षोडशी । वज्रः । प्रातस्सवनमितिप्रातः-सवनम् । स्वात् । एव । एनम् । योनेः । निरिति । गृह्णाति । सवनेसवनइतिसवने-सवने । अभीति । गृह्णाति । सवनात्सवनादितिसवनात्-सवनात् । एव । एनम् । प्रेति । जनयति । तृतीयसवनइतितृतीय-सवने । पशुकामस्येतिपशु-कामस्य । गृह्णीयात् । वज्रः । वै । षोडशी । पशवः । तृतीयसवनमितितृतीय-सवनम् । वज्रेण । एव । अस्मै । तृतीयसवनादितितृतीय-सवनात् । पशून् । अवेति । रुन्धे । न । उक्थ्ये । गृह्णीयात् । प्रजेतिप्र-जा । वै । पशवः । उक्थानि । यत् । उक्थ्ये । [४०] गृह्णीयात् । प्रजामितिप्र-जाम् । पशून् । अस्य । निरिति । दहेत् । अतिरात्रइत्यति-रात्रे । पशुकामस्येतिपशु-कामस्य । गृह्णीयात् । वज्रः । वै । षोडशी । वज्रेण । एव । अस्मै । पशून् । अवरुध्येत्यव-रुध्य । रात्रिया । उपरिष्टात् । शमयति । अपीति । अग्निष्टोमइत्यग्नि-स्तोमे । राजन्यस्य । गृह्णीयात् । व्यावृत्कामइतिव्यावृत्-कामः । हि । राजन्यः । यजते । साह्नइतिस-अह्ने । एव । अस्मै । वज्रम् । गृह्णाति । सः । एनम् । वज्रः । भूत्यै । इन्धे । निरिति । वा । दहति । एकविंशमित्येकविंशम् । स्तोत्रम् । भवति । प्रतिष्ठित्याइतिप्रति-स्थित्यै । हरिवदितिहरि-वत् । शस्यते । इन्द्रस्य । प्रियम् । धाम । [४१] उपेति । आप्नोति । कनीयांसि । वै ।

देवेषु । छन्दांसि । आसन्न् । ज्यायांसि । असुरेषु । ते । देवाः । कनीयसा । छन्दसा । ज्यायः । छन्दः । अभि । वीति । अशंसन्न् । ततः । वै । ते । असुराणाम् । लोकम् । अवृञ्जत । यत् । कनीयसा । छन्दसा । ज्यायः । छन्दः । अभीति । विशंसतीतिवि-शंसति । भ्रातृव्यस्य । एव । तत् । लोकम् । वृङ्क्ते । षट् । अक्षराणि । अतीति । रेचयन्ति । षट् । वै । ऋतवः । ऋतून् । एव । प्रीणाति । चत्वारि । पूर्वाणि । अवेति । कल्पयन्ति । [४१] चतुष्पदइतिचतुः-पदः । एव । पशून् । अवेति । रुन्धे । द्वेइति । उत्तरेइत्युत्-तरे । द्विपदइतिद्वि-पदः । एव । अवेति । रुन्धे । अनुष्टुभमित्यनु-स्तुभम् । अभि । समिति । पादयन्ति । वाक् । वै । अनुष्टुबित्यनु-स्तुप् । तस्मात् । प्राणानामितिप्र-अनानाम् । वाक् । उत्तमेत्युत्-तमा । समयाविषितइतिसमया-विषिते । सूर्ये । षोडशिनः । स्तोत्रम् । उपाकरोतीत्युप-आकरोति । एतस्मिन्न् । वै । लोके । इन्द्रः । वृत्रम् । अहन्न् । साक्षादितिस-अक्षात् । एव । वज्रम् । भ्रातृव्याय । प्रेति । हरति । अरुणपिशङ्गइत्यरुण-पिशङ्गः । अश्वः । दक्षिणा । एतत् । वै । वज्रस्य । रूपम् । समृध्याइतिसं-ऋध्यै ॥ [४२] लोकोविदुर्षष्षोडशीगृह्यते यदुक्थ्यैधामकल्पयन्ति सप्तचत्वारिंशच्च ॥ ❋ ❋ ❋ ❋ ॥११॥

सुवर्गायिययद्दाक्षिणानिसमिष्टयजूंष्यवभृथयजूंषिस्फ्येनप्रजापतिरेकादशिनीमिन्द्रः पत्नियाघ्नन्तिदेवावाइन्द्रियवीर्यन्देवावा अदाभ्ये देवावै प्रबाहुक्प्रजापतिर्देवेभ्यस्सरिरिचानष्षोडशधैकादश ॥ ११ ॥ सुवर्गायययजति प्रजास्सौम्येनं गृह्णीयात् प्रत्यञ्चं गृह्णीयात् प्रजांपशू न्त्रिचत्वारिंशत् ॥ ४३ ॥ सुवर्गायवज्रस्यरूपं समृध्यै ॥ ❋ ❋ ❋ ❋ ॥

हरिः ओ (३) म् ॥

इति षष्ठकाण्डे षष्ठः प्रश्नः ॥

तैत्तिरीयसंहितापदपाठे षष्ठकाण्डस्समाप्तः ॥

---

अस्य षष्ठकाण्डस्य प्रश्नादिसंख्यानिर्णयः सप्तमकाण्डान्ते द्रष्टव्यः ॥

॥ श्रीः ॥

# तैत्तिरीयसंहितापदपाठे

## सप्तमकाण्डे प्रथमः प्रश्नः ॥

हरिः ओ (४) म् ॥

प्रजननमितिप्र-जननम् । ज्योतिः । अग्निः । देवतानाम् । ज्योतिः । विराडितिवि-राट् । छन्दसाम् । ज्योतिः । विराडितिवि-राट् । वाचः । अग्नौ । समिति । तिष्ठते । विराजमितिवि-राजम् । अभि । समिति । पद्यते । तस्मात् । तत् । ज्योतिः । उच्यते । द्वौ । स्तोमौ । प्रातस्सवनमितिप्रातः-सवनम् । वहतः । यथा । प्राणइतिप्र-अनः । च । अपानइत्यप-अनः । च । द्वौ । माध्यन्दिनम् । सवनम् । यथा । चक्षुः । च । श्रोत्रम् । च । द्वौ । तृतीयसवनमितितृतीय-सवनम् । यथा । वाक् । च । प्रतिष्ठेतिप्रति-स्था । च । पुरुषसम्मितइतिपुरुष-सम्मितः । वै । एषः । यज्ञः । अस्थूरिः । [१] यम् । कामम् । कामयते । तम् । एतेन । अभीति । अश्नुते । सर्वम् । हि । अस्थूरिणा । अभ्यश्नुतइत्यभि-अश्नुते । अग्निष्टोमेनेत्यग्नि-स्तोमेन । वै । प्रजापतिरितिप्रजा-पतिः । प्रजाइतिप्र-जाः । असृजत । ताः । अग्निष्टोमेनेत्यग्नि-स्तोमेन । एव । परीति । अगृह्णात् । तासाम् । परिगृहीतानामितिपरि-गृहीतानाम् । अश्वतरः । अतीति । अप्रवत । तस्य । अनुहायेत्यनु-हाय । रेतः । एति । अदत्त । तत् । गर्दभे । नीति । अमार्ट् । तस्मात् । गर्दभः । द्विरेताइतिद्वि-रेताः । अथोइति । आहुः । वडबायाम् । नीति । अमार्ट् । इति । तस्मात् । वडबा । द्विरेताइतिद्वि-रेताः । अथोइति । आहुः । ओषधीषु । [२] नीति । अमार्ट् । इति । तस्मात् । ओषधयः । अनभ्यक्ताइत्यनभि-अक्ताः । रेभन्ति । अथोइति । आहुः । प्रजास्वितिप्र-जासु । नीति । अमार्ट् । इति । तस्मात् । यमौ । जायेतेइति । तस्मात् । अश्वतरः । न । प्रेति । जायते । आत्तरेताइत्यात्त-रेताः । हि । तस्मात् । बर्हिषि । अनवक्लृप्तइत्यनव-क्लृप्तः । सर्ववेदसइतिसर्व-वेदसे । वा । सहस्रे । वा । अवक्लृप्तइत्यव-क्लृप्तः । अतीति । हि । अप्रवत । यः । एवम् । विद्वान् ।

अग्निष्टोमेनेत्यग्नि-स्तोमेन । यजते । प्रेति । अजाताः । प्रजाइतिप्र-जाः । जनयति । परीति । प्रजाताइतिप्र-जाताः । गृह्णाति । तस्मात् । आहुः । ज्येष्ठयज्ञइतिज्येष्ठ-यज्ञः । इति । [३] प्रजापतिरितिप्रजा-पतिः । वाव । ज्येष्ठः । सः । हि । एतेन । अग्रे । अयजत । प्रजापतिरितिप्रजा-पतिः । अकामयत । प्रेति । जायेय । इति । सः । मुखतः । त्रिवृतमितित्रि-वृतम् । निरिति । अमिमीत । तम् । अग्निः । देवता । अन्विति । असृज्यत । गायत्री । छन्दः । रथन्तरमितिरथं-तरम् । साम । ब्राह्मणः । मनुष्याणाम् । अजः । पशूनाम् । तस्मात् । ते । मुख्याः । मुखतः । हि । असृज्यन्त । उरसः । बाहुभ्यामितिबाहु-भ्याम् । पञ्चदशमितिपञ्च-दशम् । निरिति । अमिमीत । तम् । इन्द्रः । देवता । अन्विति । असृज्यत । त्रिष्टुप् । छन्दः । बृहत् । [४] साम । राजन्यः । मनुष्याणाम् । अविः । पशूनाम् । तस्मात् । ते । वीर्यावन्तइतिवीर्य-वन्तः । वीर्यात् । हि । असृज्यन्त । मध्यतः । सप्तदशमितिसप्त-दशम् । निरिति । अमिमीत । तम् । विश्वे । देवाः । देवताः । अन्विति । असृज्यन्त । जगती । छन्दः । वैरूपम् । साम । वैश्यः । मनुष्याणाम् । गावः । पशूनाम् । तस्मात् । ते । आद्याः । अन्नधानादित्यन्न-धानात् । हि । असृज्यन्त । तस्मात् । भूयाꣳसः । अन्येभ्यः । भूयिष्ठाः । हि । देवताः । अन्विति । असृज्यन्त । पत्तः । एकविꣳशमित्येक-विꣳशम् । निरिति । अमिमीत । तम् । अनुष्टुबित्यनु-स्तुप् । छन्दः । [५] अन्विति । असृज्यत । वैराजम् । साम । शूद्रः । मनुष्याणाम् । अश्वः । पशूनाम् । तस्मात् । तौ । भूतसङ्क्रामिणाविति भूत-सङ्क्रामिणौ । अश्वः । च । शूद्रः । च । तस्मात् । शूद्रः । यज्ञे । अनवक्लृप्तइत्यनव-क्लृप्तः । न । हि । देवताः । अन्विति । असृज्यत । तस्मात् । पादौ । उपेति । जीवतः । पत्तः । हि । असृज्येताम् । प्राणाइतिप्र-अनाः । वै । त्रिवृदितित्रि-वृत् । अर्धमासाइत्यर्ध-मासाः । पञ्चदशइतिपञ्च-दशः । प्रजापतिरितिप्रजा-पतिः । सप्तदशइतिसप्त-दशः । त्रयः । इमे । लोकाः । असौ । आदित्यः । एकविꣳशइत्येक-विꣳशः । एतस्मिन्न् । वै । एते । श्रिताः । एतस्मिन्न् । प्रतिष्ठिताइतिप्रति-स्थिताः । यः । एवम् । वेद । एतस्मिन्न् । एव । श्रयते । एतस्मिन्न् । प्रतीति । तिष्ठति ॥ [६]

अस्थूरिरोषधीषुज्येष्ठयज्ञइतिबृहदनुष्टुप्छन्दःप्रतिष्ठितानवच ॥ ❀ ❀ ॥१॥

प्रातस्सवनइतिप्रातः-सवने । वै । गायत्रेण । छन्दसा । त्रिवृतइतित्रि-वृते । स्तोमाय । ज्योतिः । दधत् । एति । त्रिवृतेतित्रि-वृता । ब्रह्मवर्चसेनेतिब्रह्म-वर्चसेन । पञ्चदशायेतिपञ्च-दशाय । ज्योतिः । दधत् । एति । पञ्चदशेनेतिपञ्च-दशेन । ओजसा । वीर्येण । सप्तदशायेतिसप्त-दशाय । ज्योतिः । दधत् । एति । सप्तदशेनेतिसप्त-दशेन । प्राजापत्येनेतिप्राजा-पत्येन । प्रजननेनेतिप्र-जननेन । एकविꣳशायेत्येक-विꣳशाय । ज्योतिः । दधत् । एति । स्तोमः । एव । तत् । स्तोमाय । ज्योतिः । दधत् । एति । अथोइति । स्तोमे । एव । स्तोमम् । अभि । प्रेति । नयति । यावन्तः । वै । स्तोमाः । तावन्तः । कामाः । तावन्तः । लोकाः । तावन्ति । ज्योतीꣳषि । एतावतः । एव । स्तोमान् । एतावतः । कामान् । एतावतः । लोकान् । एतावन्ति । ज्योतीꣳषि । अवेति । रुन्धे ॥ [७] तावन्तो लोकास्त्रयोदशच ॥ ❀ ❀ ❀ ❀ ॥२॥

ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । सः । तु । वै । यजेत । यः । अग्निष्टोमेनेत्यग्नि-स्तोमेन । यजमानः । अथ । सर्वस्तोमेनेतिसर्व-स्तोमेन । यजेत । इति । यस्य । त्रिवृतमितित्रि-वृतम् । अन्तर्यन्तीत्यन्तः-यन्ति । प्राणानितिप्र-अनान् । तस्य । अन्तः । यन्ति । प्राणेष्वितिप्र-अनेषु । मे । अपीति । असत् । इति । खलु । वै । यज्ञेन । यजमानः । यजते । यस्य । पञ्चदशमितिपञ्च-दशम् । अन्तर्यन्तीत्यन्तः-यन्ति । वीर्यम् । तस्य । अन्तः । यन्ति । वीर्ये । मे । अपीति । असत् । इति । खलु । वै । यज्ञेन । यजमानः । यजते । यस्य । सप्तदशमितिसप्त-दशम् । अन्तर्यन्तीत्यन्तः-यन्ति । [८] प्रजामितिप्र-जाम् । तस्य । अन्तः । यन्ति । प्रजायामितिप्र-जायाम् । मे । अपीति । असत् । इति । खलु । वै । यज्ञेन । यजमानः । यजते । यस्य । एकविꣳशमित्येक-विꣳशम् । अन्तर्यन्तीत्यन्तः-यन्ति । प्रतिष्ठामितिप्रति-स्थाम् । तस्य । अन्तः । यन्ति । प्रतिष्ठायामितिप्रति-स्थायाम् । मे । अपीति । असत् । इति । खलु । वै । यज्ञेन । यजमानः । यजते । यस्य । त्रिणवमितित्रि-नवम् । अन्तर्यन्तीत्यन्तः-यन्ति । ऋ

तून् । च । तस्य । नक्षत्रियाम् । च । विराजमितिवि-राजम् । अन्तः । यन्ति । ऋतुषु । मे । अपीति । असत् । नक्षत्रियायाम् । च । विराजीतिवि-राजि । इति । [९] खलु । वै । यज्ञेन । यजमानः । यजते । यस्य । त्रयस्त्रिंꣳशमितित्रयः-त्रिंꣳशम् । अन्तर्यन्तीत्यन्तः-यन्ति । देवताः । तस्य । अन्तः । यन्ति । देवतासु । मे । अपीति । असत् । इति । खलु । वै । यज्ञेन । यजमानः । यजते । यः । वै । स्तोमानाम् । अवमम् । परमताम् । गच्छन्तम् । वेद । परमताम् । एव । गच्छति । त्रिवृदितित्रि-वृत् । वै । स्तोमानाम् । अवमः । त्रिवृदितित्रि-वृत् । परमः । यः । एवम् । वेद । परमताम् । एव । गच्छति ॥ [१०] सप्तदशमन्तर्यन्तिविराजीति चतुश्चत्वारिꣳशच्च ॥ ❀ ❀ ❀ ❀ ॥३॥

अङ्गिरसः । वै । सत्रम् । आसत । ते । सुवर्गमितिसुवः-गम् । लोकम् । आयन्न् । तेषाम् । हविष्मान् । च । हविष्कृदितिहविः-कृत् । च । अहीयेताम् । तौ । अकामयेताम् । सुवर्गमितिसुवः-गम् । लोकम् । इयाव । इति । तौ । एतम् । द्विरात्रमितिद्वि-रात्रम् । अपश्यताम् । तम् । एति । अहरताम् । तेन । अयजेताम् । ततः । वै । तौ । सुवर्गमितिसुवः-गम् । लोकम् । ऐताम् । यः । एवम् । विद्वान् । द्विरात्रेणेतिद्वि-रात्रेण । यजते । सुवर्गमितिसुवः-गम् । एव । लोकम् । एति । तौ । ऐताम् । पूर्वेण । अह्ना । अगच्छताम् । उत्तरेणेत्युत्-तरेण । [११] अभिप्लव इत्यभि-प्लवः । पूर्वम् । अहः । भवति । गतिः । उत्तरमित्युत्-तरम् । ज्योतिष्टोम इतिज्योतिः-स्तोमः । अग्निष्टोमइत्यग्नि-स्तोमः । पूर्वम् । अहः । भवति । तेजः । तेन । अवेति । रुन्धे । सर्वस्तोमइतिसर्व-स्तोमः । अतिरात्रइत्यति-रात्रः । उत्तरमित्युत्-तरम् । सर्वस्य । आप्त्यै । सर्वस्य । अवरुध्याइत्यव-रुध्यै । गायत्रम् । पूर्वे । अहन्न् । साम । भवति । तेजः । वै । गायत्री । गायत्री । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । तेजः । एव । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । आत्मन्न् । धत्ते । त्रैष्टुभम् । उत्तरइत्युत्-तरे । ओजः । वै । वीर्यम् । त्रिष्टुक् । ओजः । एव । वीर्यम् । आत्मन्न् । धत्ते । रथन्तरमितिरथं-तरम् । पूर्वे । [१२] अहन्न् । साम । भवति । इयम् । वै । रथन्तरमितिरथं-तरम् । अस्याम् । एव । प्रतीति । तिष्ठति । बृहत् । उ

त्तरइत्युत्-तरे । असौ । वै । बृहत् । अमुष्याम् । एव । प्रतीति । तिष्ठति । तत् । आहुः । कं । जगती । च । अनुष्टुबित्यनु-स्तुप् । च । इति । वैखानसम् । पूर्वे । अहन्न् । साम । भवति । तेन । जगत्यै । न । एति । षोडशि । उत्तरइत्युत्-तरे । तेन । अनुष्टुभइत्यनु-स्तुभः । अथ । आहुः । यत् । समाने । अर्धमासइत्यर्ध-मासे । स्याताम् । अन्यतरस्य । अह्नः । वीर्यम् । अन्विति । पद्येत । इति । अमावास्याया मित्यमा-वास्यायाम् । पूर्वम् । अहः । भवति । उत्तरस्मिन्नित्युत्-तरस्मिन्न् । उत्तरमि त्युत्-तरम् । नाना । एव । अर्धमासयोरित्यर्ध-मासयोः । भवतः । नानावीर्येइति नाना-वीर्ये । भवतः । हविष्मन्निधनमितिहविष्मत्-निधनम् । पूर्वम् । अहः । भवति । हविष्कृन्निधनमितिहविष्कृत्-निधनम् । उत्तरमित्युत्-तरम् । प्रतिष्ठित्याइतिप्रति-स्थित्यै ॥ [१३] उत्तरेणरथन्तरम्पूर्वेऽन्वेकविंशतिश्च ॥ ❀ ॥ ४ ॥

आपः । वै । इदम् । अग्रे । सलिलम् । आसीत् । तस्मिन्न् । प्रजापतिरितिप्रजा-पतिः । वायुः । भूत्वा । अचरत् । सः । इमाम् । अपश्यत् । ताम् । वराहः । भूत्वा । एति । अहरत् । ताम् । विश्वकर्मेतिविश्व-कर्मा । भूत्वा । वीति । अमार्ट् । सा । अप्रथत । सा । पृथिवी । अभवत् । तत् । पृथिव्यै । पृथिवित्वमितिपृथिवि-त्वम् । त स्याम् । अश्राम्यत् । प्रजापतिरितिप्रजा-पतिः । सः । देवान् । असृजत । वसून् । रुद्रान् । आदित्यान् । ते । देवाः । प्रजापतिमितिप्रजा-पतिम् । अब्रुवन्न् । प्रेति । जायामहै । इति । सः । अब्रवीत् । [१४] यथा । अहम् । युष्मान् । तपसा । असृ क्षि । एवम् । तपसि । प्रजननमितिप्र-जननम् । इच्छध्वम् । इति । तेभ्यः । अग्निम् । आयतनमित्या-यतनम् । प्रेति । अयच्छत् । एतेन । आयतनेनेत्या-यतनेन । श्रा म्यत । इति । ते । अग्निना । आयतनेनेत्या-यतनेन । अश्राम्यन्न् । ते । सँवँथ्सर इतिसं-वथ्सरे । एकाम् । गाम् । असृजन्त । ताम् । वसुभ्यइतिवसु-भ्यः । रुद्रेभ्यः । आदित्येभ्यः । प्रेति । अयच्छन्न् । एताम् । रक्षध्वम् । इति । ताम् । वसवः । रुद्राः । आदित्याः । अरक्षन्त । सा । वसुभ्यइतिवसु-भ्यः । रुद्रेभ्यः । आदित्येभ्यः । प्रेति । अजायत । त्रीणि । च । [१५] शतानि । त्रयस्त्रिꣳशतमितित्रयः-त्रिꣳ शतम् । च । अथ । सा । एव । सहस्रतमीतिसहस्र-तमी । अभवत् । ते । देवाः ।

प्रजापतिमितिप्रजा-पतिम् । अन्ववन्न् । सहस्रेण । नः । याजय । इति । सः । अ
ग्निष्टोमेनेत्यग्नि-स्तोमेन । वसून् । अयाजयत् । ते । इमम् । लोकम् । अजयन्न् ।
तत् । च । अददुः । सः । उक्थ्येन । रुद्रान् । अयाजयत् । ते । अन्तरिक्षम् । अ
जयन्न् । तत् । च । अददुः । सः । अतिरात्रेणेत्यति-रात्रेण । आदित्यान् । अया
जयत् । ते । अमुम् । लोकम् । अजयन्न् । तत् । च । अददुः । तत् । अन्तरिक्षम् ।
[ १६ ] व्यवैर्यतेतिवि-अवैर्यत । तस्मात् । रुद्राः । घातुकाः । अनायतनाइत्यना-य
तनाः । हि । तस्मात् । आहुः । शिथिलम् । वै । मध्यमम् । अहः । त्रिरात्रस्येतित्रि-रा
त्रस्य । वीति । हि । तत् । अवैर्यतेत्यव-ऐर्यत । इति । त्रैष्टुभम् । मध्यमस्य । अह्नः ।
आज्यम् । भवति । सय्यानानीतिसं-यानानि । सूक्तानीतिसु-उक्तानि । शंसति ।
षोडशिनम् । शंसति । अह्नः । धृत्यै । अशिथिलम्भावायेत्यशिथिलं-भावाय ।
तस्मात् । त्रिरात्रस्येतित्रि-रात्रस्य । अग्निष्टोमइत्यग्नि-स्तोमः । एव । प्रथमम् । अ
हः । स्यात् । अथ । उक्थ्यः । अथ । अतिरात्रइत्यति-रात्रः । एषाम् । लोका
नाम् । विधृत्याइतिवि-धृत्यै । त्रीणित्रीणीतित्रीणि-त्रीणि । शतानि । अनूचीना
हमित्यनूचीन-अहम् । अव्यवच्छिन्नानीत्यवि-अवच्छिन्नानि । ददाति । [ १७ ]
एषाम् । लोकानाम् । अन्विति । सन्तत्याइतिसं-तत्यै । दशतम् । न । वीति ।
छिन्द्यात् । विराजमितिवि-राजम् । न । इत् । विच्छिन्नदानीतिवि-छिन्नदानि । इ
ति । अथ । या । सहस्रतमीतिसहस्र-तमी । आसीत् । तस्याम् । इन्द्रः । च । विष्णुः ।
च । व्यायच्छेतामितिवि-आयच्छेताम् । सः । इन्द्रः । अमन्यत । अनया । वै । इदम् ।
विष्णुः । सहस्रम् । वर्क्ष्यते । इति । तस्याम् । अकल्पेताम् । द्विभागइतिद्वि-भागे । इ
न्द्रः । तृतीये । विष्णुः । तत् । वै । एषा । अभ्यनूच्यतइत्यभि-अनूच्यते । उभा । जि
ग्यथुः । इति । ताम् । वै । एताम् । अच्छावाकः । [ १८ ] एव । शंसति । अ
थ । या । सहस्रतमीतिसहस्र-तमी । सा । होत्रे । देया । इति । होतारम् । वै । अ
भ्यतिरिच्यतइत्यभि-अतिरिच्यते । यत् । अतिरिच्यतइत्यति-रिच्यते । होता । अ
नासस्य । आपयिता । अथ । आहुः । उन्नेत्रइत्युत्-नेत्रे । देया । इति । अतिरि
क्तेत्यति-रिक्ता । वै । एषा । सहस्रस्य । अतिरिक्तइत्यति-रिक्तः । उन्नेतेत्युत्-ने

ता । ऋत्विजाम् । अथ । आहुः । सर्वेभ्यः । सदस्येभ्यः । देया । इति । अथ । आहुः । उदाकृत्येत्युत्-आकृत्या । सा । वशम् । चरेत् । इति । अथ । आहुः । ब्रह्मणे । च । अग्नीधइत्यग्नि-इधे । च । देया । इति । [१९] द्विभागमितिद्वि-भागम् । ब्रह्मणे । तृतीयम् । अग्नीधइत्यग्नि-इधे । ऐन्द्रः । वै । ब्रह्मा । वैष्णवः । अग्नीदित्यग्नि-इत् । यथा । एव । तौ । अकल्पेताम् । इति । अथ । आहुः । या । कल्याणी । बहुरूपेतिबहु-रूपा । सा । देया । इति । अथ । आहुः । या । द्विरूपेति द्वि-रूपा । उभयतएनीत्युभयतः-एनी । सा । देया । इति । सहस्रस्य । परिगृहीत्याइतिपरि-गृहीत्यै । तत् । वै । एतत् । सहस्रस्य । अयनम् । सहस्रम् । स्तोत्रीयाः । सहस्रम् । दक्षिणाः । सहस्रसम्मितइतिसहस्र-सम्मितः । सुवर्गइतिसुवः-गः । लोकः । सुवर्गस्येतिसुवः-गस्य । लोकस्य । अभिजित्याइत्यभि-जित्यै ॥ [२०] अब्रवीन्नृतदन्तरिक्षन्ददात्यच्छावाकश्चदे येतिसप्तचत्वारिꣳशच ॥ ❋ ॥५॥

सोमः । वै । सहस्रम् । अविन्दत् । तम् । इन्द्रः । अन्विति । अविन्दत् । तौ । यमः । न्यागच्छदितिनि-आगच्छत् । तौ । अब्रवीत् । अस्तु । मे । अत्र । अपीति । इति । अस्तु । ही (३) । इति । अब्रूताम् । सः । यमः । एकस्याम् । वीर्यम् । परीति । अपश्यत् । इयम् । वै । अस्य । सहस्रस्य । वीर्यम् । बिभर्ति । इति । तौ । अब्रवीत् । इयम् । मम । अस्तु । एतत् । युवयोः । इति । तौ । अब्रूताम् । सर्वं । वै । एतत् । एतस्याम् । वीर्यम् । [२१] परीति । पश्यामः । अꣳशम् । एति । ह्रामहै । इति । तस्याम् । अꣳशम् । एति । अहरन्त । ताम् । अप्स्वित्यप्-सु । प्रेति । अवेशयन्न् । सोमाय । उदेहीत्युत्-एहि । इति । सा । रोहिणी । पिङ्गला । एकहायनीत्येक-हायनी । रूपम् । कृत्वा । त्रयस्त्रिꣳशतेतित्रयः-त्रिꣳशता । च । त्रिभिरितित्रि-भिः । च । शतैः । सह । उदैदित्युत्-ऐत् । तस्मात् । रोहिण्या । पिङ्गलया । एकहायन्येत्येक-हायन्या । सोमम् । क्रीणीयात् । यः । एवम् । विद्वान् । रोहिण्या । पिङ्गलया । एकहायन्येत्येक-हायन्या । सोमम् । क्रीणाति । त्रयस्त्रिꣳशतेतित्रयः-त्रिꣳशता । च । एव । अस्य । त्रिभिरितित्रि-भिः । च । [२२] शतैः । सोमः । क्रीतः । भवति । सुक्रीतेनेतिसु-क्रीतेन । यज

ते । ताम् । अप्स्वित्यप्-सु । प्रेति । अवेशयन्न् । इन्द्राय । उदेहीत्युत्-एहि । इति । सा । रोहिणी । लक्ष्मणा । पष्ठौही । वार्त्रघ्नीतिवार्त्र-घ्नी । रूपम् । कृत्वा । त्रयं स्त्रिꣳशतेतित्रयः-त्रिꣳशता । च । त्रिभिरितित्रि-भिः । च । शतैः । सह । उदैदि त्युत्-ऐत् । तस्मात् । रोहिणीम् । लक्ष्मणाम् । पष्ठौहीम् । वार्त्रघ्नीमितिवार्त्र-घ्नीम् । दद्यात् । यः । एवम् । विद्वान् । रोहिणीम् । लक्ष्मणाम् । पष्ठौहीम् । वार्त्रघ्नीमि तिवार्त्र-घ्नीम् । ददाति । त्रयस्त्रिꣳशदितित्रयः-त्रिꣳशत् । च । एव । अस्य । त्रीणि । च । शतानि । सा । दत्ता । [२३] भवति । ताम् । अप्स्वित्यप्-सु । प्रेति । अवेशयन्न् । यमाय । उदेहीत्युत्-एहि । इति । सा । जरती । मूर्खा । तज्जघन्येतितत्-जघन्या । रूपम् । कृत्वा । त्रयस्त्रिꣳशतेतित्रयः-त्रिꣳशता । च । त्रिभिरितित्रि-भिः । च । शतैः । सह । उदैदित्युत्-ऐत् । तस्मात् । जरतीम् । मूर्खाम् । तज्जघन्यामितितत्-जघन्याम् । अनुस्तरणीमित्यनु-स्तरणीम् । कुर्वीत । यः । एवम् । विद्वान् । जरतीम् । मूर्खाम् । तज्जघन्यामितितत्-जघन्याम् । अनुस्तरणीमित्यनु-स्तरणीम् । कुरुते । त्रयस्त्रिꣳशदितित्रयः-त्रिꣳशत् । च । एव । अस्य । त्रीणि । च । शतानि । सा । अमुष्मिन्न् । लोके । भवति । वाक् । एव । सहस्रतमीतिसहस्र-तमी । तस्मात् । [२४] वरः । देयः । सा । हि । वरः । सहस्रम् । अस्य । सा । दत्ता । भवति । तस्मात् । वरः । न । प्रतिगृह्यइतिप्रति-गृह्यः । सा । हि । वरः । सहस्रम् । अस्य । प्रतिगृहीतमितिप्रति-गृहीतम् । भवति । इयम् । वरः । इति । ब्रूयात् । अथ । अन्याम् । ब्रूयात् । इयम् । मम । इति । तथा । अस्य । तत् । सहस्रम् । अप्रतिगृहीतमित्यप्रति-गृहीतम् । भवति । उभयतएनीत्युभयतः-एनी । स्यात् । तत् । आहुः । अन्यतएनीत्यन्यतः-एनी । स्यात् । सहस्रम् । परस्तात् । एतम् । इति । या । एव । वरः । [२५] कल्याणी । रूपसमृद्धेतिरूप-समृद्धा । सा । स्यात् । सा । हि । वरः । समृध्याइतिसं-ऋध्यै । ताम् । उत्तरेणेत्युत्-तरेण । आ ग्नीध्रमित्याग्नि-इध्रम् । पर्याणीयेतिपरि-आनीय । आहवनीयस्येत्या-हवनीयस्य । अन्ते । द्रोणकलशमितिद्रोण-कलशम् । अवेति । घ्रापयेत् । एति । जिघ्र । क लशम् । महि । उरुधारेत्युरु-धारा । पयस्वती । एति । त्वा । विशन्तु । इन्दवः ।

समुद्रम् । इव । सिन्धवः । सा । मा । सहस्रं । एतिं । भज । प्रजयेतिप्र-जया । पशुभिरितिपशु-भिः । सह । पुनः । मा । एतिं । विशतात् । रयिः । इतिं । प्रजयेतिप्र-जया । एव । एनम् । पशुभिरितिपशु-भिः । रय्या । समिति । [२६] अर्धयति । प्रजावानितिप्रजा-वान् । पशुमानितिपशु-मान् । रयिमानितिरयि-मान् । भवति । यः । एवम् । वेद । तया । सह । आग्नीध्रमित्याग्नि-इध्रम् । परेत्येतिपरा-इत्य । पुरस्तात् । प्रतीच्याम् । तिष्ठन्त्याम् । जुहुयात् । उभा । जिग्यथुः । न । पराति । जयेथेइति । न । परेति । जिग्ये । कतरः । चन । एनोः ॥ इन्द्रः । च । विष्णोइति । यत् । अपस्पृधेथाम् । त्रेधा । सहस्रम् । वीति । तत् । ऐरयेथाम् । इति । त्रेधाविभक्तमितित्रेधा-विभक्तम् । वै । त्रिरात्रइतित्रि-रात्रे । सहस्रम् । साहस्रीम् । एव । एनाम् । करोति । सहस्रस्य । एव । एनाम् । मात्राम् । [२७] करोति । रूपाणि । जुहोति । रूपैः । एव । एनाम् । समिति । अर्धयति । तस्याः । उपोत्थायेत्युप-उत्थाय । कर्णम् । एतिं । जपेत् । इडे । रन्ते । अदिते । सरस्वति । प्रिये । प्रेयसि । महि । विश्रुतीतिवि-श्रुति । एतानि । ते । अघ्निये । नामानि । सुकृतमितिसु-कृतम् । मा । देवेषु । ब्रूतात् । इति । देवेभ्यः । एव । एनम् । एति । वेदयति । अन्विति । एनम् । देवाः । बुध्यन्ते ॥ [२८] एतदेतस्याँव्वीर्यमस्यात्रिभिश्चदत्तासंहस्रतमीतस्यादेववरस्सम्मात्रमेकान्नचत्वारिꣳशच्च ॥ ❀ ॥ ६ ॥

सहस्रतम्येतिसहस्र-तम्या । वै । यजमानः । सुवर्गमितिसुवः-गम् । लोकम् । एति । सा । एनम् । सुवर्गमितिसुवः-गम् । लोकम् । गमयति । सा । मा । सुवर्गमितिसुवः-गम् । लोकम् । गमय । इति । आह । सुवर्गमितिसुवः-गम् । एव । एनम् । लोकम् । गमयति । सा । मा । ज्योतिष्मन्तम् । लोकम् । गमय । इति । आह । ज्योतिष्मन्तम् । एव । एनम् । लोकम् । गमयति । सा । मा । सर्वान् । पुण्यान् । लोकान् । गमय । इति । आह । सर्वान् । एव । एनम् । पुण्यान् । लोकान् । गमयति । सा । [२९] मा । प्रतिष्ठामितिप्रति-स्थाम् । गमय । प्रजयेतिप्र-जया । पशुभिरितिपशु-भिः । सह । पुनः । मा । एतिं । विशतात् । रयिः । इति । प्रजयेतिप्र-जया । एव । एनम् । पशुभिरितिपशु-भिः । रय्याम् । प्रतीति । स्थाप

य ते । प्रजावानितिप्रजा-वान् । पशुमानितिपशु-मान् । रयिमानितिरयि-मान् । भवति । यः । एवम् । वेदं । ताम् । अग्नीधइत्यग्नि-इधें । वा । ब्रह्मणें । वा । होत्रें । वा । उद्गात्रइत्युंत्-गात्रे । वा । अध्वर्यवें । वा । दद्यात् । सहस्रंम् । अस्य । सा । दत्ता । भवति । सहस्रंम् । अस्य । प्रतिंगृहीतमितिप्रतिं-गृहीतम् । भवति । यः । ताम् । अविंद्वान् । [३०] प्रतिगृह्णातीतिंप्रति-गृह्णातिं । ताम् । प्रतीतिं । गृह्णीयात् । एकां । असि । न । सहस्रंम् । एकांम् । त्वा । भूताम् । प्रतीतिं । गृह्णामि । न । सहस्रंम् । एकां । मा । भूता । एतिं । विश । मा । सहस्रंम् । इतिं । एकाम् । एव । एनाम् । भूताम् । प्रतीतिं । गृह्णाति । न । सहस्रंम् । यः । एवम् । वेदं । स्योना । असि । सुषदेतिसु-सदां । सुशेवेतिसु-शेवां । स्योना । मा । एतिं । विश । सुषदेतिसु-सदां । मा । एतिं । विश । सुशेवेतिसु-शेवां । मा । एतिं । विश । [३१] इतिं । आह । स्योना । एव । एनम् । सुषदेतिसु-सदां । सुशेवेतिसु-शेवां । भूता । एतिं । विशति । न । एनम् । हिनस्तिं । ब्रह्मवादिनइतिब्रह्म-वादिनंः । वदन्ति । सहस्रंम् । सहस्रतमीतिसहस्र-तमी । अन्विंतिं । एती (३) । सहस्रतमीमितिं सहस्र-तमीम् । सहस्रा (३) म् । इतिं । यत् । प्राचींम् । उत्सृजेदित्युत् सृजेत् । सहस्रंम् । सहस्रतमीतिसहस्र-तमी । अन्विंतिं । इयात् । तत् । सहस्रंम् । अप्रज्ञात्रमित्यंप्र-ज्ञात्रम् । सुवर्गमितिंसुवः-गम् । लोकम् । न । प्रेतिं । जानीयात् । प्रतीचींम् । उदिति । सृजति । ताम् । सहस्रंम् । अन्विंतिं । पर्यावंर्ततइतिंपरि-आवंर्तते । सा । प्रजानतीतिंप्र-जानती । सुवर्गमितिंसुवः-गम् । लोकम् । एति । यजमानम् । अभि । उदिति । सृजति । क्षिप्रे । सहस्रंम् । प्रेतिं । जायते । उत्तमेत्युंत्-तमा । नीयतें । प्रथमा । देवान् । गच्छति ॥ [३२] लोकान्गंमयति साऽविंद्वान् थ्सुशेवामाऽऽविंशयजंमानन्द्वादंशच ॥ ❀ ❀ ॥ ७ ॥

अत्रिः । अददात् । औवींय । प्रजामितिप्र-जाम् । पुत्रकांमायेतिपुत्र-कामाय । सः । रिरिचानः । अमन्यत । निर्वींर्यइतिनिः-वीर्यः । शिथिलः । यातयामेतियात-यामा । सः । एतम् । चतूरात्रमितिचतुः-रात्रम् । अपश्यत् । तम् । एतिं । अहरत् । तेनं । अयजत । ततंः । वै । तस्यं । चत्वारंः । वीराः । एतिं । अ

जायन्ते । सुहोतेतिसु-होता । सूद्गातेतिसु-उद्गाता । स्वध्वर्युरितिसु-अध्वर्युः । सुसंभेयइतिसु-सभेयः । यः । एवम् । विद्वान् । चतूरात्रेणेतिचतुः-रात्रेण । यजते । एति । अस्य । चत्वारः । वीराः । जायन्ते । सुहोतेतिसु-होता । सूद्गातेतिसु-उद्गाता । स्वध्वर्युरितिसु-अध्वर्युः । सुसंभेयइतिसु-सभेयः । ये । चतुर्विंशाइतिचतुः-विंशाः । पवमानाः । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । तत् । [ ३३ ] ये । उद्यन्तइत्युत् यन्तः । स्तोमाः । श्रीः । सा । अत्रिम् । श्रद्धादेवमितिश्रद्धा-देवम् । यजमानम् । चत्वारि । वीर्याणि । न । उपेति । अनमन्न् । तेजः । इन्द्रियम् । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । अन्नाद्यमित्यन्न-अद्यम् । सः । एतान् । चतुरः । चतुष्टोमानितिचतुः-स्तोमान् । सोमान् । अपश्यत् । तान् । एति । अहरत् । तैः । अयजत । तेजः । एव । प्रथमेन । अवेति । अरुन्ध । इन्द्रियम् । द्वितीयेन । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । तृतीयेन । अन्नाद्यमित्यन्न-अद्यम् । चतुर्थेन । यः । एवम् । विद्वान् । चतुरः । चतुष्टोमानितिचतुः-स्तोमान् । सोमान् । आहरतीत्या-हरति । तैः । यजते । तेजः । एव । प्रथमेन । अवेति । रुन्धे । इन्द्रियम् । द्वितीयेन । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । तृतीयेन । अन्नाद्यमित्यन्न-अद्यम् । चतुर्थेन । याम् । एव । अत्रिः । ऋद्धिम् । आर्ध्नोत् । ताम् । एव । यजमानः । ऋध्नोति ॥ [३४]

तत्तेजएवाष्टादशच ॥ ❀ ❀ ❀ ❀ ॥ ८ ॥

जमदग्निः । पुष्टिकामइतिपुष्टि कामः । चतूरात्रेणेतिचतुः रात्रेण । अयजत । सः । एतान् । पोषान् । अपुष्यत् । तस्मात् । पलितौ । जामदग्नियौ । न । समिति । जानातेइति । एतान् । एव । पोषान् । पुष्यति । यः । एवम् । विद्वान् । चतूरात्रेणेतिचतुः-रात्रेण । यजते । पुरोडाशिन्यः । उपसदइत्युप-सदः । भवन्ति । पशवः । वै । पुरोडाशः । पशून् । एव । अवेति । रुन्धे । अन्नम् । वै । पुरोडाशः । अन्नम् । एव । अवेति । रुन्धे । अन्नादइत्यन्न-अदः । पशुमानितिपशु-मान् । भवति । यः । एवम् । विद्वान् । चतूरात्रेणेतिचतुः-रात्रेण । यजते ॥ [ ३५ ] जमदग्निरष्टाचत्वारिंशत् ॥ ❀ ❀ ❀ ॥ ९ ॥

संवथ्सरइतिसं-वथ्सरः । वै । इदम् । एकः । आसीत् । सः । अकामयत ।

ऋतून् । सृजेय । इति । सः । एतम् । पञ्चरात्रमितिपञ्च-रात्रम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । ऋतून् । असृजत । यः । एवम् । विद्वान् । पञ्चरात्रेणेतिपञ्च-रात्रेण । यजते । प्रेति । एव । जायते । ते । ऋतवः । सृष्टाः । न । व्यावर्तन्तेतिवि-आवर्तन्त । ते । एतम् । पञ्चरात्रमितिपञ्च-रात्रम् । अपश्यन्न् । तम् । एति । अहरन्न् । तेन । अयजन्त । ततः । वै । ते । व्यावर्तन्तेतिवि-आवर्तन्त । [ ३६ ] यः । एवम् । विद्वान् । पञ्चरात्रेणेतिपञ्च-रात्रेण । यजते । वीति । पाप्मना । भ्रातृव्येण । एति । वर्तते । सार्वसेनिरितिसार्व-सेनिः । शौचेयः । अकामयत । पशुमानितिपशु-मान् । स्याम् । इति । सः । एतम् । पञ्चरात्रमितिपञ्च-रात्रम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । सहस्रम् । पशून् । प्रेति । आप्नोत् । यः । एवम् । विद्वान् । पञ्चरात्रेणेतिपञ्च-रात्रेण । यजते । प्रेति । सहस्रम् । पशून् । आप्नोति । बबरः । प्रावाहणिः । अकामयत । वाचः । प्रवदितेतिप्र-वदिता । स्याम् । इति । सः । एतम् । पञ्चरात्रमितिपञ्च-रात्रम् । एति । [ ३७ ] अहरत् । तेन । अयजत । ततः । वै । सः । वाचः । प्रवदितेतिप्र-वदिता । अभवत् । यः । एवम् । विद्वान् । पञ्चरात्रेणेतिपञ्च-रात्रेण । यजते । प्रवदितेतिप्र-वदिता । एव । वाचः । भवति । अथोइति । एनम् । वाचः । पतिः । इति । आहुः । अनाप्तः । चतूरात्रइतिचतुः-रात्रः । अतिरिक्तइत्यति-रिक्तः । षड्रात्रइतिषट्-रात्रः । अथ । वै । एषः । सम्प्रतीतिसं-प्रति । यज्ञः । यत् । पञ्चरात्रइतिपञ्च-रात्रः । यः । एवम् । विद्वान् । पञ्चरात्रेणेतिपञ्च-रात्रेण । यजते । सम्प्रतीतिसं-प्रति । एव । यज्ञेन । यजते । पञ्चरात्रइतिपञ्च-रात्रः । भवति । पञ्च । वै । ऋतवः । सँवथ्सरइतिसं-वथ्सरः । [ ३८ ] ऋतुषु । एव । सँवथ्सरइतिसं-वथ्सरे । प्रतीति । तिष्ठति । अथोइति । पञ्चाक्षरेतिपञ्च-अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे । त्रिवृदितित्रि-वृत् । अग्निष्टोमइत्यग्नि-स्तोमः । भवति । तेजः । एव । अवेति । रुन्धे । पञ्चदशइतिपञ्च-दशः । भवति । इन्द्रियम् । एव । अवेति । रुन्धे । सप्तदशइतिसप्त-दशः । भवति । अन्नाद्यस्येत्यन्न-अद्यस्य । अवरुध्याइत्यव-रुध्यै । अथोइति । प्रेति । एव । तेन । जायते । प्र

त्रिवि॒ꣳशइतिपञ्च-वि॒ꣳशः। अ॒ग्नि॒ष्टो॒मइत्य॑ग्नि-स्तो॒मः। भ॒व॒ति॒। प्र॒जाप॑तेरि॒तिप्र॒जा-प॒तेः। आप्त्यै॑। म॒हा॒व्र॒तवा॒निति॑महाव्र॒त-वा॒न्। अ॒न्ना॒द्य॑स्येत्य॑न्न-अ॒द्य॑स्य। अव॑रुध्या॒ इत्यव॑-रु॒ध्यै॒। वि॒श्व॒जिदि॒ति॑विश्व-जित्। सर्व॑पृष्ठइ॒तिसर्व॑-पृ॒ष्ठः। अ॒ति॒रा॒त्रइत्य॑ति-रा॒त्रः। भ॒व॒ति॒। सर्व॑स्य। अ॒भिजि॑त्या॒इत्य॒भि-जि॒त्यै॒॥ [३९] तेव्याव॑र्तन्तप्रवदि॒तास्यामि॒ति॒सए॒तम्प॑ञ्चरा॒त्रमासँ॑व्व॒थ्स॒रोऽभिजि॑त्यै॥ ❀ ❀ [१०]

दे॒वस्य॑। त्वा॒। स॒वि॒तुः। प्र॒स॒वइति॑प्र-स॒वे। अ॒श्विनोः॑। बा॒हुभ्या॒मिति॑बा॒हु-भ्या॒म्। पू॒ष्णः। हस्ता॑भ्याम्। एति॑। द॒दे॒। इ॒माम्। अगृ॑भ्ण॒न्। र॒श॒नाम्। ऋ॒तस्य॑। पूर्वे॑। आयु॑षि। वि॒दथे॑षु। क॒व्या॥ तया॑। दे॒वाः। सु॒तम्। एति॑। ब॒भू॒वुः। ऋ॒तस्य॑। साम॑न्। स॒रम्। आ॒रप॒न्तीत्या॑-रप॑न्ती॥ अ॒भि॒धाइत्य॑भि-धाः। अ॒सि॒। भु॒व॑नम्। अ॒सि॒। य॒न्ता। अ॒सि॒। ध॒र्ता। अ॒सि॒। सः। अ॒ग्निम्। वै॒श्वा॒न॒रम्। सप्र॑थ॒समि॒ति॒स-प्र॒थस॒म्। ग॒च्छ॒। स्वाहा॑कृ॒तइ॒ति॒स्वाहा॑-कृ॒तः। पृ॒थि॒व्याम्। य॒न्ता। राट्। य॒न्ता। अ॒सि॒। यम॑नः। ध॒र्ता। अ॒सि॒। ध॒रुण॑ः। कृ॒ष्यै। त्वा॒। क्षेमा॑य। त्वा॒। र॒य्यै। त्वा॒। पोषा॑य। त्वा॒। पृ॒थि॒व्यै। त्वा॒। अ॒न्तरि॑क्षाय। त्वा॒। दि॒वे। त्वा॒। स॒ते। त्वा॒। अस॑ते। त्वा॒। अ॒द्भ्यइत्य॑त्-भ्यः। त्वा॒। ओष॑धीभ्य॒इत्योष॑धि-भ्य॒ः। त्वा॒। विश्वे॑भ्यः। त्वा॒। भू॒तेभ्य॑ः॥ [४०] ध॒रु॒णःप॑ञ्चवि॒ꣳशतिश्च॥ ❀ ॥११॥

वि॒भूरिति॑वि-भूः। मा॒त्रा। प्र॒भूरिति॑प्र-भूः। पि॒त्रा। अश्व॑ः। अ॒सि॒। हय॑ः। अ॒सि॒। अत्य॑ः। अ॒सि॒। नर॑ः। अ॒सि॒। अर्वा॑। अ॒सि॒। सप्ति॑ः। अ॒सि॒। वा॒जी। अ॒सि॒। वृषा॑। अ॒सि॒। नृ॒मणा॒इति॑नृ-मना॑ः। अ॒सि॒। ययु॑ः। नाम॑। अ॒सि॒। आ॒दि॒त्याना॑म्। पत्व॑। अ॒न्विति॑। इ॒हि॒। अ॒ग्नये॑। स्वाहा॑। स्वाहा॑। इ॒न्द्रा॒ग्निभ्या॒मिती॑न्द्रा॒ग्नि-भ्या॒म्। स्वाहा॑। प्र॒जाप॑तय॒इति॑प्र॒जा-प॒तये॑। स्वाहा॑। विश्वे॑भ्यः। दे॒वेभ्य॑ः। स्वाहा॑। सर्वा॑भ्यः। दे॒वता॑भ्यः। इ॒ह। धृति॑ः। स्वाहा॑। इ॒ह। विधृ॑ति॒रिति॒वि धृ॒तिः। स्वाहा॑। इ॒ह। रन्ति॑ः। स्वाहा॑। इ॒ह। रम॑तिः। स्वाहा॑। भूः। अ॒सि॒। भु॒वे। त्वा॒। भव्या॑य। त्वा॒। भ॒वि॒ष्य॒ते। त्वा॒। विश्वे॑भ्यः। त्वा॒। भू॒तेभ्य॑ः। देवा॑ः। आ॒शा॒पा॒ला॒इत्या॑शा-पा॒लाः। ए॒तम्। दे॒वेभ्य॑ः। अश्व॑म्। मेधा॑य। प्रोक्षि॑त॒मिति॒प्र-उ॒क्षि॒त॒म्। गो॒पा॒य॒त॒॥ [४१] रन्ति॒स्स्वाहा॒द्वावि॒ꣳशतिश्च॥ ❀ ॥१२॥

आयंनायेत्या-अयंनाय । स्वाहा । प्रायंणायेतिप्र-अयंनाय । स्वाहा । उद्द्रावायेत्युत्-द्रावाय । स्वाहा । उद्द्रुतायेत्युत्-द्रुताय । स्वाहा । शूकारायेतिशू-कारा‌य । स्वाहा । शूकृतायेतिशू-कृताय । स्वाहा । पलायिताय । स्वाहा । आपलायितायेत्या-पलायिताय । स्वाहा । आवल्गतइत्या-वल्गते । स्वाहा । परावल्गतइतिपरा-वल्गते । स्वाहा । आयतइत्या-यते । स्वाहा । प्रयतइतिप्र-यते । स्वाहा । सर्वस्मै । स्वाहा ॥ [ ४२ ] आयंनायोत्तरमापलायितायषड्विꣳशतिः ॥ ❀ ॥ १३ ॥

अग्नये । स्वाहा । सोमाय । स्वाहा । वायवे । स्वाहा । अपाम् । मोदाय । स्वाहा । सवित्रे । स्वाहा । सरस्वत्यै । स्वाहा । इन्द्राय । स्वाहा । बृहस्पतये । स्वाहा । मित्राय । स्वाहा । वरुणाय । स्वाहा । सर्वस्मै । स्वाहा ॥ [ ४३ ] अग्नये वायवेऽपाम्मोदायेन्द्रायत्रयोविꣳशतिः ॥ ❀ ❀ ❀ ॥ १४ ॥

पृथिव्यै । स्वाहा । अन्तरिक्षाय । स्वाहा । दिवे । स्वाहा । सूर्याय । स्वाहा । चन्द्रमसे । स्वाहा । नक्षत्रेभ्यः । स्वाहा । प्राच्यै । दिशे । स्वाहा । दक्षिणायै । दिशे । स्वाहा । प्रतीच्यै । दिशे । स्वाहा । उदीच्यै । दिशे । स्वाहा । ऊर्ध्वायै । दिशे । स्वाहा । दिग्भ्यइतिदिक्-भ्यः । स्वाहा । अवान्तरदिशाभ्यइत्यवान्तर-दिशाभ्यः । स्वाहा । समाभ्यः । स्वाहा । शरद्भ्यइतिशरत्-भ्यः । स्वाहा । अहोरात्रेभ्यइत्यहः-रात्रेभ्यः । स्वाहा । अर्धमासेभ्यइत्यर्ध-मासेभ्यः । स्वाहा । मासेभ्यः । स्वाहा । ऋतुभ्यइत्यृतु-भ्यः । स्वाहा । सꣳवथ्सरायेतिसं-वथ्सराय । स्वाहा । सर्वस्मै । स्वाहा ॥ [ ४४ ] पृथिव्यै सूर्याय नक्षत्रेभ्यः प्राच्यैदिशेसप्तचत्वारिꣳशत् ॥ १५ ॥

अग्नये । स्वाहा । सोमाय । स्वाहा । सवित्रे । स्वाहा । सरस्वत्यै । स्वाहा । पूष्णे । स्वाहा । बृहस्पतये । स्वाहा । अपाम् । मोदाय । स्वाहा । वायवे । स्वाहा । मित्राय । स्वाहा । वरुणाय । स्वाहा । सर्वस्मै । स्वाहा ॥ [ ४५ ] अग्नये सवित्रे पूष्णेऽपाम्मोदाय वायवे त्रयोविꣳशतिः ॥ ❀ ❀ ॥ १६ ॥

पृथिव्यै । स्वाहा । अन्तरिक्षाय । स्वाहा । दिवे । स्वाहा । अग्नये । स्वाहा । सोमाय । स्वाहा । सूर्याय । स्वाहा । चन्द्रमसे । स्वाहा । अह्ने । स्वाहा । रात्रियै । स्वाहा । ऋजवे । स्वाहा । साधवे । स्वाहा । सुक्षित्याइतिसु-क्षित्यै ।

मानइतिपरः-सामानः । अभितः । दिवाकीर्त्यमितिदिवा-कीर्त्यम् । परस्सामानइ
तिपरः-सामानः । भवन्ति । सँवथ्सरइतिसं-वथ्सरे । एव । उभयतः । [२६] प्रती
ति । तिष्ठन्ति । पृष्ठम् । वै । दिवाकीर्त्यमितिदिवा-कीर्त्यम् । पार्श्वेइति । परस्सामा
नइतिपरः-सामानः । अभितः । दिवाकीर्त्यमितिदिवा-कीर्त्यम् । परस्सामानइतिप
रः-सामानः । भवन्ति । तस्मात् । अभितः । पृष्ठम् । पार्श्वेइति । भूयिष्ठाः । ग्र
हाः । गृह्यन्ते । भूयिष्ठम् । शस्यते । यज्ञस्य । एव । तत् । मध्यतः । ग्रन्थिम् । ग्रथ्न
न्ति । अविस्रꣳसायेत्यवि-स्रꣳसाय । सप्त । गृह्यन्ते । सप्त । वै । शीर्षण्याः । प्राणाइ
तिप्र-अनाः । प्राणानितिप्र-अनान् । एव । यजमानेषु । दधति । यत् । पराचीनानि ।
पृष्ठानि । भवन्ति । अमुम् । एव । तैः । लोकम् । अभ्यारोहन्तीत्यभि-आरोहन्ति ।
यत् । इमम् । लोकम् । न । [२७] प्रत्यवरोहेयुरितिप्रति-अवरोहेयुः । उदिति ।
वा । मायेयुः । यजमानाः । प्रेति । वा । मीयेरन् । यत् । प्रतीचीनानि । पृष्ठा
नि । भवन्ति । इमम् । एव । तैः । लोकम् । प्रत्यवरोहन्तीतिप्रति-अवरोहन्ति । अ
थोइति । अस्मिन् । एव । लोके । प्रतीति । तिष्ठन्ति । अनुन्मादायेत्यनुत्-मादा
य । इन्द्रः । वै । अप्रतिष्ठितइत्यप्रति-स्थितः । आसीत् । सः । प्रजापतिमितिप्रजा-
पतिम् । उपेति । अधावत् । तस्मै । एतम् । एकविꣳशतिरात्रमित्येकविꣳशति-रा
त्रम् । प्रेति । अयच्छत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः ।
प्रतीति । अतिष्ठत् । ये । बहुयाजिनइतिबहु-याजिनः । अप्रतिष्ठिताइत्यप्रति-स्थि
ताः । [२८] स्युः । ते । एकविꣳशतिरात्रमित्येकविꣳशति-रात्रम् । आसीरन् । द्वा
दश । मासाः । पञ्च । ऋतवः । त्रयः । इमे । लोकाः । असौ । आदित्यः । एक
विꣳशइत्येक-विꣳशः । एतावन्तः । वै । देवलोकाइतिदेव-लोकाः । तेषु । एव । य
थापूर्वमितियथा-पूर्वम् । प्रतीति । तिष्ठन्ति । असौ । आदित्यः । न । वीति । अ
रोचत । सः । प्रजापतिमितिप्रजा-पतिम् । उपेति । अधावत् । तस्मै । एतम् । एक
विꣳशतिरात्रमित्येकविꣳशति-रात्रम् । प्रेति । अयच्छत् । तम् । एति । अहरत् । ते
न । अयजत । ततः । वै । सः । अरोचत । ये । एवम् । विद्वाꣳसः । एकविꣳशतिरा
त्रमित्येकविꣳशति-रात्रम् । आसते । रोचन्ते । एव । एकविꣳशतिरात्रइत्येकविꣳश

ति-रात्रः । भवति । रुक् । वै । एकविꣳशइत्येक-विꣳशः । रुचंम् । एव । गच्छन्ति । अथोइति । प्रतिष्ठामितिप्रति-स्थाम् । एव । प्रतिष्ठतिप्रति-स्था । हि । एकविꣳशइत्येक-विꣳशः । अतिरात्रावित्यति-रात्रौ । अभितः । भवतः । ब्रह्मवर्चसस्येतिब्रह्म-वर्चसस्य । परिगृहीत्याइतिपरि-गृहीत्यै ॥ [२९] गृह्णन्तिदिवाकीर्त्यंनैवोभयतोनाप्रतिष्ठिताआसतएकविꣳशतिश्च ॥ ❀ ❀ ❀ ॥१०॥

अर्वाङ् । यज्ञः । समिति । क्रामतु । अमुष्मात् । अधीति । माम् । अभि ॥ ऋषीणाम् । यः । पुरोहितइतिपुरः-हितः ॥ निर्देवमितिनिः-देवम् । निर्वीरमितिनिः-वीरम् । कृत्वा । विष्कन्धमितिवि-स्कन्धम् । तस्मिन्न् । हीयताम् । यः । अस्मान् । द्वेष्टि ॥ शरीरम् । यज्ञशमलमितियज्ञ-शमलम् । कुसीदम् । तस्मिन्न् । सीदतु । यः । अस्मान् । द्वेष्टि ॥ यज्ञ । यज्ञस्य । यत् । तेजः । तेन । समिति । क्राम । माम् । अभि ॥ ब्राह्मणान् । ऋत्विजः । देवान् । यज्ञस्य । तपसा । ते । सव । अहम् । एति । हुवे ॥ इष्टेन । पक्वम् । उपेति । [३०] ते । हुवे । सव । अहम् ॥ समिति । ते । वृञ्जे । सुकृतमितिसु-कृतम् । समिति । प्रजामितिप्र-जाम् । पशून् ॥ प्रैषानितिप्र-एषान् । सामिधेनीरितिसां-इधेनीः । आघारावित्या-घारौ । आज्यभागावित्याज्य-भागौ । आश्रुतमित्या-श्रुतम् । प्रत्याश्रुतमितिप्रति-आश्रुतम् । एति । शृणामि । ते ॥ प्रयाजानूयाजानितिप्रयाज-अनूयाजान् । स्विष्टकृतमितिस्विष्ट-कृतम् । इडाम् । आशिषइत्या-शिषः । एति । वृञ्जे । सुवः ॥ अग्निना । इन्द्रेण । सोमेन । सरस्वत्या । विष्णुना । देवताभिः ॥ याज्यानुवाक्याभ्यामितियाज्या-अनुवाक्याभ्याम् । उपेति । ते । हुवे । सव । अहम् । यज्ञम् । एति । ददे । ते । वषट्कृतमितिवषट्-कृतम् ॥ स्तुतम् । शस्त्रम् । प्रतिगरमितिप्रति-गरम् । ग्रहम् । इडाम् । आशिषइत्या-शिषः । [३१] एति । वृञ्जे । सुवः ॥ पत्नीसंयाजानितिपत्नी-संयाजान् । उपेति । ते । हुवे । सव । अहम् । समिष्टयजुरितिसमिष्ट-यजुः । एति । ददे । तव ॥ पशून् । सुतम् । पुरोडाशान् । सवनानि । एति । उत । यज्ञम् ॥ देवान् । सेन्द्रानितिस-इन्द्रान् । उपेति । ते । हुवे । सव । अहम् । अग्निमुखानित्यग्नि-मुखान् । सोमवतइतिसोम-वतः । ये । च । विश्वे ॥ [३२] उपग्रहमिडामाशिषोद्वात्रिꣳशच्च ॥

भूतम् । भव्यम् । भविष्यत् । वषट् । स्वाहा । नमः । ऋक् । साम । यजुः । वषट् । स्वाहा । नमः । गायत्री । त्रिष्टुप् । जगती । वषट् । स्वाहा । नमः । पृथिवी । अन्तरिक्षम् । द्यौः । वषट् । स्वाहा । नमः । अग्निः । वायुः । सूर्यः । वषट् । स्वाहा । नमः । प्राणइतिप्र-अनः । व्यानइतिवि-अनः । अपानइत्यप-अनः । वषट् । स्वाहा । नमः । अन्नम् । कृषिः । वृष्टिः । वषट् । स्वाहा । नमः । पिता । पुत्रः । पौत्रः । वषट् । स्वाहा । नमः । भूः । भुवः । सुवः । वषट् । स्वाहा । नमः ॥ [३३] भुवश्चत्वारिंच ॥ ❀ ❀ ❀ ❀ ❀ ॥१२॥

एति । मे । गृहाः । भवन्तु । एति । प्रजेतिप्र-जा । मे । एति । मा । यज्ञः । विशतु । वीर्यावानितिवीर्य-वान् ॥ आपः । देवीः । यज्ञियाः । मा । एति । विशन्तु । सहस्रस्य । मा । भूमा । मा । प्रेति । हासीत् ॥ एति । मे । ग्रहः । भवतु । एति । पुरोरुगितिपुरः-रुक् । स्तुतशस्त्रेइतिस्तुत-शस्त्रे । मा । एति । विशताम् । समीचीइति ॥ आदित्याः । रुद्राः । वसवः । मे । सदस्याः । सहस्रस्य । मा । भूमा । मा । प्रेति । हासीत् ॥ एति । मा । अग्निष्टोमइत्यग्नि-स्तोमः । विशतु । उक्थ्यः । च । अतिरात्रइत्यति-रात्रः । मा । एति । विशतु । आपिशर्वरइत्यापि-शर्वरः ॥ तिरोअह्नियाइतितिरः-अह्नियाः । मा । सुहुताइतिसु-हुताः । एति । विशन्तु । सहस्रस्य । मा । भूमा । मा । प्रेति । हासीत् ॥ [३४] अग्निष्टोमोविंशत्यष्टादशच ॥१३॥

अग्निना । तपः । अन्विति । अभवत् । वाचा । ब्रह्म । मणिना । रूपाणि । इन्द्रेण । देवान् । वातेन । प्राणानितिप्र-अनान् । सूर्येण । द्याम् । चन्द्रमसा । नक्षत्राणि । यमेन । पितॄन् । राज्ञा । मनुष्यान् । फलेन । नादेयान् । अजगरेण । सर्पान् । व्याघ्रेण । आरण्यान् । पशून् । श्येनेन । पतत्रिणः । वृष्णा । अश्वान् । ऋषभेण । गाः । बस्तेन । अजाः । वृष्णिना । अवीः । व्रीहिणा । अन्नानि । यवेन । ओषधीः । न्यग्रोधेन । वनस्पतीन् । उदुम्बरेण । ऊर्जम् । गायत्रिया । छन्दाꣳसि । त्रिवृतेतित्रि-वृता । स्तोमान् । ब्राह्मणेन । वाचम् ॥ [३५] ब्राह्मणेनैकंच ॥ ❀ ❀ ❀ ❀ ॥१४॥

स्वाहा । आधिमित्या-धिम् । आधीतायेत्या-धीताय । स्वाहा । स्वाहा ।

आधीतमित्या-धीतम् । मनसे । स्वाहा । स्वाहा । मनः । प्रजापतयइतिप्रजा-पतये । स्वाहा । काय । स्वाहा । कस्मै । स्वाहा । कतमस्मै । स्वाहा । अदित्यै । स्वाहा । अदित्यै । मह्यै । स्वाहा । अदित्यै । सुमृडीकायाइतिसु-मृडीकायै । स्वाहा । सरस्वत्यै । स्वाहा । सरस्वत्यै । बृहत्यै । स्वाहा । सरस्वत्यै । पावकायै । स्वाहा । पूष्णे । स्वाहा । पूष्णे । प्रपथ्यायेतिप्र-पथ्याय । स्वाहा । पूष्णे । नरन्धिषाय । स्वाहा । त्वष्ट्रे । स्वाहा । त्वष्ट्रे । तुरीपाय । स्वाहा । त्वष्ट्रे । पुरुरूपायेतिपुरु-रूपाय । स्वाहा । विष्णवे । स्वाहा । विष्णवे । निखुर्यपायेतिनिखुर्य-पाय । स्वाहा । विष्णवे । निभूयपायेतिनिभूय-पाय । स्वाहा । सर्वस्मै । स्वाहा ॥ [३६] पुरुरूपायस्वाहाद्दश च ॥ ❀ ❀ ❀ ❀ ॥१५॥

दद्भ्यइतिदत्-भ्यः । स्वाहा । हनूभ्यामितिहनु-भ्याम् । स्वाहा । ओष्ठाभ्याम् । स्वाहा । मुखाय । स्वाहा । नासिकाभ्याम् । स्वाहा । अक्षीभ्याम् । स्वाहा । कर्णाभ्याम् । स्वाहा । पारे । इक्षवः । अवार्येभ्यः । पक्ष्मभ्यइतिपक्ष्म-भ्यः । स्वाहा । अवारे । इक्षवः । पार्येभ्यः । पक्ष्मभ्यइतिपक्ष्म-भ्यः । स्वाहा । शीर्ष्णे । स्वाहा । भ्रूभ्याम् । स्वाहा । ललाटाय । स्वाहा । मूर्ध्ने । स्वाहा । मस्तिष्काय । स्वाहा । केशेभ्यः । स्वाहा । वहाय । स्वाहा । ग्रीवाभ्यः । स्वाहा । स्कन्धेभ्यः । स्वाहा । कीकसाभ्यः । स्वाहा । पृष्टीभ्यइतिपृष्टि-भ्यः । स्वाहा । पाजस्याय । स्वाहा । पार्श्वाभ्याम् । स्वाहा । [३७] अꣳसाभ्याम् । स्वाहा । दोषभ्यामितिदोष-भ्याम् । स्वाहा । बाहुभ्यामितिबाहु-भ्याम् । स्वाहा । जङ्घाभ्याम् । स्वाहा । श्रोणीभ्यामितिश्रोणि-भ्याम् । स्वाहा । ऊरुभ्यामित्यूरु-भ्याम् । स्वाहा । अष्ठीवद्भ्यामित्यष्ठीवत्-भ्याम् । स्वाहा । जङ्घाभ्याम् । स्वाहा । भसदे । स्वाहा । शिखण्डेभ्यः । स्वाहा । वालधानायेतिवाल-धानाय । स्वाहा । आण्डाभ्याम् । स्वाहा । शेपाय । स्वाहा । रेतसे । स्वाहा । प्रजाभ्यइतिप्र-जाभ्यः । स्वाहा । प्रजननायेतिप्र-जननाय । स्वाहा । पद्भ्यइतिपत्-भ्यः । स्वाहा । शफेभ्यः । स्वाहा । लोमभ्यइतिलोम-भ्यः । स्वाहा । त्वचे । स्वाहा । लोहिताय । स्वाहा । माꣳसाय । स्वाहा । स्नावभ्यइतिस्नाव-भ्यः । स्वाहा । अस्थभ्यइत्यस्थ-भ्यः । स्वाहा । मज्जभ्यइतिमज्ज-भ्यः । स्वाहा ।

अङ्गेभ्यः । स्वाहा । आत्मने । स्वाहा । सर्वस्मै । स्वाहा ॥ [३८] पार्श्वाभ्याꣳ स्वाहामज्जभ्यस्स्वाहाषट् च ॥ ❀ ❀ ❀ ॥ १६ ॥

अञ्ज्येतायेत्यंञ्जि-एतायं । स्वाहा । अञ्जिसक्थायेत्यंञ्जि-सक्थायं । स्वाहा । शितिपदइतिशिति-पदे । स्वाहा । शितिककुदइतिशिति-ककुदे । स्वाहा । शितिरन्ध्रायेतिशिति-रन्ध्राय । स्वाहा । शितिपृष्ठायेतिशिति-पृष्ठायं । स्वाहा । शित्यꣳसायेतिशिति-अꣳसाय । स्वाहा । पुष्पकर्णायेतिपुष्प-कर्णाय । स्वाहा । शित्योष्ठायेतिशिति-ओष्ठाय । स्वाहा । शितिभ्रवइतिशिति-भ्रवे । स्वाहा । शितिभसदइतिशिति-भसदे । स्वाहा । श्वेतानूकाशायेतिश्वेत-अनूकाशाय । स्वाहा । अञ्जये । स्वाहा । ललामाय । स्वाहा । असितज्ञवइत्यसित-ज्ञवे । स्वाहा । कृष्णैतायेतिकृष्ण-एतायं । स्वाहा । रोहितैतायेतिरोहित - एतायं । स्वाहा । अरुणैतायेत्यरुण-एतायं । स्वाहा । ईदृशाय । स्वाहा । कीदृशाय । स्वाहा । तादृशाय । स्वाहा । सदृशाय । स्वाहा । विसदृशायेतिवि-सदृशाय । स्वाहा । सुसदृशायेतिसु-सदृशाय । स्वाहा । रूपायं । स्वाहा । सर्वस्मै । स्वाहा ॥ [३९] रूपायस्वाहाद्वेच ॥

कृष्णायं । स्वाहा । श्वेतायं । स्वाहा । पिशङ्गाय । स्वाहा । सारङ्गाय । स्वाहा । अरुणायं । स्वाहा । गौरायं । स्वाहा । बभ्रवे । स्वाहा । नकुलायं । स्वाहा । रोहिताय । स्वाहा । शोणाय । स्वाहा । श्यावायं । स्वाहा । श्यामायं । स्वाहा । पाकलायं । स्वाहा । सुरूपायेतिसु-रूपायं । स्वाहा । अनुरूपायेत्यनु-रूपाय । स्वाहा । विरूपायेतिवि-रूपाय । स्वाहा । सरूपायेतिस-रूपाय । स्वाहा । प्रतिरूपायेतिप्रति-रूपाय । स्वाहा । शबलाय । स्वाहा । कमलायं । स्वाहा । पृश्ञये । स्वाहा । पृश्निसक्थायेतिपृश्नि-सक्थायं । स्वाहा । सर्वस्मै । स्वाहा ॥ [४०] कृष्णायषट्चत्वारिꣳशत ॥ ❀ ❀ ❀ ❀ ॥ १८ ॥

ओषधीभ्यइत्योषधि-भ्यः । स्वाहा । मूलेभ्यः । स्वाहा । तूलेभ्यः । स्वाहा । काण्डेभ्यः । स्वाहा । वल्शेभ्यः । स्वाहा । पुष्पेभ्यः । स्वाहा । फलेभ्यः । स्वाहा । गृहीतेभ्यः । स्वाहा । अगृहीतेभ्यः । स्वाहा । अवपन्नेभ्यइत्यव-पन्नेभ्यः । स्वाहा । शयानेभ्यः । स्वाहा । सर्वस्मै । स्वाहा ॥ [४१] ओषधीभ्यश्चतुर्विꣳशतिः ॥ १९ ॥

वनस्पतिभ्यइतिवनस्पति-भ्यः। स्वाहा। मूलेभ्यः। स्वाहा। तूलेभ्यः। स्वाहा। स्कन्धोभ्यइतिस्कन्धः-भ्यः। स्वाहा। शाखाभ्यः। स्वाहा। पर्णेभ्यः। स्वाहा। पुष्पेभ्यः। स्वाहा। फलेभ्यः। स्वाहा। गृहीतेभ्यः। स्वाहा। अगृहीतेभ्यः। स्वाहा। अवपन्नेभ्यइत्यव-पन्नेभ्यः। स्वाहा। शयानेभ्यः। स्वाहा। शिष्टाय। स्वाहा। अतिशिष्टायेत्यति-शिष्टाय। स्वाहा। परिशिष्टायेतिपरि-शिष्टाय। स्वाहा। सꣳशिष्टायेतिसं-शिष्टाय। स्वाहा। उच्छिष्टायेत्युत्-शिष्टाय। स्वाहा। रिक्ताय। स्वाहा। अरिक्ताय। स्वाहा। प्ररिक्तायेतिप्र-रिक्ताय। स्वाहा। सꣳरिक्तायेतिसं-रिक्ताय। स्वाहा। उद्रिक्तायेत्युत्-रिक्ताय। स्वाहा। सर्वस्मै। स्वाहा ॥ [४२] वनस्पतिभ्यस्स्कन्धोभ्यष्षट् चत्वारिꣳशत् ॥ ❋ ❋ ॥२०॥

प्रजवम्ब्रह्मवादिनः किमेषवा आप्तआदित्या उभयोःप्रजापतिरन्वायन्निन्द्रो वै सदृङ्ङिन्द्रोवै शिथिलः प्रजापतिरकामयतान्नादस्स।विराडसावा।दित्योऽर्वाङ् भूतमाम्मेऽभिनास्वाहाऽऽधिन्दुव्योऽञ्चेतायं कृष्णायौषधीभ्योवनस्पतिभ्योविꣳशतिः ॥२०॥

प्रजवम्प्रजापतिर्यदंछन्दोमन्तेहुवेसवाहमोषधीभ्यो द्विचत्वारिꣳशत् ॥४२॥ प्रजवꣳसर्वस्मैस्वाहा ॥ ❋ ❋ ❋ ❋

हरिः ओ (३) म् ॥

इति सप्तमकाण्डे तृतीयः प्रश्नः ॥

## सप्तमकाण्डे चतुर्थः प्रश्नः ॥

हरिः ओ (४) म् ॥

बृहस्पतिः। अकामयत। श्रत्। मे। देवाः। दधीरन्। गच्छेयम्। पुरोधामितिपुरः-धाम्। इति। सः। एतम्। चतुर्विꣳशतिरात्रमितिचतुर्विꣳशति-रात्रम्। अपश्यत्। तम्। आ। अहरत्। तेन। अयजत। ततः। वै। तस्मै। श्रत्। देवाः। अदधत। अगच्छत्। पुरोधामितिपुरः-धाम्। ये। एवम्। विद्वाꣳसः।

चतुर्विंꣳशतिरात्रमितिचतुर्विंꣳशति-रात्रम् । आसते । श्रत् । एभ्यः । मनुष्याः । द्ववते । गच्छन्ति । पुरोधामितिपुरः-धाम् । ज्योतिः । गौः । आयुः । इति । त्र्यहा इतित्रि-अहाः । भवन्ति । इयम् । वाव । ज्योतिः । अन्तरिक्षम् । गौः । असौ । आयुः । [१] इमान् । एव । लोकान् । अभ्यारोहन्तीत्यभि-आरोहन्ति । अभिपूर्वमित्यभि-पूर्वम् । त्र्यहाइतित्रि-अहाः । भवन्ति । अभिपूर्वमित्यभि-पूर्वम् । एव । सुवर्गमितिसुवः-गम् । लोकम् । अभ्यारोहन्तीत्यभि-आरोहन्ति । असंत्रम् । वै । एतत् । यत् । अछन्दोममित्यछन्दः-मम् । यत् । छन्दोमाइतिछन्दः-माः । भवन्ति । तेन । सत्रम् । देवताः । एव । पृष्ठैः । अवेति । रुन्धते । पशून् । छन्दोमैरितिछन्दः-मैः । ओजः । वै । वीर्यम् । पृष्ठानि । पशवः । छन्दोमाइतिछन्दः-माः । ओजसि । एव । वीर्ये । पशुषु । प्रतीति । तिष्ठन्ति । बृहद्रथन्तराभ्यामितिबृहत्-रथन्तराभ्याम् । यन्ति । इयम् । वाव । रथन्तरमितिरथं-तरम् । असौ । बृहत् । आभ्याम् । एव । [२] यन्ति । अथोइति । अनयोः । एव । प्रतीति । तिष्ठन्ति । एतेइति । वै । यज्ञस्य । अञ्जसायनीइत्यञ्जसा-अयनी । स्रुतीइति । ताभ्याम् । एव । सुवर्गमितिसुवः-गम् । लोकम् । यन्ति । चतुर्विंꣳशतिरात्रइतिचतुर्विंꣳशति रात्रः । भवति । चतुर्विंꣳशतिरितिचतुः-विंꣳशतिः । अर्धमासाइत्यर्ध-मासाः । संवथ्सरइतिसं-वथ्सरः । संवथ्सरइतिसं-वथ्सरः । सुवर्गइतिसुवः-गः । लोकः । संवथ्सरइतिसं-वथ्सरे । एव । सुवर्गइतिसुवः-गे । लोके । प्रतीति । तिष्ठन्ति । अथोइति । चतुर्विंꣳशत्यक्षरेतिचतुर्विंꣳशति-अक्षरा । गायत्री । गायत्री । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । गायत्रिया । एव । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । अवेति । रुन्धते । अतिरात्राविलति-रात्रौ । अभितः । भवतः । ब्रह्मवर्चसस्येतिब्रह्म-वर्चसस्य । परिगृहीत्याइतिपरि-गृहीत्यै ॥ [३] असावायुराभ्यामेव पञ्चचत्वारिꣳशच्च ॥ ❀ ❀ ॥१॥

यथा । वै । मनुष्याः । एवम् । देवाः । अग्रे । आसन् । ते । अकामयन्त । अवर्तिम् । पाप्मानम् । मृत्युम् । अपहत्येत्यप-हत्य । दैवीम् । संꣳसदमितिसं-सदम् । गच्छेम । इति । ते । एतम् । चतुर्विंꣳशतिरात्रमितिचतुर्विंꣳशति-रात्रम् ।

अपश्यन्न् । तम् । एति । अहरन्न् । तेन । अयजन्त । ततः । वै । ते । अवर्तिम् । पाप्मानम् । मृत्युम् । अपहत्येत्यंप-हत्यं । दैवीम् । सᳲसदमितिसं-सदम् । अगच्छन्न् । ये । एवम् । विद्वाᳲसः । चतुर्विᳲशतिरात्रमितिचतुर्विᳲशति-रात्रम् । आसते । अवर्तिम् । एव । पाप्मानम् । अपहत्येत्यंप-हत्यं । श्रियम् । गच्छन्ति । श्रीः । हि । मनुष्यस्य । [४] दैवी । सᳲसदितिसं-सत् । ज्योतिः । अतिरात्रइत्यंति-रात्रः । भवति । सुवर्गस्येतिसुवः-गस्य । लोकस्य । अनुख्यात्याइत्यनु-ख्यात्यै । पृष्ठ्यः । षडहइतिषट्-अहः । भवति । षट् । वै । ऋतवः । सँव्वथ्सरइतिसं-वथ्सरः । तम् । मासाः । अर्धमासाइत्यर्ध-मासाः । ऋतवः । प्रविश्येतिप्र-विश्य । दैवीम् । सᳲसदमितिसं-सदम् । अगच्छन्न् । ये । एवम् । विद्वाᳲसः । चतुर्विᳲशतिरात्रमितिचतुर्विᳲशति-रात्रम् । आसते । सँव्वथ्सरमितिसं-वथ्सरम् । एव । प्रविश्येतिप्र-विश्य । वस्यसीम् । सᳲसदमितिसं-सदम् । गच्छन्ति । त्रयः । त्रयस्त्रिᳲशाइतित्रयः-त्रिᳲशाः । अवस्तात् । भवन्ति । त्रयः । त्रयस्त्रिᳲशाइतित्रयः-त्रिᳲशाः । परस्तात् । त्रयस्त्रिᳲशैरितित्रयः-त्रिᳲशैः । एव । उभयतः । अवर्तिम् । पाप्मानम् । अपहत्येत्यंप-हत्यं । दैवीम् । सᳲसदमितिसं-सदम् । मध्यतः । [५] गच्छन्ति । पृष्ठानि । हि । दैवी । सᳲसदितिसं-सत् । जामि । वै । एतत् । कुर्वन्ति । यत् । त्रयः । त्रयस्त्रिᳲशाइतित्रयः-त्रिᳲशाः । अन्वञ्चः । मध्ये । अनिरुक्तइत्यनिः-उक्तः । भवति । तेन । अजामि । ऊर्ध्वानि । पृष्ठानि । भवन्ति । ऊर्ध्वाः । छन्दोमाइतिछन्दः-माः । उभाभ्याम् । रूपाभ्याम् । सुवर्गमितिसुवः-गम् । लोकम् । यन्ति । असंत्रम् । वै । एतत् । यत् । अछन्दोममित्यछन्दः-मम् । यत् । छन्दोमाइतिछन्दः-माः । भवन्ति । तेन । सत्रम् । देवताः । एव । पृष्ठैः । अवेति । रुन्धते । पशून् । छन्दोमैरितिछन्दः-मैः । ओजः । वै । वीर्यम् । पृष्ठानि । पशवः । [६] छन्दोमाइतिछन्दः-माः । ओजसि । एव । वीर्ये । पशुषु । प्रतीति । तिष्ठन्ति । त्रयः । त्रयस्त्रिᳲशाइतित्रयः-त्रिᳲशाः । अवस्तात् । भवन्ति । त्रयः । त्रयस्त्रिᳲशाइतित्रयः-त्रिᳲशाः । । परस्तात् । मध्ये । पृष्ठानि । उरः । वै । त्रयस्त्रिᳲशाइतित्रयः-त्रिᳲशाः । आत्मा । पृष्ठानि । आत्मन् । एव । तत् । यजमानाः । शर्म ।

नह्यन्ते । अनार्त्यै । बृहद्रथन्तराभ्यामितिबृहत्-रथन्तराभ्याम् । यन्ति । इयम् । वाव । रथन्तरमितिरथं-तरम् । असौ । बृहत् । आभ्याम् । एव । यन्ति । अथोइति । अनयोः । एव । प्रतीति । तिष्ठन्ति । एतेइति । वै । यज्ञस्य । अञ्जसायनीइत्यञ्जसा-अयनी । स्रुतीइति । ताभ्याम् । एव । [७] सुवर्गमितिसुवः-गम् । लोकम् । यन्ति । पराञ्चः । वै । एते । सुवर्गमितिसुवः-गम् । लोकम् । अभ्यारोहन्तीत्यभि-आरोहन्ति । ये । पराचीनानि । पृष्ठानि । उपयन्तीत्युप-यन्ति । प्रत्यङ् । षडहइतिषट्-अहः । भवति । प्रत्यवरूढ्याइतिप्रति-अवरूढ्यै । अथोइति । प्रतिष्ठित्याइतिप्रति-स्थित्यै । उभयोः । लोकयोः । ऋध्वा । उदिति । तिष्ठन्ति । त्रिवृतइतित्रि-वृतः । अधीति । त्रिवृतमितित्रि-वृतम् । उपेति । यन्ति । स्तोमानाम् । सम्पत्त्याइतिसं-पत्त्यै । प्रभवायेतिप्र-भवाय । ज्योतिः । अग्निष्टोमइत्यग्नि-स्तोमः । भवति । अयम् । वाव । सः । क्षयः । अस्मात् । एव । तेन । क्षयात् । न । यन्ति । चतुर्विंशतिरात्रइतिचतुर्विंशति-रात्रः । भवति । चतुर्विंशतिरितिचतुः-विंशतिः । अर्धमासाइत्यर्ध-मासाः । सँवथ्सरइतिसं-वथ्सरः । सँवथ्सरइतिसं-वथ्सरः । सुवर्गइतिसुवः गः । लोकः । सँवथ्सरइतिसं-वथ्सरे । एव । सुवर्गइतिसुवः-गे । लोके । प्रतीति । तिष्ठन्ति । अथोइति । चतुर्विंशत्यक्षरेतिचतुर्विंशति-अक्षरा । गायत्री । गायत्री । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । गायत्रिया । एव । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । अवेति । रुन्धते । अतिरात्रावित्यति-रात्रौ । अभितः । भवतः । ब्रह्मवर्चसस्येतिब्रह्म-वर्चसस्य । परिगृहीत्याइतिपरि गृहीत्यै ॥ [८] मनुष्यस्य मध्यतः पशवस्ताभ्यामेवसँव्वथ्सरश्चतुर्विंशतिश्च ॥ ❀ ❀ ॥२॥

ऋक्षा । वै । इयम् । अलोमका । आसीत् । सा । अकामयत । ओषधीभिरित्योषधि-भिः । वनस्पतिभिरितिवनस्पति-भिः । प्रेति । जायेय । इति । सा । एताः । त्रिंशतम् । रात्रीः । अपश्यत् । ततः । वै । इयम् । ओषधीभिरित्योषधि-भिः । वनस्पतिभिरितिवनस्पति-भिः । प्रेति । अजायत । ये । प्रजाकामाइतिप्रजा-कामाः । पशुकामाइतिपशु-कामाः । स्युः । ते । एताः । आसीरन्न् । प्रेति । एव । जायन्ते । प्रजयेतिप्र-जया । पशुभिरितिपशु-भिः । इयम् । वै । अक्षुध्यत् । सा । एताम् ।

विराजमितिंवि-राजंम् । अपश्यन् । ताम् । आत्मन्न् । धित्वा । अन्नाद्यमित्यंन्न-अद्यंम् । अवेतिं । अरुन्ध । ओषंधीः । [९] वनस्पतीन् । प्रजामितिंप्र-जाम् । पशून् । तेनं । अवर्धत । सा । जेमानंम् । महिमानंम् । अगच्छत् । ये । एवम् । विद्वाꣳसंः । एताः । आसंते । विराजमितिंवि-राजंम् । एव । आत्मन्न् । धित्वा । अन्नाद्यमित्यंन्न-अद्यंम् । अवेतिं । रुन्धते । वर्धन्ते । प्रजयेतिंप्र-जयां । पशुभिरितिंपशु-भिः । जेमानंम् । महिमानंम् । गच्छन्तिं । ज्योतिः । अतिरात्रइत्यंति-रात्रः । भवति । सुवर्गस्येतिंसुवः-गस्यं । लोकस्यं । अनुंख्यात्याइत्यनु-ख्यात्यै । पृष्ठ्यंः । षडहइतिंषट्-अहः । भवति । षट् । वै । ऋतवंः । षट् । पृष्ठानिं । पृष्ठैः । एव । ऋतून् । अन्वारोहन्तीत्यंनु-आरोहन्ति । ऋतुभिरित्यृतु-भिः । सꣳवथ्सरमितिंसं-वथ्सरम् । ते । सꣳवथ्सरइतिंसं-वथ्सरे । एव । [१०] प्रतीतिं । तिष्ठन्ति । त्रयस्त्रिꣳशादितिंत्रयः-त्रिꣳशात् । त्रयस्त्रिꣳशमितिंत्रयः-त्रिꣳशम् । उपेतिं । यन्ति । यज्ञस्यं । सन्तंत्याइतिसं-तत्यै । अथोइतिं । प्रजापंतिरितिंप्रजा-पतिः । वै । त्रयस्त्रिꣳशइतिंत्रयः-त्रिꣳशः । प्रजापतिमितिंप्रजा-पतिम् । एव । एतिं । रभन्ते । प्रतिंष्ठित्याइतिप्रतिं-स्थित्यै । त्रिणवइतिंत्रि-नवः । भवति । विजिंत्याइतिवि-जित्यै । एकविꣳशइत्येकं-विꣳशः । भवति । प्रतिंष्ठित्याइतिप्रतिं - स्थित्यै । अथोइतिं । रुचंम् । एव । आत्मन्न् । दधते । त्रिवृदितिंत्रि-वृत् । अग्निष्टुदित्यंग्नि-स्तुत् । भवतिं । पाप्मानंम् । एव । तेनं । निरितिं । दहन्ते । अथोइतिं । तेजंः । वै । त्रिवृदितिंत्रि-वृत् । तेजंः । एव । आत्मन्न् । दधते । पञ्चदशइतिंपञ्च-दशः । इन्द्रस्तोमइतीन्द्र-स्तोमः । भवति । इन्द्रियम् । एव । अवेतिं । [११] रुन्धते । सप्तदशइतिंसप्त-दशः । भवति । अन्नाद्यस्येत्यंन्न-अद्यंस्य । अवरुध्याइत्यवं-रुध्यै । अथोइतिं । प्रेतिं । एव । तेनं । जायन्ते । एकविꣳशइत्येकं-विꣳशः । भवति । प्रतिष्ठित्याइतिप्रतिं-स्थित्यै । अथोइतिं । रुचंम् । एव । आत्मन्न् । दधते । चतुर्विꣳशइतिचतुः-विꣳशः । भवति । चतुर्विꣳशतिरितिचतुः-विꣳशतिः । अर्धमासाइत्यंर्ध-मासाः । सꣳवथ्सरइतिंसं-वथ्सरः । सꣳवथ्सरइतिंसं-वथ्सरः । सुवर्गइतिंसुवः-गः । लोकः । सꣳवथ्सरइतिंसं-वथ्सरे । एव । सुवर्गइतिंसुवः-गे । लोके । प्रतीतिं । तिष्ठन्ति । अथोइतिं । एषः । वै । विषूवानितिंविषु-वान् । विषूवन्तइतिंविषु-

वन्तः । भवन्ति । ये । एवम् । विद्वाꣳसः । एताः । आसते । चतुर्विꣳशादिति चतुः-विꣳशात् । पृष्ठानि । उपेति । यन्ति । सꣳवथ्सरइतिसं-वथ्सरे । एव । प्रतिष्ठायेतिप्रति-स्थाय । [१२] देवताः । अभ्यारोहन्तीत्यभि-आरोहन्ति । त्रयस्त्रिꣳशादितित्रयः-त्रिꣳशात् । त्रयस्त्रिꣳशमितित्रयः-त्रिꣳशम् । उपेति । यन्ति । त्रयस्त्रिꣳशदितित्रयः-त्रिꣳशत् । वै । देवताः । देवतासु । एव । प्रतीति । तिष्ठन्ति । त्रिणवइतित्रि-नवः । भवति । इमे । वै । लोकाः । त्रिणवइतित्रि-नवः । एषु । एव । लोकेषु । प्रतीति । तिष्ठन्ति । द्वौ । एकविꣳशावित्येक-विꣳशौ । भवतः । प्रतिष्ठित्याइतिप्रति-स्थित्यै । अथोइति । रुचम् । एव । आत्मन्न् । दधते । बहवः । षोडशिनः । भवन्ति । तस्मात् । बहवः । प्रजास्वितिप्र-जासु । वृषाणः । यत् । एते । स्तोमाः । व्यतिषक्ताइतिवि-अतिषक्ताः । भवन्ति । तस्मात् । इयम् । ओषधीभिरित्योषधि-भिः । वनस्पतिभिरितिवनस्पति-भिः । व्यतिषक्तेतिवि-अतिषक्ता । [१३] व्यतिषज्यन्तइतिवि-अतिषज्यन्ते । प्रजयेतिप्र-जया । पशुभिरितिपशु-भिः । ये । एवम् । विद्वाꣳसः । एताः । आसते । अक्लृप्ताः । वै । एते । सुवर्गमितिसुवः-गम् । लोकम् । यन्ति । उच्चावचान् । हि । स्तोमान् । उपयन्तीत्युप-यन्ति । यत् । एते । ऊर्ध्वाः । क्लृप्ताः । स्तोमाः । भवन्ति । क्लृप्ताः । एव । सुवर्गमितिसुवः-गम् । लोकम् । यन्ति । उभयोः । एभ्यः । लोकयोः । कल्पते । त्रिꣳशत् । एताः । त्रिꣳशदक्षरेतित्रिꣳशत्-अक्षरा । विराडितिवि-राट् । अन्नम् । विराडितिवि-राट् । विराजेतिवि-राजा । एव । अन्नाद्यमित्यन्न-अद्यम् । अवेति । रुन्धते । अतिरात्रावित्यति-रात्रौ । अभितः । भवतः । अन्नाद्यस्येत्यन्न-अद्यस्य । परिगृहीत्याइतिपरिगृहीत्यै ॥ [१४] ओषधीससꣳवथ्सरएवावप्रतिष्ठायव्यतिषक्तैकान्नपञ्चाशच्च ॥ ३ ॥

प्रजापतिरितिप्रजा-पतिः । सुवर्गमितिसुवः-गम् । लोकम् । ऐत् । तम् । देवाः । येनयेनेतियेन-येन । छन्दसा । अनु । प्रेति । अयुञ्जत । तेन । न । आप्नुवन् । ते । एताः । द्वात्रिꣳशतम् । रात्रीः । अपश्यन् । द्वात्रिꣳशदक्षरेतिद्वात्रिꣳशत्-अक्षरा । अनुष्टुगित्यनु-स्तुक् । आनुष्टुभइत्यानु-स्तुभः । प्रजापतिरितिप्रजा-पतिः । स्वेन । एव । छन्दसा । प्रजापतिमितिप्रजा-पतिम् । आप्त्वा । अभ्यारुह्य

त्यभि-आरुह्यं। सुवर्गमितिसुवः-गम्। लोकम्। आयन्। ये। एवम्। विद्वाꣳसः। एताः। आसते। द्वात्रिꣳशत्। एताः। द्वात्रिꣳशदक्षरेतिद्वात्रिꣳशत्-अक्षरा। अनुष्टुगित्यनु-स्तुक्। आनुष्टुभइत्यानु-स्तुभः। प्रजापतिरितिप्रजा-पतिः। स्वेन। एव। छन्दसा। प्रजापतिमितिप्रजा-पतिम्। आप्त्वा। श्रियम्। गच्छन्ति। [१५] श्रीः। हि। मनुष्यस्य। सुवर्गइतिसुवः-गः। लोकः। द्वात्रिꣳशत्। एताः। द्वात्रिꣳशदक्षरेतिद्वात्रिꣳशत्-अक्षरा। अनुष्टुगित्यनु-स्तुक्। वाक्। अनुष्टुबित्यनु-स्तुप्। सर्वाम्। एव। वाचम्। आप्नुवन्ति। सर्वे। वाचः। वदितारः। भवन्ति। सर्वे। हि। श्रियम्। गच्छन्ति। ज्योतिः। गौः। आयुः। इति। त्र्यहाइतित्रि अहाः। भवन्ति। इयम्। वाव। ज्योतिः। अन्तरिक्षम्। गौः। असौ। आयुः। इमान्। एव। लोकान्। अभ्यारोहन्तीत्यभि-आरोहन्ति। अभिपूर्वमित्यभि-पूर्वम्। त्र्यहाइतित्रि-अहाः। भवन्ति। अभिपूर्वमित्यभि-पूर्वम्। एव। सुवर्गमितिसुवः-गम्। लोकम्। अभ्यारोहन्तीत्यभि-आरोहन्ति। बृहद्रथन्तराभ्यामितिबृहत्-रथन्तराभ्याम्। यन्ति [१६] इयम्। वाव। रथन्तरमितिरथं-तरम्। असौ। बृहत्। आभ्याम्। एव। यन्ति। अथोइति। अनयोः। एव। प्रतीति। तिष्ठन्ति। एते इति। वै। यज्ञस्य। अञ्जसायनीइत्यञ्जसा-अयनी। स्रुतीइति। ताभ्याम्। एव। सुवर्गमितिसुवः-गम्। लोकम्। यन्ति। पराञ्चः। वै। एते। सुवर्गमितिसुवः-गम्। लोकम्। अभ्यारोहन्तीत्यभि-आरोहन्ति। ये। पराचः। त्र्यहानितित्रि-अहान्। उपयन्तीत्युप-यन्ति। प्रत्यङ्। त्र्यहइतित्रि-अहः। भवति। प्रत्यवरुद्ध्याइतिप्रति-अवरुद्ध्यै। अथोइति। प्रतिष्ठित्याइतिप्रति-स्थित्यै। उभयोः। लोकयोः। ऋध्वा। उदिति। तिष्ठन्ति। द्वात्रिꣳशत्। एताः। तासाम्। याः। त्रिꣳशत्। त्रिꣳशदक्षरेतित्रिꣳशत्-अक्षरा। विराडितिवि-राट्। अन्नम्। विराडितिवि-राट्। विराजेतिवि-राजा। एव। अन्नाद्यमित्यन्न-अद्यम्। अवेति। रुन्धते। येइति। द्वेइति। अहोरात्रेइत्यहः-रात्रे। एव। तेइति। उभाभ्याम्। रूपाभ्याम्। सुवर्गमितिसुवः-गम्। लोकम्। यन्ति। अतिरात्रावित्यति-रात्रौ। अभितः। भवतः। परिगृहीत्या

इतिपरि-गृहीत्यै ॥ [१७] गच्छन्तियन्तित्रिँ॒शदंक्षराद्वाविँ॑शतिश्च ॥ ४ ॥

द्वेइति । वाव । देवसत्रेइतिदेव-सत्रे । द्वादशाहइतिद्वादश-अहः । च । ए व । त्रयस्त्रिँ॒शदहइतित्रयस्त्रिँ॑शत्-अहः । च । ये । एवम् । विद्वाँ॑सः । त्रय स्त्रिँ॒शदहमितित्रयस्त्रिँ॑शत्-अहम् । आसंते । साक्षादितिस-अक्षात् । एव । दे वताः । अभ्यारोहन्तीत्यभि-आरोहन्ति । यथा । खलुं । वै । श्रेयान् । अभ्यारूढइ त्यभि-आरूढः । कामयंते । तथा । करोति । यदि । अवविध्यतीत्यंव-विध्यति । पा पीयान् । भवति । यदि । न । अवविध्यतीत्यंव-विध्यति । सदृङ्ङितिस-दृङ् । ये । एवम् । विद्वाँ॑सः । त्रयस्त्रिँ॒शदहमितित्रयस्त्रिँ॑शत्-अहम् । आसंते । वीति । पाप्मना । भ्रातृव्येण । एति । वर्तन्ते । अहर्भाजइत्यहः-भाजः । वै । एताः । देवाः । अग्रे । एति । अहरन्न् । [१८] अहः । एकः । अभजत । अहः । एकः । ताभिः । वै । ते । प्रबाहुगितिप्र-बाहुक् । आर्ध्नुवन्न् । ये । एवम् । विद्वाँ॑सः । त्रयस्त्रिँ॒ शदहमितित्रयस्त्रिँ॑शत्-अहम् । आसंते । सर्वे । एव । प्रबाहुगितिप्र-बाहुक् । ऋध्नुवन्ति । सर्वे । ग्रामणीय॑मितिग्राम-नीयम् । प्रेति । आप्नुवन्ति । पञ्चाहाइतिप ञ्च-अहाः । भवन्ति । पञ्च । वै । ऋतवः । सँ॒वथ्सरइतिसं-वथ्सरः । ऋतुषु । एव । सँ॒वथ्सरइतिसं-वथ्सरे । प्रतीति । तिष्ठन्ति । अथोइति । पञ्चाक्षरेतिपञ्च-अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धते । त्रीणि । आश्विनानि । भवन्ति । त्रयः । इमे । लोकाः । एषु । [१९] एव । लोकेषु । प्रतीति । तिष्ठ न्ति । अथोइति । त्रीणि । वै । यज्ञस्य । इन्द्रियाणि । तानि । एव । अवेति । रु न्धते । विश्वजिदितिविश्व-जित् । भवति । अन्नाद्यस्येत्यन्न-अद्यस्य । अवरुध्याइत्य व-रुध्यै । सर्वपृष्ठइतिसर्व-पृष्ठः । भवति । सर्वस्य । अभिजित्याइत्यभि-जित्यै । वाक् । वै । द्वादशाहइतिद्वादश-अहः । यत् । पुरस्तात् । द्वादशाहमितिद्वादश-अहम् । उपेयुरित्युप-इयुः । अनाप्ताम् । वाचम् । उपेति । इयुः । उपदासुकेत्युप-दासुका । एषाम् । वाक् । स्यात् । उपरिष्टात् । द्वादशाहमितिद्वादश-अहम् । उपेति । य न्ति । आप्ताम् । एव । वाचम् । उपेति । यन्ति । तस्मात् । उपरिष्टात् । वाचा । वदामः । अवान्तरमित्यव-अन्तरम् । [२०] वै । दशरात्रेणेतिदश-रात्रेण । प्रजा

पतिरितिप्रजा-पतिः । प्रजाइतिप्र-जाः । असृजत । यत् । दशरात्रइतिदश-रात्रः । भवति । प्रजाइतिप्र-जाः । एव । तत् । यजमानाः । सृजन्ते । एताम् । ह । वै । उदङ्कः । शौल्बायनः । सत्रस्य । ऋद्धिम् । उवाच । यत् । दशरात्रइतिदश-रात्रः । यत् । दशरात्रइतिदश-रात्रः । भवति । सत्रस्य । ऋध्यै । अथोइति । यत् । एव । पूर्वेषु । अहस्स्वित्यहः-सु । विलोमेतिवि-लोम । क्रियते । तस्य । एव । एषा । शान्तिः । द्व्यनीकाइतिद्वि-अनीकाः । वै । एताः । रात्रयः । यजमानाः । विश्वजिदितिविश्व-जित् । सह । अतिरात्रेणेत्यति-रात्रेण । पूर्वाः । षोडश । सह । अतिरात्रेणेत्यति-रात्रेण । उत्तराइत्युत्-तराः । षोडश । ये । एवम् । विद्वाꣳसः । त्रयस्त्रिꣳशदहमितित्रयस्त्रिꣳशत्-अहम् । आसते । एति । एषाम् । द्व्यनीकेतिद्वि-अनीका । प्रजेतिप्र-जा । जायते । अतिरात्रावित्यति-रात्रौ । अभितः । भवतः । परिगृहीत्याइतिपरि-गृहीत्यै ॥ [ २१ ] अहस्स्वेष्ववान्तरꣳषोडशसहसप्तदशच ॥ ॥ ५ ॥

आदित्याः । अकामयन्त । सुवर्गमितिसुवः-गम् । लोकम् । इयाम । इति । ते । सुवर्गमितिसुवः-गम् । लोकम् । न । प्रेति । अजानन्न् । न । सुवर्गमितिसुवः-गम् । लोकम् । आयन्न् । ते । एतम् । षट्त्रिꣳशद्रात्रमितिषट्त्रिꣳशत्-रात्रम् । अपश्यन्न् । तम् । एति । अहरन्न् । तेन । अयजन्त । ततः । वै । ते । सुवर्गमितिसुवः-गम् । लोकम् । प्रेति । अजानन्न् । सुवर्गमितिसुवः-गम् । लोकम् । आयन्न् । ये । एवम् । विद्वाꣳसः । षट्त्रिꣳशद्रात्रमितिषट्त्रिꣳशत्-रात्रम् । आसते । सुवर्गमितिसुवः-गम् । एव । लोकम् । प्रेति । जानन्ति । सुवर्गमितिसुवः-गम् । लोकम् । यन्ति । ज्योतिः । अतिरात्रइत्यति-रात्रः । [ २२ ] भवति । ज्योतिः । एव । पुरस्तात् । दधते । सुवर्गस्येतिसुवः-गस्य । लोकस्य । अनुख्यात्याइत्यनु-ख्यात्यै । षडहाइतिषट्-अहाः । भवन्ति । षट् । वै । ऋतवः । ऋतुषु । एव । प्रतीति । तिष्ठन्ति । चत्वारः । भवन्ति । चतस्रः । दिशः । दिक्षु । एव । प्रतीति । तिष्ठन्ति । असत्रम् । वै । एतत् । यत् । अछन्दोममित्यछन्दः-मम् । यत् । छन्दोमाइतिछन्दः-माः । भवन्ति । तेन । सत्रम् । देवताः । एव । पृष्ठैः । अवेति । रुन्धते । पशून् । छन्दोमैरितिछन्दः-मैः । ओजः । वै । वीर्यम् । पृष्ठानि । पशवः । छन्दोमाइतिछ

न्दः-माः । ओजसि । एव । [१३] वीर्ये । पशुषु । प्रतीति । तिष्ठन्ति । षट्त्रिंꣳ
शद्रात्रइतिषट्त्रिंꣳशत्-रात्रः । भवति । षट्त्रिंꣳशदक्षरेतिषट्त्रिंꣳशत्-अक्षरा ।
बृहती । बार्हताः । पशवः । बृहत्या । एव । पशून् । अवेति । रुन्धते । बृहती ।
छन्दसाम् । स्वाराज्यमितिस्व-राज्यम् । आश्नुत । अश्नुवते । स्वाराज्यमितिस्व-रा
ज्यम् । ये । एवम् । विद्वाꣳसः । षट्त्रिंꣳशद्रात्रमितिषट्त्रिंꣳशत्-रात्रम् । आसते ।
सुवर्गमितिसुवः-गम् । एव । लोकम् । यन्ति । अतिरात्रावित्यति-रात्रौ । अभितः ।
भवतः । सुवर्गस्येतिसुवः-गस्य । लोकस्य । परिगृहीत्याइतिपरि-गृहीत्यै ॥ २४ ॥
अतिरात्र ओजस्येवषट्त्रिंꣳशच्च ॥ ❀ ❀ ❀ ॥ ६ ॥

वसिष्ठः । हतपुत्रइतिहत-पुत्रः । अकामयत । विन्देय । प्रजामितिप्र-जाम् ।
अभीति । सौदासान् । भवेयम् । इति । सः । एतम् । एकस्मान्नपञ्चाशमित्येक
स्मात्-नपञ्चाशम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः ।
वै । सः । अविन्दत । प्रजामितिप्र-जाम् । अभीति । सौदासान् । अभवत् । ये ।
एवम् । विद्वाꣳसः । एकस्मान्नपञ्चाशमित्येकस्मात्-नपञ्चाशम् । आसते । विन्द
न्ते । प्रजामितिप्र-जाम् । अभीति । भ्रातृव्यान् । भवन्ति । त्रयः । त्रिवृतइतित्रि-
वृतः । अग्निष्टोमाइत्यग्नि-स्तोमाः । भवन्ति । वज्रस्य । एव । मुखम् । समिति ।
श्यन्ति । दश । पञ्चदशाइतिपञ्च-दशाः । भवन्ति । पञ्चदशइतिपञ्च-दशः । वज्रः ।
[२५] वज्रम् । एव । भ्रातृव्येभ्यः । प्रेति । हरन्ति । षोडशिमदितिषोडशि-मत् ।
दशमम् । अहः । भवति । वज्रे । एव । वीर्यम् । दधति । द्वादश । सप्तदशाइति
सप्त-दशाः । भवन्ति । अन्नाद्यस्येत्यन्न-अद्यस्य । अवरुद्ध्याइत्यव-रुद्ध्यै । अथोइति ।
प्रेति । एव । तैः । जायन्ते । पृष्ठ्यः । षडहइतिषट्-अहः । भवति । षट् । वै । ऋ
तवः । षट् । पृष्ठानि । पृष्ठैः । एव । ऋतून् । अन्वारोहन्तीत्यनु-आरोहन्ति । ऋ
तुभिरित्यृतु-भिः । सँव्वथ्सरमितिसं-वथ्सरम् । ते । सँव्वथ्सरइतिसं-वथ्सरे । एव ।
प्रतीति । तिष्ठन्ति । द्वादश । एकविꣳशाइत्येक-विꣳशाः । भवन्ति । प्रतिष्ठित्याइ
तिप्रति-स्थित्यै । अथोइति । रुचम् । एव । आत्मन्न् । [२६] दधते । बहवः । षो
डशिनः । भवन्ति । विजित्याइतिवि-जित्यै । षट् । आश्विनानि । भवन्ति । षट् ।

वै । ऋतवः । ऋतुषु । एव । प्रतीति । तिष्ठन्ति । ऊनातिरिक्ताइत्यून-अतिरिक्ताः । वै । एताः । रात्रयः । ऊनाः । तत् । यत् । एकस्यै । न । पञ्चाशत् । अतिरिक्ताइत्यति-रिक्ताः । तत् । यत् । भूयसीः । अष्टाचत्वारिꣳशतइत्यष्टा-चत्वारिꣳशतः । ऊनात् । च । खलु । वै । अतिरिक्तादित्यति-रिक्तात् । च । प्रजापतिरितिप्रजा-पतिः । प्रेति । अजायत । ये । प्रजाकामाइतिप्रजा-कामाः । पशुकामाइतिपशु-कामाः । स्युः । ते । एताः । आसीरन्न् । प्रेति । एव । जायन्ते । प्रजयेतिप्र-जया । पशुभिरितिपशु-भिः । वैराजः । वै । एषः । यज्ञः । यत् । एकस्मान्नपञ्चाशइत्येकस्मात्-नपञ्चाशः । ये । एवम् । विद्वाꣳसः । एकस्मान्नपञ्चाशमित्येकस्मात्-नपञ्चाशम् । आसते । विराजमितिवि-राजम् । एव । गच्छन्ति । अन्नादाइत्यन्न-अदाः । भवन्ति । अतिरात्रावित्यति-रात्रौ । अभितः । भवतः । अन्नाद्यस्येत्यन्न-अद्यस्य । परिगृहीत्याइतिपरि-गृहीत्यै ॥ [२७] वज्रआत्मन्प्रजयाद्वाविꣳशतिश्च ॥ ७ ॥

सꣳवथ्सरायेतिसं-वथ्सराय । दीक्षिष्यमाणाः । एकाष्टकायामित्येक-अष्टकायाम् । दीक्षेरन्न् । एषा । वै । सꣳवथ्सरस्येतिसं-वथ्सरस्य । पत्नी । यत् । एकाष्टकेत्येक-अष्टका । एतस्याम् । वै । एषः । एताम् । रात्रिम् । वसति । साक्षादितिस-अक्षात् । एव । सꣳवथ्सरमितिसं-वथ्सरम् । आरभ्येत्या-रभ्य । दीक्षन्ते । आर्तम् । वै । एते । सꣳवथ्सरस्येतिसं - वथ्सरस्य । अभीति । दीक्षन्ते । ये । एकाष्टकायामित्येक-अष्टकायाम् । दीक्षन्ते । अन्तनामानावित्यन्त-नामानौ । ऋतूइति । भवतः । व्यस्तमिति-वि-अस्तम् । वै । एते । सꣳवथ्सरस्येतिसं वथ्सरस्य । अभीति । दीक्षन्ते । ये । एकाष्टकायामित्येक-अष्टकायाम् । दीक्षन्ते । अन्तनामानावित्यन्त-नामानौ । ऋतूइति । भवतः । फल्गुनीपूर्णमासइतिफल्गुनी-पूर्णमासे । दीक्षेरन्न् । मुखम् । वै । एतत् । [२८] सꣳवथ्सरस्येतिसं - वथ्सरस्य । यत् । फल्गुनीपूर्णमासइतिफल्गुनी - पूर्णमासः । मुखतः । एव । सꣳवथ्सरमितिसं-वथ्सरम् । आरभ्येत्या-रभ्य । दीक्षन्ते । तस्य । एका । एव । निर्येतिनिः-या । यत् । साम्मेघ्यइतिसां-मेघ्ये । विषूवानितिविषु-वान् । सम्पद्यतइतिसं-पद्यते । चित्रापूर्णमासइतिचित्रा-पूर्णमासे । दीक्षेरन्न् । मुखम् । वै । एतत् । सꣳवथ्सरस्येतिसं-वथ्सरस्य । यत् ।

चित्रापूर्णमासइतिचित्रा-पूर्णमासः। मुखतः। एव। सँवथ्सरमितिसं-वथ्सरम्। आरभ्येत्या-रभ्य। दीक्षन्ते। तस्य। न। का। चन। निर्येतिनिः-या। भवति। चतुरहइतिचतुः-अहे। पुरस्तात्। पौर्णमास्याइतिपौर्ण-मास्यै। दीक्षेरन्न्। तेषाम्। एकाष्टकायामित्येक-अष्टकायाम्। क्रयः। समिति। पद्यते। तेन। एकाष्टकामित्यैक-अष्टकाम्। न। छम्बट्। कुर्वन्ति। तेषाम्। [२९] पूर्वपक्षइतिपूर्व-पक्षे। सुत्या। समिति। पद्यते। पूर्वपक्षमितिपूर्व-पक्षम्। मासाः। अभि। समिति। पद्यन्ते। ते। पूर्वपक्षइतिपूर्व-पक्षे। उदिति। तिष्ठन्ति। तान्। उत्तिष्ठतइत्युत्-तिष्ठतः। ओषधयः। वनस्पतयः। अनु। उदिति। तिष्ठन्ति। तान्। कल्याणी। कीर्तिः। अनु। उदिति। तिष्ठति। अराथ्सुः। इमे। यजमानाः। इति। तत्। अन्विति। सर्वे। राध्नुवन्ति ॥ [३०] एतच्छम्बट्कुर्वन्तितेषाञ्चतुस्त्रिँशच्च ॥ ❀ ❀ ॥८॥

सुवर्गमितिसुवः-गम्। वै। एते। लोकम्। यन्ति। ये। सत्रम्। उपयन्तीत्युप-यन्ति। अभीति। इन्धते। एव। दीक्षाभिः। आत्मानम्। श्रपयन्ते। उपसद्भिरित्युपसत्-भिः। द्वाभ्याम्। लोम। अवेति। द्यन्ति। द्वाभ्याम्। त्वचम्। द्वाभ्याम्। असृत्। द्वाभ्याम्। माँसम्। द्वाभ्याम्। अस्थि। द्वाभ्याम्। मज्जानम्। आत्मदक्षिणमित्यात्म-दक्षिणम्। वै। सत्रम्। आत्मानम्। एव। दक्षिणाम्। नीत्वा। सुवर्गमितिसुवः-गम्। लोकम्। यन्ति। शिखाम्। अनु। प्रेति। वपन्ते। ऋध्यै। अथोइति। रघीयाँसः। सुवर्गमितिसुवः-गम्। लोकम्। अयाम। इति ॥ [३१] सुवर्गम्पञ्चाशत् ॥ ❀ ❀ ❀ ❀ ॥९॥

ब्रह्मवादिनइतिब्रह्म-वादिनः। वदन्ति। अतिरात्रइत्यति-रात्रः। परमः। यज्ञक्रतूनामितियज्ञ-क्रतूनाम्। कस्मात्। तम्। प्रथमम्। उपेति। यन्ति। इति। एतत्। वै। अग्निष्टोममित्यग्नि-स्तोमम्। प्रथमम्। उपेति। यन्ति। अथ। उक्थ्यम्। अथ। षोडशिनम्। अथ। अतिरात्रमित्यति-रात्रम्। अनुपूर्वमित्यनु-पूर्वम्। एव। एतत्। यज्ञक्रतूनितियज्ञ-क्रतून्। उपेत्येत्युप-इत्य। तान्। आलभ्येत्या-लभ्य। परिगृह्येतिपरि-गृह्य। सोमम्। एव। एतत्। पिबन्तः। आसते। ज्योतिष्टोममितिज्योतिः-स्तोमम्। प्रथमम्। उपेति। यन्ति। ज्योतिष्टोमइतिज्योतिः-स्तोमः। वै।

स्तोमानाम् । मुखम् । मुखतः । एव । स्तोमान् । प्रेति । युञ्जते । ते । [३२] सꣳस्तुताइतिसं-स्तुताः । विराजमितिवि-राजम् । अभि । समिति । पद्यन्ते । द्वेइति । च । ऋचौ । अतीति । रिच्येतेइति । एकया । गौः । अतिरिक्तइत्यति-रिक्तः । एकया । आयुः । ऊनः । सुवर्गइतिसुवः-गः । वै । लोकः । ज्योतिः । ऊर्क् । विराडितिवि-राट् । सुवर्गमितिसुवः-गम् । एव । तेन । लोकम् । यन्ति । रथन्तरमितिरथं-तरम् । दिवा । भवति । रथन्तरमितिरथं-तरम् । नक्तम् । इति । आहुः । ब्रह्मवादिनइतिब्रह्म-वादिनः । केन । तत् । अजामि । इति । सौभरम् । तृतीयसवनइतितृतीय-सवने । ब्रह्मसाममितिब्रह्म-सामम् । बृहत् । तत् । मध्यतः । दधति । विधृत्याइतिवि-धृत्यै । तेन । अजामि ॥ [३३] तएकान्नपञ्चाशच्च ॥ ❀ ॥१०॥

ज्योतिष्टोममितिज्योतिः-स्तोमम् । प्रथमम् । उपेति । यन्ति । अस्मिन् । एव । तेन । लोके । प्रतीति । तिष्ठन्ति । गोष्टोममितिगो-स्तोमम् । द्वितीयम् । उपेति । यन्ति । अन्तरिक्षे । एव । तेन । प्रतीति । तिष्ठन्ति । आयुष्टोममित्यायुः-स्तोमम् । तृतीयम् । उपेति । यन्ति । अमुष्मिन् । एव । तेन । लोके । प्रतीति । तिष्ठन्ति । इयम् । वाव । ज्योतिः । अन्तरिक्षम् । गौः । असौ । आयुः । यत् । एतान् । स्तोमान् । उपयन्तीत्युप-यन्ति । एषु । एव । तत् । लोकेषु । सत्रिणः । प्रतितिष्ठन्तइतिप्रति-तिष्ठन्तः । यन्ति । ते । सꣳस्तुताइतिसं-स्तुताः । विराजमितिवि-राजम् । [३४] अभि । समिति । पद्यन्ते । द्वेइति । च । ऋचौ । अतीति । रिच्येतेइति । एकया । गौः । अतिरिक्तइत्यति-रिक्तः । एकया । आयुः । ऊनः । सुवर्गइतिसुवः-गः । वै । लोकः । ज्योतिः । ऊर्क् । विराडितिवि-राट् । ऊर्जम् । एव । अवेति । रुन्धते । ते । न । क्षुधा । आर्तिम् । एति । ऋच्छन्ति । अक्षोधुकाः । भवन्ति । क्षुध्सम्बाधाइतिक्षुत्-सम्बाधाः । इव । हि । सत्रिणः । अग्निष्टोमावित्यग्नि-स्तोमौ । अभितः । प्रधीइतिप्र-धी । तौ । उक्थ्याः । मध्ये । नभ्यम् । तत् । तत् । एतत् । परियदितिपरि-यत् । देवचक्रमितिदेव-चक्रम् । यत् । एतेन । [३५] षडहेनेतिषट्-अहेन । यन्ति । देवचक्रमितिदेव-चक्रम् । एव । समारोहन्तीतिसं-आरोहन्ति । अरिष्ट्यै । ते । स्वस्ति । समिति । अश्नुवते । षडहेनेतिषट्-अहे

नं । यन्ति । षट् । वै । ऋतवः । ऋतुषु । एव । प्रतीति । तिष्ठन्ति । उभयतो ज्योतिषेत्युभयतः-ज्योतिषा । यन्ति । उभयतः । एव । सुवर्गइतिसुवः-गे । लोके । प्रतितिष्ठन्तइतिप्रति-तिष्ठन्तः । यन्ति । द्वौ । षडहाविति षट्-अहौ । भवतः । तानि । द्वादश । अहानि । समिति । पद्यन्ते । द्वादशः । वै । पुरुषः । द्वेइति । सक्थ्यौ । द्वौ । बाहूइति । आत्मा । च । शिरः । च । चत्वारि । अङ्गानि । स्तनौ । द्वादशौ । [३६] तत् । पुरुषम् । अन्विति । पर्यावर्तन्तइतिपरि-आवर्तन्ते । त्रयः । षडहाइतिषट्-अहाः । भवन्ति । तानि । अष्टादशेत्यष्टा-दश । अहानि । समिति । पद्यन्ते । नव । अन्यानि । नव । अन्यानि । नव । वै । पुरुषे । प्राणा इतिप्र-अनाः । तत् । प्राणानितिप्र-अनान् । अन्विति । पर्यावर्तन्तइतिपरि-आवर्तन्ते । चत्वारः । षडहाइतिषट्-अहाः । भवन्ति । तानि । चतुर्विंशतिरितिचतुः-विंशतिः । अहानि । समिति । पद्यन्ते । चतुर्विंशतिरितिचतुः-विंशतिः । अर्धमासाइत्यर्ध-मासाः । सँव्वथ्सरइतिसं-वथ्सरः । तत् । सँव्वथ्सरमितिसं-वथ्सरम् । अन्विति । पर्यावर्तन्तइतिपरि-आवर्तन्ते । अप्रतिष्ठितइत्यप्रति-स्थितः । सँव्वथ्सरइतिसं-वथ्सरः । इति । खलु । वै । आहुः । वर्षीयान् । प्रतिष्ठायाइति प्रति-स्थायाः । इति । एतावत् । वै । सँव्वथ्सरस्येतिसं-वथ्सरस्य । ब्राह्मणम् । यावत् । मासः । मासिमासीतिमासि-मासि । एव । प्रतितिष्ठन्तइतिप्रति-तिष्ठन्तः । यन्ति ॥ [३७] विराजमेतेनद्वादशावेतावद्वाअष्टौच ॥ ❀ ❀ ॥ ११ ॥

मेषः । त्वा । पचतैः । अवतु । लोहितग्रीवइतिलोहित-ग्रीवः । छागैः । शल्मलिः । वृध्या । पर्णः । ब्रह्मणा । प्लक्षः । मेधेन । न्यग्रोधः । चमसैः । उदुम्बरः । ऊर्जा । गायत्री । छन्दोभिरितिछन्दः-भिः । त्रिवृदितित्रि-वृत् । स्तोमैः । अवन्तीः । स्थ । अवन्तीः । त्वा । अवन्तु । प्रियम् । त्वा । प्रियाणाम् । वर्षिष्ठम् । आप्यानाम् । निधीनामितिनि-धीनाम् । त्वा । निधिपतिमितिनिधि-पतिम् । हवामहे । वसो इति । मम ॥ [३८] मेषषट्त्रिँशत् ॥ ❀ ❀ ॥ १२ ॥

कूप्याभ्यः । स्वाहा । कूल्याभ्यः । स्वाहा । विकर्याभ्यइतिवि-कर्याभ्यः । स्वाहा । अवट्याभ्यः । स्वाहा । खन्याभ्यः । स्वाहा । ह्रद्याभ्यः । स्वाहा । सूद्या

भ्यः । स्वाहा । सरस्याभ्यः । स्वाहा । वैशन्तीभ्यः । स्वाहा । पल्वल्याभ्यः । स्वाहा । वर्ष्याभ्यः । स्वाहा । अवर्ष्याभ्यः । स्वाहा । ह्रादुनीभ्यइतिह्रादुनि-भ्यः । स्वाहा । पृष्वाभ्यः । स्वाहा । स्यन्दमानाभ्यः । स्वाहा । स्थावराभ्यः । स्वाहा । नादेयीभ्यः । स्वाहा । सैन्धवीभ्यः । स्वाहा । समुद्रियाभ्यः । स्वाहा । सर्वाभ्यः । स्वाहा ॥ [ ३९ ] कूप्याभ्यश्चत्वारिꣳशत् ॥ ❀ ❀ ॥ १३ ॥

अद्भ्यइत्यत्-भ्यः । स्वाहा । वहन्तीभ्यः । स्वाहा । परिवहन्तीभ्यइतिपरि-वहन्तीभ्यः । स्वाहा । समन्तमितिसं-अन्तम् । वहन्तीभ्यः । स्वाहा । शीघ्रम् । वहन्तीभ्यः । स्वाहा । शीभम् । वहन्तीभ्यः । स्वाहा । उग्रम् । वहन्तीभ्यः । स्वाहा । भीमम् । वहन्तीभ्यः । स्वाहा । अम्भोभ्यइत्यम्भः-भ्यः । स्वाहा । नभोभ्यइतिनभः-भ्यः । स्वाहा । महोभ्यइतिमहः-भ्यः । स्वाहा । सर्वस्मै । स्वाहा ॥ [ ४० ] अद्भ्यएकान्नत्रिꣳशत् ॥ ❀ ❀ ❀ ❀ ॥१४॥

यः । अर्वन्तम् । जिघाꣳसति । तम् । अभीति । अमीति । वरुणः ॥ परः । मर्तः । परः । श्वा ॥ अहम् । च । त्वम् । च । वृत्रहन्नितिवृत्र-हन् । समिति । बभूव । सनिभ्यइतिसनि-भ्यः । आ ॥ अरातीवा । चित् । अद्रिवइत्यद्रि-वः । अनु । इति । नौ । शूर । मꣳसतै । भद्राः । इन्द्रस्य । रातयः ॥ अभीति । क्रत्वा । इन्द्र । भूः । अध । ज्मन् । न । ते । विव्यक् । महिमानम् । रजाꣳसि ॥ स्वेन । हि । वृत्रम् । शवसा । जघन्थ । न । शत्रुः । अन्तम् । विविदत् । युधा । ते ॥ [ ४१ ] विविदद्द्वेच ॥ ❀ ❀ ❀ ❀ ॥ १५ ॥

नमः । राज्ञे । नमः । वरुणाय । नमः । अश्वाय । नमः । प्रजापतयइतिप्रजा-पतये । नमः । अधिपतयइत्यधि-पतये । अधिपतिरित्यधि-पतिः । असि । अधिपतिमित्यधि-पतिम् । मा । कुरु । अधिपतिरित्यधि-पतिः । अहम् । प्रजानामितिप्र-जानाम् । भूयासम् । माम् । धेहि । मयि । धेहि । उपाकृतायेत्युप-आकृताय । स्वाहा । आलब्धायेत्या-लब्धाय । स्वाहा । हुताय । स्वाहा ॥ [ ४२ ] नमएकान्नत्रिꣳशत् ॥ ❀ ❀ ❀ ❀ ॥१६॥

मयोभूरितिमयः-भूः । वातः । अभीति । वातु । उस्राः । ऊर्जस्वतीः ।

ओषधीः । एति । रिशन्ताम् ॥ पीवस्वतीः । जीवधन्याइतिजीव-धन्याः । पिबन्तु । अवसाये । पद्वतइतिपत्-वते । रुद्र । मृड ॥ याः । सरूपाइतिस-रूपाः । विरूपाइतिवि-रूपाः । एकरूपाइत्येक-रूपाः । यासाम् । अग्निः । इष्ट्या । नामानि । वेद ॥ याः । अङ्गिरसः । तपसा । इह । चक्रुः । ताभ्यः । पर्जन्य । महि । शर्म । यच्छ ॥ याः । देवेषु । तनुवम् । ऐरयन्त । यासाम् । सोमः । विश्वा । रूपाणि । वेद ॥ ताः । अस्मभ्यमित्यस्म-भ्यम् । पयसा । पिन्वमानाः । प्रजावतीरितिप्रजा-वतीः । इन्द्र । [४३] गोष्ठइतिगो-स्थे । रिरीहि ॥ प्रजापतिरितिप्रजा-पतिः । मह्यम् । एताः । रराणः । विश्वैः । देवैः । पितृभिरितिपितृ-भिः । सविदानइतिसं-विदानः ॥ शिवाः । सतीः । उपेति । नः । गोष्ठमितिगो-स्थम् । एति । अकः । तासाम् । वयम् । प्रजयेतिप्र-जया । समिति । सदेम ॥ इह । धृतिः । स्वाहा । इह । विधृतिरितिवि-धृतिः । स्वाहा । इह । रन्तिः । स्वाहा । इह । रमतिः । स्वाहा । महीम् । उ । स्विति । सुत्रामाणमितिसु-त्रामाणम् ॥ [४४] इन्द्राष्टात्रिꣳशच्च ॥ ❀ ॥१७॥

किम् । स्वित् । आसीत् । पूर्वचित्तिरितिपूर्व-चित्तिः । किम् । स्वित् । आसीत् । बृहत् । वयः ॥ किम् । स्वित् । आसीत् । पिशङ्गिला । किम् । स्वित् । आसीत् । पिलिप्पिला ॥ द्यौः । आसीत् । पूर्वचित्तिरितिपूर्व-चित्तिः । अश्वः । आसीत् । बृहत् । वयः ॥ रात्रिः । आसीत् । पिशङ्गिला । अविः । आसीत् । पिलिप्पिला ॥ कः । स्वित् । एकाकी । चरति । कः । उ । स्वित् । जायते । पुनः ॥ किम् । स्वित् । हिमस्य । भेषजम् । किम् । स्वित् । आवपनमित्या-वपनम् । महत् ॥ सूर्यः । एकाकी । चरति । [४५] चन्द्रमाः । जायते । पुनः ॥ अग्निः । हिमस्य । भेषजम् । भूमिः । आवपनमित्या-वपनम् । महत् ॥ पृच्छामि । त्वा । परम् । अन्तम् । पृथिव्याः । पृच्छामि । त्वा । भुवनस्य । नाभिम् ॥ पृच्छामि । त्वा । वृष्णः । अश्वस्य । रेतः । पृच्छामि । वाचः । परमम् । व्योमेतिवि-ओम ॥ वेदिम् । आहुः । परम् । अन्तम् । पृथिव्याः । यज्ञम् । आहुः । भुवनस्य । नाभिम् ॥ सोमम् । आहुः । वृष्णः । अश्वस्य । रेतः । ब्रह्म । एव । वाचः । परमम् । व्योमेतिवि-ओम ॥ [४६] सूर्यएकाकीचरतिषट् चत्वारिꣳशच्च ॥

अम्बे । अम्बालि । अम्बिके । न । मा । नयति । कः । चन ॥ ससस्ति । अश्वकः ॥ सुभगइतिसु-भगे । काम्पीलवासिनीतिकाम्पील-वासिनि । सुवर्गइतिसुवः-गे । लोके । सम् । प्रेति । ऊर्ण्वाथाम् ॥ एति । अहम् । अजानि । गर्भधमितिगर्भ-धम् । एति । त्वम् । अजासि । गर्भधमितिगर्भ-धम् ॥ तौ । सह । चतुरः । पदः । सम् । प्रेति । सारयावहै ॥ वृषा । वाम् । रेतोधाइतिरेतः-धाः । रेतः । दधातु । उदिति । सक्थ्योः । गृदम् । धेहि । अञ्जिम् । उदञ्जिमित्युत्-अञ्जिम् । अन्विति । अज ॥ यः । स्त्रीणाम् । जीवभोजनइतिजीव-भोजनः । यः । आसाम् । [४७] बिलधावनइतिबिल-धावनः ॥ प्रियः । स्त्रीणाम् । अपीच्यः ॥ यः । आसाम् । कृष्णे । लक्ष्मणि । सर्दिगृदिम् । पराववधीदितिपरा-अववधीत् ॥ अम्बे । अम्बालि । अम्बिके । न । मा । यभति । कः । चन ॥ ससस्ति । अश्वकः ॥ ऊर्ध्वाम् । एनाम् । उदिति । श्रयतात् । वेणुभारमितिवेणु-भारम् । गिरौ । इव ॥ अथ । अस्याः । मध्यम् । एधताम् । शीते । वाते । पुनन् । इव ॥ अम्बे । अम्बालि । अम्बिके । न । मा । यभति । कः । चन ॥ ससस्ति । अश्वकः ॥ यत् । हरिणी । यवम् । अत्ति । न । [४८] पुष्टम् । पशु । मन्यते ॥ शूद्रा । यत् । अर्यजारेत्यर्य-जारा । न । पोषाय । धनायति ॥ अम्बे । अम्बालि । अम्बिके । न । मा । यभति । कः । चन ॥ ससस्ति । अश्वकः ॥ इयम् । यका । शकुन्तिका । आहलमित्या-हलम् । इति । सर्पति ॥ आहतमित्या-हतम् । गभे । पसः । नीति । जल्गुलीति । धाणिका ॥ अम्बे । अम्बालि । अम्बिके । न । मा । यभति । कः । चन ॥ ससस्ति । अश्वकः ॥ माता । च । ते । पिता । च । ते । अग्रम् । वृक्षस्य । रोहतः ॥ [४९] प्रेति । सुलामि । इति । ते । पिता । गभे । मुष्टिम् । अतंसयत् ॥ दधिक्राव्णइतिदधि-क्राव्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः ॥ सुरभि । नः । मुखा । करत् । प्रेति । नः । आयूंषि । तारिषत् ॥ आपः । हि । स्थ । मयोभुवइतिमयः-भुवः । ताः । नः । ऊर्जे । दधातन ॥ महे । रणाय । चक्षसे ॥ यः । वः । शिवतमइतिशिव-तमः । रसः । तस्य । भाजयत । इह । नः ॥ उशतीः । इव । मातरः ॥ तस्मै । अरम् । गमाम । वः । यस्य । क्षयाय । जिन्व

थ ॥ आपः । जनयथ । च । नः ॥ [५०] आसामत्तिनसंहतोजिन्वथचत्वारिंच ॥

भूः । भुवः । सुवः । वसवः । त्वा । अञ्जन्तु । गायत्रेण । छन्दसा । रुद्राः । त्वा । अञ्जन्तु । त्रैष्टुभेन । छन्दसा । आदित्याः । त्वा । अञ्जन्तु । जागतेन । छन्दसा । यत् । वातः । अपः । अगमत् । इन्द्रस्य । तनुवम् । प्रियाम् ॥ एतम् । स्तोतः । एतेन । पथा । पुनः । अश्वम् । एति । वर्तयासि । नः ॥ लाजी (३) न् । शाची (३) न् । यशः । ममाँ (४) ॥ यव्यायै । गव्यायै । एतत् । देवाः । अन्नम् । अत्त । एतत् । अन्नम् । अद्धि । प्रजापतइतिप्रजा-पते ॥ युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परीति । तस्थुषः ॥ रोचन्ते । रोचना । दिवि ॥ युञ्जन्ति । अस्य । काम्या । हरीइति । विपक्षसेतिवि-पक्षसा । रथे ॥ शोणा । धृष्णूइति । नृवाहसेतिनृ-वाहसा ॥ केतुम् । कृण्वन्न् । अकेतवे । पेशः । मर्याः । अपेशसे ॥ समिति । उषद्भिरित्युषत्-भिः । अजायथाः ॥ [५१] ब्रध्नम्पञ्चविꣳशतिश्च ॥ ❀ ❀ ❀ ❀ ❀ ॥२०॥

प्राणायेतिप्र-अनाय । स्वाहा । व्यानायेतिवि-अनाय । स्वाहा । अपानायेत्यप-अनाय । स्वाहा । स्रावभ्यइतिस्राव-भ्यः । स्वाहा । सन्तानेभ्यइतिसं-तानेभ्यः । स्वाहा । परिसन्तानेभ्यइतिपरि-सन्तानेभ्यः । स्वाहा । पर्वभ्यइतिपर्व-भ्यः । स्वाहा । सन्धानेभ्यइतिसं-धानेभ्यः । स्वाहा । शरीरेभ्यः । स्वाहा । यज्ञाय । स्वाहा । दक्षिणाभ्यः । स्वाहा । सुवर्गायेतिसुवः-गाय । स्वाहा । लोकाय । स्वाहा । सर्वस्मै । स्वाहा ॥ [५२] प्राणायाष्टाविꣳशतिः ॥ ❀ ॥२१॥

सिताय । स्वाहा । असिताय । स्वाहा । अभिहितायेत्यभि-हिताय । स्वाहा । अनभिहितायेत्यनभि-हिताय । स्वाहा । युक्ताय । स्वाहा । अयुक्ताय । स्वाहा । सुयुक्तायेतिसु-युक्ताय । स्वाहा । उद्युक्तायेत्युत्-युक्ताय । स्वाहा । विमुक्तायेतिवि-मुक्ताय । स्वाहा । प्रमुक्तायेतिप्र-मुक्ताय । स्वाहा । वञ्चते । स्वाहा । परिवञ्चतइतिपरि-वञ्चते । स्वाहा । सँवञ्चतइतिसं-वञ्चते । स्वाहा । अनुवञ्चतइत्यनु-वञ्चते । स्वाहा । उद्वञ्चतइत्युत्-वञ्चते । स्वाहा । यते । स्वाहा । धावते । स्वाहा । तिष्ठते । स्वाहा । सर्वस्मै । स्वाहा ॥ [५३] सितायाष्टात्रिꣳशत् ॥ ❀ ॥२२॥

बृहस्पतिश्श्रद्धयथावा ऋध्नुवावै प्रजापतिर्येनन्येन द्वेवावदेवसत्रे आदित्यावसिं
ष्ठस्सव्वँथ्सरायसुवर्गय्येसत्रम्ब्रह्मवादिनो ज्योतिष्टोमम्मेषः कूप्याभ्योऽद्भ्यो यो नमो
मयोभूः किंस्विदम्बेभूः प्राणाय सितायद्वाविंशतिः ॥ २२ ॥ बृहस्पतिः प्रतितिष्ठ
न्ति वै दशरात्रेणं सुवर्गय्यो अवैन्तम्भूस्त्रिपञ्चाशत् ॥ [ ५३ ] बृहस्पतिस्सर्वस्मै
स्वाहा ॥ ❀ ❀ ❀ ❀ ❀ ❀ ❀

हरिः ओ (३) म् ॥

इति सप्तमकाण्डे चतुर्थः प्रश्नः ॥

## सप्तमकाण्डे पञ्चमः प्रश्नः ॥

हरिः ओ ( ४ ) म् ॥

गावः । वै । एतत् । सत्रम् । आसत । अश्रृङ्गाः । सतीः । शृङ्गाणि । नः । जायन्तै । इति । कामेन । तासाम् । दश । मासाः । निषण्णाइतिनि-सन्नाः । आसन् । अथ । शृङ्गाणि । अजायन्त । ताः । उदिति । अतिष्ठन् । अराथ्स्म । इति । अथ । यासाम् । न । अजायन्त । ताः । सव्वँथ्सरमितिसं-वथ्सरम् । आप्त्वा । उदिति । अतिष्ठन् । अराथ्स्म । इति । यासाम् । च । अजायन्त । यासाम् । च । न । ताः । उभयीः । उदिति । अतिष्ठन् । अराथ्स्म । इति । गोसत्रमितिगो-सत्रम् । वै । [ १ ] सव्वँथ्सरइतिसं-वथ्सरः । ये । एवम् । विद्वांसः । सव्वँथ्सरमितिसं-वथ्सरम् । उपयन्तीत्युप-यन्ति । ऋध्नुवन्ति । एव । तस्मात् । तूपरा । वार्षिकौ । मासौ । पत्वी । चरति । सत्राभिजितमितिसत्र-अभिजितम् । हि । अस्यै । तस्मात् । सव्वँथ्सरसदइतिसव्वँथ्सर-सदः । यत् । किम् । च । गृहे । क्रियते । तत् । आप्तम् । अवरुद्धमित्यव-रुद्धम् । अभिजितमित्यभि-जितम् । क्रियते । समुद्रम् । वै । एते । प्रेति । प्लवन्ते । ये । सव्वँथ्सरमितिसं-वथ्सरम् । उपयन्तीत्युप-यन्ति । यः । वै । समुद्रस्य । पारम् । न । पश्यति । न । वै । सः । ततः । उदिति । एति । सव्वँथ्सरइतिसं-वथ्सरः । [२] वै । समुद्रः । तस्य । एतत् ।

पारम् । यत् । अतिरात्रावित्यति-रात्रौ । ये । एवम् । विद्वाꣳसः । सꣳवथ्सरमिति संवथ्सरम् । उपयन्तीत्युप-यन्ति । अनार्ताः । एव । उदृचमित्युत्-ऋचम् । गच्छन्ति । इयम् । वै । पूर्वः । अतिरात्रइत्यति-रात्रः । असौ । उत्तरइत्युत्-तरः । मनः । पूर्वः । वाक् । उत्तरइत्युत्-तरः । प्राणइतिप्र-अनः । पूर्वः । अपानइत्यप-अनः । उत्तरइत्युत्-तरः । प्ररोधनमितिप्र-रोधनम् । पूर्वः । उदयनमित्युत्-अयनम् । उत्तरइत्युत्-तरः । ज्योतिष्टोमइतिज्योतिः-स्तोमः । वैश्वानरः । अतिरात्रइत्यति-रात्रः । भवति । ज्योतिः । एव । पुरस्तात् । दधते । सुवर्गस्येतिसुवः-गस्य । लोकस्य । अनुख्यात्याइत्यनु-ख्यात्यै । चतुर्विꣳशइतिचतुः-विꣳशः । प्रायणीयइतिप्र-अयनीयः । भवति । चतुर्विꣳशतिरितिचतुः-विꣳशतिः । अर्धमासाइत्यर्ध-मासाः । [३] सꣳवथ्सरइतिसं-वथ्सरः । प्रयन्तइतिप्र-यन्तः । एव । सꣳवथ्सरइतिसं-वथ्सरे । प्रतीति । तिष्ठन्ति । तस्य । त्रीणि । च । शतानि । षष्टिः । च । स्तोत्रीयाः । तावतीः । सꣳवथ्सरस्येतिसं-वथ्सरस्य । रात्रयः । उभेइति । एव । सꣳवथ्सरस्येतिसं-वथ्सरस्य । रूपेइति । आप्नुवन्ति । ते । सꣳस्थित्याइतिसं-स्थित्यै । अरिष्ट्यै । उत्तरैरित्युत्-तरैः । अहोभिरित्यहः-भिः । चरन्ति । षडहाइतिषट्-अहाः । भवन्ति । षट् । वै । ऋतवः । सꣳवथ्सरइतिसं-वथ्सरः । ऋतुषु । एव । सꣳवथ्सरइतिसं-वथ्सरे । प्रतीति । तिष्ठन्ति । गौः । च । आयुः । च । मध्यतः । स्तोमौ । भवतः । सꣳवथ्सरस्येतिसं-वथ्सरस्य । एव । तत् । मिथुनम् । मध्यतः । [४] दधति । प्रजननायेति प्र-जननाय । ज्योतिः । अभितः । भवति । विमोचनमितिवि-मोचनम् । एव । तत् । छन्दाꣳसि । एव । तत् । विमोकमितिवि-मोकम् । यन्ति । अथोइति । उभयतोज्योतिषेत्युभयतः-ज्योतिषा । एव । षडहेनेतिषट्-अहेन । सुवर्गमितिसुवः-गम् । लोकम् । यन्ति । ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । आसते । केन । यन्ति । इति । देवयानेनेतिदेव-यानेन । पथा । इति । ब्रूयात् । छन्दाꣳसि । वै । देवयानइतिदेव-यानः । पन्थाः । गायत्री । त्रिष्टुप् । जगती । ज्योतिः । वै । गायत्री । गौः । त्रिष्टुक् । आयुः । जगती । यत् । एते । स्तोमाः । भवन्ति । देवयानेनेतिदेव-यानेन । एव । [५] तत् । पथा । यन्ति । समा

नम् । साम । भवति । देवलोकइतिदेव-लोकः । वै । साम । देवलोकादितिदेव-लोकात् । एव । न । यन्ति । अन्याअन्याइत्यन्याः-अन्याः । ऋचः । भवन्ति । मनुष्यलोकइतिमनुष्य-लोकः । वै । ऋचः । मनुष्यलोकादितिमनुष्य-लोकात् । एव । अन्यमन्यमित्यन्यं-अन्यम् । देवलोकमितिदेव-लोकम् । अभ्यारोहन्तइत्यभि-आरोहन्तः । यन्ति । अभिवर्तइत्यभि-वर्तः । ब्रह्मसाममितिब्रह्म-सामम् । भवति । सुवर्गस्येतिसुवः-गस्य । लोकस्य । अभिवृत्याइत्यभि-वृत्यै । अभिजिदित्यभि-जित् । भवति । सुवर्गस्येतिसुवः-गस्य । लोकस्य । अभिजित्याइत्यभि-जित्यै । विश्वजिदितिविश्व-जित् । भवति । विश्वस्य । जित्यै । मासिमासीतिमासि-मासि । पृष्ठानि । उपेति । यन्ति । मासिमासीतिमासि-मासि । अतिग्राह्याइत्यति-ग्राह्याः । गृह्यन्ते । मासिमासीतिमासि-मासि । एव । वीर्यम् । दधति । मासाम् । प्रतिष्ठित्याइतिप्रति-स्थित्यै । उपरिष्टात् । मासाम् । पृष्ठानि । उपेति । यन्ति । तस्मात् । उपरिष्टात् । ओषधयः । फलम् । गृह्णन्ति ॥ [६] गोसत्रँवाएतिसँव्वथ्सरोऽर्धमासामिथुनम्मध्यतो देवयानैन्नैववीर्यन्त्रयोदशच ॥ ❀ ❀ ❀ ॥१॥

गावः । वै । एतत् । सत्रम् । आसत । अशृङ्गाः । सतीः । शृङ्गाणि । सिषासन्तीः । तासाम् । दश । मासाः । निषण्णाइतिनि-सन्नाः । आसन् । अथ । शृङ्गाणि । अजायन्त । ताः । अब्रुवन् । अराथ्स्म । उदिति । तिष्ठाम । अवेति । तम् । कामम् । अरुथ्स्महि । येन । कामेन । न्यषदामेतिनि-असदाम । इति । तासाम् । उ । तु । वै । अब्रुवन् । अर्धाः । वा । यावतीः । वा । आसामहे । एव । इमौ । द्वादशौ । मासौ । सँव्वथ्सरमितिसं-वथ्सरम् । सम्पाद्येतिसं-पाद्य । उदिति । तिष्ठाम । इति । तासाम् । [७] द्वादशे । मासि । शृङ्गाणि । प्रेति । अवर्तन्त । श्रद्धयेतिश्रत्-धया । वा । अश्रद्धयेत्यश्रत्-धया । वा । ताः । इमाः । याः । तूपराः । उभय्यः । वाव । ताः । आर्ध्नुवन् । याः । च । शृङ्गाणि । असन्वन् । याः । च । ऊर्जम् । अवारुन्धतेत्यव-अरुन्धत । ऋध्नोति । दशस्वितिदश-सु । मासु । उत्तिष्ठन्नित्युत्-तिष्ठन् । ऋध्नोति । द्वादशस्वितिद्वादश-सु । यः । एवम् । वेद । पदेन । खलु । वै । एते । यन्ति । विन्दति । खलु । वै । पदेन । यन् । तत् । वै ।

एतत् । ऋद्धम् । अयनम् । तस्मात् । एतत् । गोसनीतिगो-सनि ॥ [८] तिष्ठा मेतितासान्तस्माद्वैचं ॥ ❀ ❀ ❀ ❀ ॥ २ ॥

प्रथमे । मासि । पृष्ठानि । उपेति । यन्ति । मध्यमे । उपेति । यन्ति । उत्त मइत्युत्-तमे । उपेति । यन्ति । तत् । आहुः । याम् । वै । त्रिः । एकस्य । अह्नः । उपसीदन्तीत्युप-सीदन्ति । दह्नम् । वै । सा । अपराभ्याम् । दोहाभ्याम् । दुहे । अथ । कुतः । सा । धोक्ष्यते । याम् । द्वादश । कृत्वः । उपसीदन्तीत्युप-सीदन्ति । इति । सँवथ्सरमितिसं-वथ्सरम् । सम्पाद्येतिसं-पाद्य । उत्तमइत्युत्-तमे । मासि । सकृत् । पृष्ठानि । उपेति । इयुः । तत् । यजमानाः । यज्ञम् । पशून् । अवेति । रुन्धते । समुद्रम् । वै । [९] एते । अनवारम् । अपारम् । प्रेति । प्लवन्ते । ये । सँवथ्सरमितिसं-वथ्सरम् । उपयन्तीत्युप-यन्ति । यत् । बृहद्रथन्तरेइतिबृहत्-रथन्तरे । अन्वजैयुरित्यनु-अजैयुः । यथा । मध्ये । समुद्रस्य । प्लवम् । अन्वजैयुरित्यनु-अजैयुः । तादृक् । तत् । अनुथ्सर्गमित्यनुत्-सर्गम् । बृहद्रथन्तराभ्यामितिबृहत्-रथन्तराभ्याम् । इत्वा । प्रतिष्ठामितिप्रति-स्थाम् । गच्छन्ति । सर्वेभ्यः । वै । कामेभ्यः । सन्धिरितिसं-धिः । दुहे । तत् । यजमानाः । सर्वान् । कामान् । अवेति । रुन्धते ॥ [१०] समुद्रंवैचतुस्त्रिँ॒शच्च ॥ ❀ ❀ ❀ ॥ ३ ॥

समान्यः । ऋचः । भवन्ति । मनुष्यलोकइतिमनुष्य-लोकः । वै । ऋचः । मनुष्यलोकादितिमनुष्य-लोकात् । एव । न । यन्ति । अन्यदन्यदित्यन्यत्-अन्यत् । साम । भवति । देवलोकइतिदेव-लोकः । वै । साम । देवलोकादितिदेव-लोकात् । एव । अन्यमन्यमित्यन्यं-अन्यम् । मनुष्यलोकमितिमनुष्य-लोकम् । प्रत्यवरोहन्तइतिप्रति-अवरोहन्तः । यन्ति । जगतीम् । अग्रे । उपेति । यन्ति । जगतीम् । वै । छन्दाँ॒सि । प्रत्यवरोहन्तीतिप्रति-अवरोहन्ति । आग्रयणम् । ग्रहाः । बृहत् । पृष्ठानि । त्रयस्त्रिँ॒शमितित्रयः त्रिँ॒शम् । स्तोमाः । तस्मात् । ज्यायाँ॒सम् । कनीयान् । प्रत्यवरोहतीतिप्रति-अवरोहति । वैश्वकर्मणइतिवैश्व-कर्मणः । गृह्यते । विश्वानि । एव । तेन । कर्माणि । यजमानाः । अवेति । रुन्धते । आदित्यः । [११] गृह्यते । इयम् । वै । अदितिः । अस्याम् । एव । प्रतीति । तिष्ठन्ति । अन्योन्यइत्यन्यः-अ

